अर्धयामे विशेषेण द्विगुणं चैव होमयेत्।
तत्तद्देवं तु संपूज्य तत्तत्कुम्भाभिषेचनम्॥
दिशाशान्तिक्रमः प्रोक्तः' इति।

अत्र शिवाग्रे गोमयलेपनं कृत्वा शालिभिः स्थण्डिलं विधायाष्टदलपद्मं विलिख्य चतुर्दिक्षु कुम्भस्थापनं कर्तव्यम्। तत्र पूर्वकुम्भे पूर्वदेवम् (इन्द्रं), दक्षिणे दक्षिणामूर्तिं पश्चिमे लिङ्गोद्भवमुत्तरे दुर्गां च कुम्भाधिदेवतात्वेनावाह्य विधिवत्पूजयेदित्युच्यते। होमविषये पूर्वेऽश्वत्थसमित्, दक्षिणे वञ्जुलाख्यसमित् पश्चिमेऽपामार्गसमित्, उत्तरे मायूरसमिच्च होम्यत्वेन निर्दिश्यन्ते। तथा पूर्वे गोधूमः, दक्षिणे पञ्चगव्यं, पश्चिमे दधि, उत्तरे घृतं च होमद्रव्यत्वेन विहितानि। उक्तद्रव्याभावे सर्वत्राश्वत्थसमिधः, पञ्चगव्यं च होमद्रव्याणि भवेयुरित्युच्यते। ततः प्रतिद्रव्यं षोडशाहुतयो होम्या इत्युक्त्वा पश्चाद्यामानुसारेण विशिष्य कर्तव्या आहुतिसंख्याविशेषाश्च प्रदर्श्यन्ते। अन्ते तत्तत्कुम्भैस्तत्तद्देवानामभिषेचनं विधेयमित्युच्यते। एवं चात्र प्रदर्शितो दिशाहोमविधिः प्रायश्चित्तविधिप्रोक्तदिशाहोमविधेर्नितरां विजातीय इत्यवगन्तुं शक्यते। यतोऽत्र चतुर्दिक्षु कुम्भस्थापनं, तत्रेन्द्रादिचतुर्देवानां पूजनं, होमानन्तरं तत्तद्देवानां तत्तत्कुम्भाभिषेकश्च कर्तव्यत्वेन विधीयन्ते। होमद्रव्याणि च संख्यया नामतश्च विजातीयानि वर्तन्ते। एवं दिशाहोमविषये प्रायश्चित्तविधौ ४४ तमे पटले टिप्पण्यां प्रदर्शिताः पूर्वकारणवीरागमश्लोकाश्च वैजात्यावगमाय द्रष्टव्याः।

चतुश्चत्वारिंशपटले प्रायश्चित्तविधौ मूर्तिहोमविधिर्दृश्यते। यथा —

'शिवालये चतुर्दिक्षु चान्यतस्त्वविशेषतः।
कुण्डं वेदाश्रकं कृत्वा शोधनादींश्च कारयेत्॥
अग्न्याधानादिकं कुर्यादग्निकार्योक्तमार्गतः।
समिदाज्यचरुक्षीरं दधिमधुतिलं तथा॥
सर्षपं लाजसक्तू च यवश्चैकादश स्मृताः।
हृदादीशानमन्त्रैस्तु प्रत्येकं तु शताहुतिः॥
स्विष्टमग्नेति मन्त्रेण पूर्णाहुतिमथाचरेत्।
मूर्तिहोम इति ख्यातः सर्वदोषनिवारकः॥' इति।

(**रौरवे** ४४.३४ उ०–३८ पू०)

अत्र शिवालये चतुर्दिक्षु चतुरश्रकुण्डं कृत्वा कुण्डसंस्कारादीन्विधायाग्निकार्योक्तमार्गेण शिवाग्निं संपाद्य तत्र समिदाज्यचरुक्षीरदधिमधुतिलसर्षपलाजसक्तुयवाख्यैरेकादशद्रव्यैः प्रत्येकं शताहुतीर्जुहुयादित्युच्यते। एकादशद्रव्यानुसारेण पञ्चब्रह्मषडङ्गमन्त्रैर्होमयेदिति एकादशमन्त्राश्च निर्दिश्यन्ते। स्विष्टमग्नेति मन्त्रेण पूर्णाहुतिः कर्तव्येति होमकरणप्रकारः संक्षेपेण प्रतिपाद्यते। अन्ते चायं मूर्तिहोमः सर्वदोषनिवारक इति फलं च निरूप्यते। एवं प्रायश्चित्तविधौ प्रतिपादितमूर्तिहोमप्रकारो निरूपितः।

प्रकृतपटले (४१–४७ पू०) श्लोकेषु मूर्तिहोमोऽभिधीयते। यथा —

'दिनशान्तावथो वक्ष्ये मूर्तिं सद्यः समाचरेत्।
शिवाग्रे स्थण्डिलं कल्प्य नवकोष्ठं प्रकल्पयेत्॥
तन्मध्ये कुम्भान्संस्थाप्य सूत्रवस्त्रादिसंयुतम्।
देवताभिमुखं कृत्वा नालिकेरं तु विन्यसेत्॥
ईशानमन्त्रं संपूज्य भवादींस्तु विशेषतः॥
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्।
पलाशसमिधा युक्तं सद्येनैव तु होमयेत्॥

आज्येनैव तु संयुक्तं वामदेवेन होमयेत् ॥
पञ्चगव्येन संयुक्तं शिवास्त्रेणैव होमयेत् ॥
प्रत्येकं षोडशं हुत्वा यामान्ते द्विगुणं चरेत् ।
ततः परं विशेषेण अष्टोत्तरशताहुतिः ।
शिवसंकल्पसंयुक्तमावश्यं तु जपेद्बुधः ॥
उषः प्रातश्च मध्याह्ने सायाह्ने चार्धयामके ।' इति ।

अत्र दिनशान्तिविषये मूर्तिहोमं सद्यः समाचरेदिति मूर्तिहोमस्य निमित्तं सूच्यते। शिवाग्रे स्थण्डिलं विधिवत्कृत्वा तत्र नवकोष्ठं प्रकल्पयेत्। तत्र सूत्रवस्त्राद्यलंकृतान् देवताभिमुख्येन नवकुम्भान्संस्थाप्य प्रधानकुम्भे ईशानमन्त्रं परिवारघटेष्वष्टसु भवाद्यष्टमूर्तिमन्त्रांश्च विधिवत्संपूजयेदिति नवकुम्भपूजाभिधीयते। ततोऽग्निकार्योक्तप्रकारेण शिवाग्निं संपाद्य तत्र सद्योजातमन्त्रेण पलाशसमिधं, वामदेवमन्त्रेणाज्यं, शिवास्त्रमन्त्रेण पञ्चगव्यं होमयेत्। प्रतिद्रव्यं षोडशाहुतीर्जुहुयादिति होमविधिः प्रतिपाद्यते। ततो यामान्ते होमं द्विगुणं कुर्यात्तत्र विशेषेणाष्टोत्तरशताहुतीः कुर्यादिति विशेषेण होमाहुतिसंख्या च प्रदर्श्यते। तत उषःकाले प्रातर्मध्याह्ने सायंकालेऽर्धयामे च कर्तव्यः शिवसंकल्पोपनिषदादिजपविधिश्च प्रतिपाद्यते। एवं चात्र प्रतिपाद्यमानो मूर्तिहोमविधिः प्रायश्चित्तविध्युक्तमूर्तिहोमान्नितरां विजातीय इति स्पष्टं भवति। यतोऽत्र कुम्भपूजाविधिः शिवसंकल्पोपनिषदादिमन्त्रजपविधिश्च दृश्यते। होमविषये चोभयोर्मन्त्रभेदो द्रव्यभेदश्च दृश्यते। एवं मूर्तिहोमविषये साजात्यवैजात्यावगमाय प्रायश्चित्तविधौ टिप्पण्यां प्रदर्शिता योगजागमवीरागमश्लोकाश्च द्रष्टव्याः। प्रकृतपटले टिप्पण्यां निर्दिष्टा उत्तरकारणागमीयमूर्तिहोमश्लोकाश्च द्रष्टव्याः। एवं च प्रकृतपटलप्रोक्तशान्तिहोमदिशाहोममूर्तिहोमविधयः, प्रायश्चित्तपटलप्रोक्तशान्तिहोमदिशाहोममूर्तिहोमविधिभ्यो नितरां व्यत्यस्ता इति स्पष्टम्।

रौरवे सप्तविंशे पटले बाललिङ्गस्थापनविधौ वास्तुहोमविधिः प्रसङ्गात्कथ्यते। यथा —

'प्रासादाभ्यन्तरे पूर्वे वास्तुहोमं समाचरेत् ।
स्थण्डिलं पांसुभिः कुर्याद्धस्तमात्रप्रमाणतः ॥
संप्रोक्ष्य व्योमव्याप्याग्निं हृदयेनैव निक्षिपेत् ।
समिधो हृदयेनैवाप्याज्यं वै शिरसा विदुः ॥
चरुं वै शिखया हुत्वा प्रत्येकं तु शताहुतिः ।
ततो ब्रह्मादिदेवानां पापराक्षसिकान्तकम् ॥
पूजयेद्गन्धपुष्पाद्यैः स्वस्वनाम्नैव मन्त्रतः ।
स्वस्वनाम्नैव मन्त्रेण प्रति सप्ताहुतिं चरेत् ॥
ततः पूर्णाहुतिं कुर्यात्पर्यग्निकरणं ततः ।' इति ।

(**रौरवे** २७.२९ उ०–३३)

अत्र प्रासादमध्ये पूर्वे वा वास्तुहोमं कुर्यादिति वास्तुहोमकरणस्थानं निर्दिश्यते। हस्तप्रमाणेन पांसुभिः स्थण्डिलं कृत्वा व्योमव्यापिमन्त्रेण संप्रोक्ष्य हृदयमन्त्रेण तत्राग्निं निक्षिपेदित्यग्निसंपादनप्रकारः सूच्यते। ततो हृदयमन्त्रेण समिधः, शिरोमन्त्रेणाज्यं, शिखामन्त्रेण चरुं च प्रत्येकं शताहुतीर्जुहुयादिति होमविधिर्वर्ण्यते। ब्रह्मादिपापराक्षस्यन्तानां त्रिपञ्चाशद्वास्तुदेवानां गन्धपुष्पाद्यैः स्वस्वनाममन्त्रैः पूजनं कर्तव्यम्। पूर्वोक्तवास्तुदेवानुद्दिश्य स्वस्वनाम्ना प्रत्येकं सप्ताहुतीर्जुहुयात्। ततः पूर्णाहुतिं कृत्वा पर्यग्निकरणं कुर्यादिति संक्षेपतो वास्तुहोमः प्रतिपाद्यते।

प्रकृतपटले वास्तुहोमविधिः ११–२२ श्लोकेषु प्रतिपाद्यते। यथा —

'शुद्धान्नं सर्वदेवानां बलिं दद्याद्विशेषतः ।
अथ वास्तुबलि देवानाहुतीश्च शृणु क्रमात् ॥
ब्रह्माणं मध्यमे पूज्य दशाहुतिमथाचरेत् ।
समर्यादींश्चतुर्दिक्षु भवेत्पूर्ववदाहुतिः ॥
आपाद्यष्टकमूर्तीनामष्ट अष्टाहुतीर्हुनेत् ।
ईशाद्द्वात्रिंशदेवानां पञ्च पञ्चाहुतीर्हुनेत् ॥
चरक्याद्यष्टमूर्तीनामेकाहुतिमथाचरेत् ।
मण्डूकस्य पदं लिख्य तिलैर्लाजैश्च शोभितम् ॥
कोष्ठं प्रति न्यसेद्दर्भत्रयं तस्य प्रमाणतः ।
प्रमाणं चैव कोष्ठानां प्रत्येकं चतुरङ्गुलम् ॥
ब्रह्माणं मध्यमे पूर्वं पूजयेद्देशिकोत्तमः ।
पाद्यमाचमनं चार्घ्यं गन्धपुष्पसुधूपकैः ॥
दीपैश्च परमान्नं तु चरुं तस्य निवेदयेत् ।
समर्यपिशचरकीस्कन्दादींश्च तथैव च ॥
ब्रह्मपञ्चावृतान्येवमर्चयेत्तु यथाक्रमम् ।
वास्तुकुम्भं तथैशान्ये विधिवत्स्थापयेत्सुधीः ।
वास्तुब्रह्मादिदेवादीन्कुम्भमध्ये समर्चयेत् ॥
द्रव्यं प्रति विशेषेण वास्तुमन्त्रेण होमयेत् ।
अथवा द्रव्यहीने तु गव्यदूर्वाचरून्हुनेत् ॥
तत्काले शान्तिशुद्धयर्थं मण्डूकपदमुत्तमम् ॥
अश्वत्थपत्रसंयुक्तं शुष्कदर्भेण संयुतम् ।
तिलं सिक्तं तु बद्धाज्ये बाहुमात्रप्रमाणकम् ॥
पर्यग्निकरणं कृत्वा गर्भगेहादिमण्डपे ।
सर्वत्र सेचयेद्गव्यं घण्टाघोषसमन्वितम् ॥' इति ।

(**रौरवे** ५३.११–२२)

अत्रादौ सर्वेभ्यो वास्तुदेवेभ्यः शुद्धान्नं बलिं दद्यादिति बलिविधिः सूच्यते । ततो होमविषये ब्रह्मणे दशाहुतीर्जुहुयात् । तथैव समर्यादिभ्यश्चतुर्भ्योऽपि दशाहुतीर्होमयेत् । आपाद्यष्टदेवेभ्यः प्रत्येकमष्टाहुतीर्जुहुयात् । तथेशानादिद्वात्रिंशद्देवेभ्यः प्रत्येकं पञ्चाहुतीर्होमयेत् । ततश्चरक्याद्यष्टदेवताभ्यः प्रत्येकमेकाहुतिः कर्तव्येत्याहुतिसंख्या निरूप्यते । ततो मण्डूकाख्यं वास्तुपदं विलिख्य तत्र वास्तुदेवताभ्यः पूजाविधिः कुम्भस्थापनपुरःसरं प्रतिपाद्यते । प्रतिद्रव्यं वास्तुमन्त्रेण होमयेदिति होममन्त्रो द्रव्याणि च सामान्यतो निर्दिश्यते । द्रव्याभावे गव्यदूर्वाचरून् होमयेदित्युच्यते । ततः पर्यग्निकरणप्रकारो वर्ण्यते । अत्र होमविषये मन्त्रद्रव्याहुतिविषयको भेद उभयत्र वर्तत इति स्पष्टम् । एवं सप्तविंशपटलोक्तवास्तुहोमस्य प्रकृतपटलप्रोक्तवास्तुहोमस्य च वैजात्यं प्रदर्शितम् ।

जपशान्तिविषये प्रकृतपटले ४८–५० श्लोकेषु आगमोक्तप्रकारेण तत्काले वेदमन्त्रेण संयुक्तं जपमाचरेदित्युच्यते । ततो जपान्ते पुण्याहवाचनं लिङ्गस्य प्रोक्षणं च कर्तव्यमित्युक्त्वा तत्काले दिनवारं विना शीघ्रं शान्तिः कर्तव्येति कथ्यते । शान्तिकरणप्रकारो नोक्तः ।

जपशान्तिविषय उत्तरकामिके प्रायश्चित्तविधौ प्रोच्यते । यथा —

'अथ मन्त्रजपं कुर्यात्स्नानं चोदितभस्मना।
मन्त्रकाय उदग्वक्त्रः पूर्वास्यो वाक्षमालिकः॥
शिवाणुमथवाघोरं यद्वा पाशुपतं वरम्।
अघोरास्त्रं शिवास्त्रं वा ब्रह्माण्यङ्गानि वा पुनः॥
मेलामन्त्रं तु यद्वा स्यात्परार्धान्तं शतादितः।
जपेत्तदनुरूपेण मितग्रासो हविष्यभुक्॥
अनाहारोऽथ भिक्षाशी चरुभुक् क्षीरपोऽपि वा।
शाकयावकपिण्याककन्दमूलफलाशनः॥
स्मरंस्तद्देवतारूपं जपं तस्मै निवेदयेत्।
जप एवं समाख्यातः' इति।

(**उत्तरकामिके** ३०.२७–३१)

अत्र जप्यानामागममन्त्राणां निर्देशस्तत्काले अनुष्ठेयभोजननियमश्च स्पष्टं प्रतिपाद्यते। प्रकृत-पटलोक्तजपशान्तिप्रकार एतस्माद्भिन्न इति स्पष्टं भवेत्।

एवं च प्रकृतपटलप्रोक्ता वास्तुशान्तिशान्तिहोमदिशाहोममूर्तिहोमजपशान्तिविधयो दिनशान्ति-कल्पानुसारिणः। अयं विषय एतदागमीयविशेषेषु परिगणनीय इति स्पष्टं भवति।

**चतुःपञ्चाशे पटले** सर्वशान्तिरिति व्यपदिश्यमाना शान्तिरागमान्तरेषु अद्भुतशान्तिरित्युच्यते। अद्भुतशान्तिः पूर्वं ४४ तमे पटले प्रायश्चित्तविधौ दृश्यते। तत्र दोषनिमित्तानि बहूनि प्रतिपादितानि। यथा —

'लिङ्गे वा प्रतिमायां वा स्वेदे वा रोदने सति।
वल्मीकमृदि सत्यां चेद्रक्तकन्याप्रदर्शने॥
प्रासादे च मरुद्भिन्ने पीठे सरीसृपोद्भवे।
उलूकपिङ्गलकापोतगर्भगेहप्रवेशने॥
दिवा तारकदृष्टौ च प्रतिसूर्यप्रदर्शने।
ज्वरे जनपदव्याधौ त्वनावृष्टौ स्वकालके॥
रात्राविन्द्रधनुर्दृष्टौ पाषाणपांसुवर्षके।
घृतासृगादिवर्षे च वृक्षादन्यफलोद्भवे॥
वृक्षाज्जलादिस्रावे च प्रासादेऽशनिपातने।' इति।

(**रौरवे** ४४.२७–३१ पू०)

अत्र 'लिङ्गप्रतिमयोर्विषये स्वेदरोदनयोः संभवः, वल्मीकरक्तकन्ययोर्दर्शनं, महावातेन प्रासादभेदः, पीठे सर्पोद्भवः, उलूकपिङ्गलकपोतानां गर्भगेहप्रवेशः, दिवा नक्षत्रदर्शनं, प्रतिसूर्यदर्शनं, ज्वरोत्पत्तिः, जनपदे व्याध्युत्पत्तिः, वर्षाकाले अनावृष्टिः, रात्रौ इन्द्रधनुषो दर्शनं, पाषाणपांसुवर्षः, घृतासृगादिवर्षः, वृक्षात् स्वफलं विनान्यफलोत्पत्तिः, वृक्षाज्जलादिस्रावः, प्रासादेऽशनिपातः' इति बहूनि दोषनिमित्तानि कथ्यन्ते।

५४ तमेऽस्मिन्पटले सर्वशान्तिविधौ दोषनिमित्तानि कतिपयान्येव निर्दिश्यन्ते। यथा —

'गर्भार्धमण्टपे चैव द्वारे च बलिपीठके।
परिवारालये चैव ध्वजस्तम्भस्य देशके॥
पचनालयदेशे तु सभास्थाने तु गोपुरे।
शिखरे मण्डपे चैव कूपतीरे तटाकके॥

धामवृक्षे तु शालायां द्रव्यकोशे वृषेऽथवा।
प्रासादे भित्तिदेशे तु उपगोपुर एव च॥
उत्सवमण्डपे चैव तीर्थमण्डप अङ्कणे।
सोपाने दीपदेशे तु अन्यदेवालयेऽपि वा॥
गोमायुशिथिले चैव वल्मीके मधुपञ्जरे।
श्वारोहे रुदिते तत्र कृकलासे तु कच्छपे॥
रक्तकन्याश्वेतकन्यामण्डूकश्वेतवायसैः।
गर्दभैः कुक्कुटैश्चैव सूकरैर्वनचारिभिः॥
अन्यैस्तु दुष्टे जन्तूनां शान्ति तत्रैव कारयेत्॥
पूर्वे तु द्रव्यनाशः स्यादाग्नेय्यामग्निदग्धकम्॥
दक्षिणे कलहं विद्यान्नैर्ऋते राक्षसाद्भयम्।
वारुणे वर्षनाशः स्याद्वायव्ये चण्डमारुतः॥
सौम्ये तु धननाशः स्यादैशान्ये गेहनाशनम्।
मध्ये तु राजदोषः स्यादन्तराले महद्भयम्॥
कच्छपे जलसंजाते तत्र दोषो न विद्यते।' इति।

(**रौरवे** ५४.१ – १०पू०)

अत्र 'गर्भगृहार्धमण्टप – द्वार – बलिपीठ – परिवारालय – ध्वजस्तम्भ – पचनालय – सभास्थानेषु, तथा गोपुर– शिखर – मण्टप – कूपतटाकतीर – धामवृक्ष – शाला – धनस्थान – वृषस्थान – प्रासादभित्तिषु, तथोपगोपुर – उत्सवमण्टप – तीर्थमण्टप – अङ्कण – सोपान – दीपस्थान – देवालयेषु च 'गोमायुकृतशैथिल्ये, वल्मीकमधुपञ्जरोत्पत्तौ, श्वारोहतद्रोदनसंभवे, कृकलास – कच्छप-रक्तकन्या – श्वेतकन्या – मण्डूक – श्वेतवायस – गर्दभ-कुक्कुट-सूकरैरन्यैर्वनचारिभिश्च जनानां पीडोत्पादे, च संजाते शान्ति कुर्यादित्युच्यते। ततः पूर्वोक्तदोषनिमित्तानामष्टसु दिक्षु, तथा मध्येऽन्तराले च संभवे संभाव्यमानदोषाश्च निरूप्यन्ते।

अत्र ४४ तमे पटले बहुधा प्रदर्शितेषु दोषनिमित्तेषु मध्ये ५४ तमे पटले प्रदर्शितं वल्मीकरक्तकन्योत्पत्तिरूपं दोषनिमित्तद्वयं दृश्यत इति किंचित् साजात्यमुभयत्र दृश्यते। अन्यानि दोषनिमित्तानि सर्वाण्यपि भिन्नानीति वैजात्यं स्पष्टम्।

४४ तमे पटले दोषपरिहारविषये प्रदर्शितः शान्तिप्रकारः प्रथमं निरूप्यते। यथा —

'पुण्याहप्रोक्षणं कृत्वा विशेषात्तु हरं यजेत्।
पञ्चब्रह्मशिवाङ्गैश्च गव्यैः कृत्वाभिषेचनम्॥
दिशाहोमस्तु कर्तव्य एकमासमतन्द्रितः।
मूर्तिहोमं ततः कृत्वा शान्तिहोममनन्तरम्॥
अत्रानुक्ताद्भुतानां तु शान्त्यर्थं मूर्तिहोमकः।' इति।

(**रौरवे** ४४.३१ उ० – ३३)

अत्र पुण्याहप्रोक्षणं कृत्वा शिवस्य विशेषार्चनं कर्तव्यम्। पञ्चब्रह्मषडङ्गमन्त्रैः पञ्चगव्याभिषेकः कर्तव्यः। तत एकमासमतन्द्रितो दिशाहोमं कुर्यात्। ततो मूर्तिहोमशान्तिहोमौ च कुर्यादित्युच्यते। ततोऽत्रानुक्तानामद्भुतानां विषये दोषशान्त्यर्थं मूर्तिहोमः कर्तव्य इति सूच्यते। एवमद्भुतशान्तिविषये दोषपरिहारः ४४ तमे पटले प्रतिपाद्यते।

एतद्विषये ५४ तमे पटलेऽस्मिन्प्रोक्तो दोषपरिहारः प्रदर्श्यते। यथा —

'तद्दोषशमनार्थाय पुण्याहं पञ्चगव्यकैः।
स्नपनं शान्तिहोमं च वञ्जुलासमिधा हुनेत्॥
गुडूचीसमिधा चैव दग्धे तु लवणं हुनेत्।
कार्पासबीजसंयुक्तं सर्षपं मधुसंयुतम्॥
सहस्रमुपचारेण स्नपनं च विशेषतः।
तत्स्थाने मार्जनं प्रोक्ष्य पञ्चगव्यं प्रपूरयेत्॥
शिवसंकल्पसंयुक्तं स्वस्तिवाचकसंयुतम्।
तत्तत्स्थाने तु संयुक्तं शान्तिहोमं तु कारयेत्।
शिवं संपूज्य विधिवद्ब्राह्मणान्मिष्टभोजनम्।
गन्धमाल्यैरलंकृत्य श्वेतताम्बूलसंयुतम्॥
नववस्त्रेण संयुक्तं शक्त्या वित्तानुसारतः॥' इति।

(**रौरवे** ५४.१० उ० – १५)।

अत्र दोषपरिहारविषये 'पुण्याहवाचनं पञ्चगव्याभिषेचनं, शिवस्य विशेषार्चनं शान्तिहोमः' इत्येते विषया उभयत्रापि कर्तव्यत्वेनोक्ता इति साजात्यं स्पष्टं भवति। ४४ तमे पटले पञ्चगव्याभिषेके मन्त्राः प्रदर्शिता इति विशेषो दृश्यते। एवं ४४ तमे पटले प्रकृतविषये दोषपरिहाराय एकमास मतन्द्रितो दिशाहोमं कुर्यादित्युक्तिस्तथा मूर्तिहोमं कुर्यादित्युक्तिश्चाधिकतया दृश्यते।

एवं प्रकृतविषये ५४ तमे पटले होमविषये वञ्जुलादिसमिद्विशेषैर्होमः, कार्पासबीजसर्षपमधुसंयुक्त-लवणहोमः, सहस्रकलशस्नपनं, दोषोत्पत्तिस्थाने मार्जनोदकप्रोक्षणं कृत्वा तत्र पञ्चगव्यैः पूरणं कर्तव्य-मित्युक्तिः, शिवसंकल्पोपनिषज्जपः, स्वस्तिवाचनं, ब्राह्मणभोजनकरणमित्यादिविषयाः कर्तव्यत्वेन विधीयन्त इति वैजात्यं नितरां वर्तत इति स्पष्टम्। एवमद्भुतशान्तिविषयदोषपरिहारे बहुधा वैजा-त्यमस्तीति स्पष्टं भवति।

५४ तमे पटले प्रोक्ते गोमायुशैथिल्यविषये वैजात्यावगमाय सूक्ष्मागमश्लोका द्रष्टव्याः। यथा —

'गोमायुः पिङ्गलो गृध्र उलूकश्चैव वायसः।
आलयान्तः प्रविष्टश्चेन्नृपवेश्मान्तरेऽपि वा॥
बालानां स्त्रीगणानां च नाशमेव समादिशेत्।
शीतकुम्भं ततः कृत्वा शान्तिहोमं समाचरेत्॥
ब्राह्मणान्भोजयित्वा तु तदन्ते स्नपनं कुरु।' इति।

(**सूक्ष्मे** ६०.१४७ – १४९ पू०)

एवं वल्मीकमधुपञ्जरोत्पत्त्याद्यन्यविषयेषु टिप्पण्यां प्रदर्शिता आगमान्तरश्लोकाः साजात्यवैजात्या-वगमाय द्रष्टव्याः। एवं चतुःपञ्चाशपटलविषये साजात्यं वैजात्यं च यथाकथंचित् प्रादर्शि।

**पञ्चपञ्चाशे पटले** प्रतिमाविषये जीर्णोद्धारप्रकारो लेशतः प्रतिपाद्यते। तत्र १ – ४ श्लोकाः प्राये-णार्थतः शब्दतश्च सुप्रभेदागमश्लोकसदृशा विद्यन्ते। यथा —

'प्रतिमानां ततः शृणु।
भ्रूरेखा पक्ष्मरेखा च चक्षूरेखा च नासिका॥
सर्वाङ्गानां क्षयं दृष्ट्वा प्रतिमां च विसर्जयेत्।
लोहजानां तु सर्वेषामङ्गहीने तु संभवे।
तद्वदङ्गं पुनः कार्यं मुखहीनं न कारयेत्॥
नाभिमध्यमहीने तु संधानं न समाचरेत्।

मृण्मये वर्णहीने चेत्पुनः कृत्वा समारभेत्॥
छिन्नं भिन्नं पुनर्ग्राह्यं जीर्णं चेत्तु नवीकृतम्।
प्रतिमं शूलहीनं चेज्जीर्णोद्धारं तु कारयेत्।

(**सुप्रभेदे** (आर्० इ० २००५२) १९ तमे पत्रे)

प्रकृतपटले १ – ४ श्लोकाः प्रायेणैवमेव दृश्यन्ते। यथा —

'भ्रूरेखा पक्ष्मरेखा च आस्यरेखा च नासिका।
सर्वाङ्गानां क्षयं दृष्ट्वा प्रतिमां च विसर्जयेत्॥
लोहजानां तु सर्वेषामङ्गहीने तु संभवे।
तद्वदङ्गं पुनः कार्यं मुखहीने न कारयेत्॥
नाभिमध्यमहीने तु संधानं न समाचरेत्।
मृण्मये वर्णहीने चेत्पुनः कृत्वा समारभेत्॥
छिन्नं भिन्नं पुनर्ग्राह्यं जीर्णं चेत्तु नवीकृतम्।
प्रतिमे शूलहीने तु जीर्णोद्धारं तु कारयेत्॥' इति।

(**रौरवे** ५५.१ – ४)

अत्र प्रथमश्लोके परं 'आस्यरेखा' इत्यत्र सुप्रभेदे 'चक्षूरेखा' इति दृश्यते। अन्यत्सर्वं प्रायेण समानमिति साजात्यमुभयोर्वर्तत इति स्पष्टम्।

अस्मिन्विषये पूर्वकारणागमे १३४ तमे पटले लोहजबिम्बविषये शिरोबाहुपादानां हीने सति तद्बेरं परित्यज्य तद्येन लोहेन यावता प्रमाणेन कृतं तथैव पुनः कृत्वा स्थापयित्वा सम्यक् पूजयेदिति स्पष्टतया जीर्णोद्धारप्रकारो दृश्यते। भ्रूरेखापक्ष्मरेखास्यरेखाणां नासिकायाश्च हीने तद्बेरं समुद्रे प्रक्षिपेदित्युच्यते। यथा —

'जीर्णितस्यैव बिम्बस्य उद्धारं चाधुना शृणु।
शिरो बाहू तथा पादौ हीनौ चेत्परिवर्जयेत्॥
जीर्णे लोहे तु तत्कार्यं तत्प्रमाणेन पूर्ववत्।
कृत्वा तु स्थापयित्वा तु पूर्ववत्सम्यगर्चयेत्॥
भ्रूरेखा पक्ष्मरेखा च आस्यरेखा च नासिका।
एतासां च क्षयं दृष्ट्वा प्रतिमां परिवर्जयेत्॥
तद्बेरं तु परिग्राह्य समुद्रे तु विनिक्षिपेत्।' इति।

(**पूर्वकारणे** १३४.२९ – ३२ पू०)

अत्र भ्रूरेखादिहीनबिम्बविषये प्रतिमां विसर्जयेदित्युक्तिरुभयत्र दृश्यत इति रौरवपूर्वकारणागमयोः साजात्यं स्पष्टं भवति।

एवं शैलजबिम्बविषये प्रतिपाद्यमानो जीर्णोद्धारप्रकारो ललितागमे, रौरवे च प्रायेण शब्दतोऽर्थतश्च समानतया दृश्यते। यथा —

'शैलं च ध्रुवबेरं यदङ्गहीनं भवेद्यदि।
तद्बेरं च समादाय समुद्रे प्रक्षिपेत्ततः॥
शिलामन्यां गृहीत्वा तु शिलासंस्थापनं यदि।
स्थापयित्वा उपाङ्गं तु पूर्ववत्कारयेद्बुधः॥' इति।

(**ललितागमे** (आर० इ० २००५२) १८ पत्रे)

'शैलजं ध्रुवबेरं यदङ्गहीनं भवेद्यदि।

तद्बेरं च समादाय समुद्रे प्रक्षिपेत्तथा ॥
शिलामन्यां गृहीत्वाथ शिलाग्रहणमार्गतः ।
स्थापयित्वा विशेषेण पूर्ववत्कारयेद्बुधः ॥' इति ।

(**रौरवे** ५५.५, ६)

अत्र ललितागमे विशेषेण शैलजबिम्बे उपाङ्गानि पूर्ववत्कारयेदिति विशिष्याभिधीयते। रौरवे तूपाङ्गकरणं प्रति विशिष्याभिधानं न दृश्यते। अन्यत्सर्वमप्युभयत्रापि सदृशम्। ललितागमे उपाङ्गान्येव प्रोक्तानि।

'दन्ता नखाश्च रोमाणि केशरूपाणि मूर्धनि ।
उपाङ्गानि च चोक्तानि' इति ।

(**ललितागमे** (आर० इ० २००५२) १८ पत्रे)

एवं मृद्दारुलोहशैलजबिम्बविषये रौरवे ७ – १० श्लोकेषु प्रतिपाद्यमानो जीर्णोद्धारप्रकारो मुखबिम्बागमे, सूक्ष्मागमे च शब्दतोऽर्थतश्च प्रायेण समानतया दृश्यते। यथा —

'मृण्मयं दारुजं वापि लोहजं वा शिलामयम् ।
स्थापितं पूजितं बेरं जीर्णं वा हीनमेव वा ॥
छिन्नं वाप्यग्निदग्धं वा दृष्ट्वा बेरं न पूजयेत् ।
पूजयेद्यदि मोहेन राजा राज्यं विनश्यति ॥
तस्माद्बेरं समुद्धृत्य जले वापि स्थलेऽपि वा ।
प्रक्षिप्य मृद्भिराच्छाद्य प्रतिमां कारयेन्नवाम् ॥
मृण्मयं चेन्मृदा कुर्याद्दारु चेद्दारुणा कुरु ।
लोहजं यदि लोहेन शिलायां शैलजं यदि: ॥ इति ।

(**मुखबिम्बागमे** (आर० इ० २००५२) ७ पत्रे)

'मृण्मयं दारुजं वापि लोहजं वा शिलामयम् ।
स्थापितं पूजितं बेरं जीर्णं वा भिन्नमेव वा ॥
छिन्नं वाप्यग्निदग्धं वा दृष्ट्वा बेरं न पूजयेत् ।
पूजयेद्यदि मोहेन राजराष्ट्रं विनश्यति ॥
तस्माद्बेरं समुद्धृत्य जले वापि स्थलेऽपि वा ।
प्रक्षिप्य मृद्भिराच्छाद्य प्रतिमां कारयेन्नवाम् ॥
मृण्मयं च मृदा कुर्याद्दारु चेद्दारुणा कुरु ।
लोहजं यदि लोहेन शिला चेच्छैलजं स्वयम् ॥' इति ।

(**सूक्ष्मे** ४८.११ – १४)

'मृण्मयं दारुजं वापि लोहजं तु शिलामयम् ।
स्थापितं पूजितं बेरं जीर्णं वा हीनमेव वा ॥
छिन्नं वाप्यग्निदग्धं वा दृष्ट्वा बेरं न पूजयेत् ।
पूजयेद्यदि मोहेन राजराष्ट्रं विनश्यति ॥
तस्माद्बेरं समुद्धृत्य जले वापि स्थलेऽपि वा ।
प्रक्षिप्यात्र समाच्छाद्य प्रतिमां स्थापयेन्नवाम् ॥
मृण्मयं चेन्मृदा कुर्याद्दारुश्चेद्दारुणा कुरु ।
लोहजं यदि लोहेन शिलया शैलजं कुरु ॥' इति ।

(**रौरवे** ५५.७ – १०)

अत्र यथाविधि प्रतिष्ठाप्य पूजितानि मृद्दारुलोहजशिलामयानि बिम्बानि, यदि कालवशाज्जीर्णानि भिन्नानि छिन्नानि तथाग्निदग्धानि वा 'भवेयुः, तानि पुनर्न पूजयेत्। यदि मोहेन पूज्यन्ते, तदा राज्ञो राज्यस्य च नाशः स्यात्। तस्मात्तानि बिम्बानि समुद्धृत्य जले वा स्थले वा प्रक्षिप्य पुनर्नवानि बिम्बानि तत्तद्द्रव्यैर्निर्माय विधिवत् स्थापयित्वा पूजयेदित्युच्यते। अत्र प्रदर्शितश्लोकेषु नैवार्थविषये भेदो दृश्यते। सर्वेऽपि श्लोकाः प्रायेण समानाकारा दृश्यन्ते। अतः प्रकृतविषये रौरवमुखबिम्बसूक्ष्मागमेषु सर्वात्मना साजात्यं वर्तत इति स्पष्टम्।

अपि चास्मिन्पटले मृद्दारुलोहशिलानिर्मितबेरविषये जीर्णत्वादिदोषसंभवे कर्तव्यत्वेनोक्तो जीर्णोद्धारप्रकारः ४४ तमे पटले प्रायश्चित्तविधौ (८ उ० – १० पू०) श्लोकेषु सूच्यते। यथा —

'लिङ्गं वा प्रतिमा वापि पिण्डिका वा विशेषतः।
चलिते स्फुटिते भिन्ने दग्धे वा त्वनलेन तु॥
प्राग्द्रव्यैः प्रागिव कुर्यात्प्रतिष्ठां सम्यगाचरेत्।
स्नपनं शान्तिहोमं च कर्तव्यं हि रुरो विदुः।' इति॥

(**रौरवे** ४४.८ उ० – १० पू०)

अत्र स्नपनं शान्तिहोमं च कुर्यादित्युक्तिर्विशेषतया दृश्यते।

अस्मिन्पटले जीर्णोद्धारविषये प्रायेण शिल्पिकर्तव्यकर्मविशेष एव प्रतिपाद्यते। आचार्यकर्तव्यहोमादिसंस्कारविशेषो नात्र प्रोक्तः। पूर्वकारणे १३४ तमे पटले, तथा सुप्रभेदे क्रियापादे ५४ तमे पटले च जीर्णोद्धारविषये आचार्यकर्तव्यहोमादिसंस्कारविशेषोऽपि कथ्यते। एवं पञ्चपञ्चाशपटलविषयकसाजात्यवैजात्यविचारः प्रसूचितः।

**षट्पञ्चाशे पटले** प्रायश्चित्तविधौ ३ – १८ श्लोकेषु महामर्यादादिपञ्चप्राकारेषु, अर्धमण्डपमहामण्डपयोस्तथा व्यञ्जनमण्डपे च चण्डालप्रवेशे संजाते तद्दोषपरिहाराय कर्तव्यानि प्रायश्चित्तानि पृथक् पृथगभिधीयन्ते। एवं १९ – २४ श्लोकेषु 'गर्भगेहे, व्यञ्जनमण्डपे च सुरामांसरुधिराणां संस्पर्शे संजाते, श्वानकुक्कुटवानरखरसूकरादितिर्यग्जातीनामस्पृश्यानां स्पर्शे सति, मृगपक्षिणां प्रसूतिमृत्योः संभवे च दोषपरिहाराय कर्तव्यानि प्रायश्चित्तानि च विशदतया प्रतिपाद्यन्ते। चण्डालप्रवेशविषये प्रायश्चित्तप्रतिपादका रौरवागमश्लोकाश्चिन्त्यागमस्वायंभुवागमश्लोकैः प्रायेण सदृशा वर्तन्ते। टिप्पण्यां ते श्लोकाः प्रदर्शिताः। एवं गर्भगेहादौ सुरामांसरुधिरप्रवेशे, तथा श्वानादितिर्यग्जातीनां प्रवेशे मृगपक्षिणां प्रसूतिमृत्योः संभवे च साजात्यवैजात्यावगमाय तत्तद्विषये टिप्पण्यां प्रदर्शिताः स्वायंभुवागमश्लोका योगजागमश्लोकाश्च द्रष्टव्याः।

५६ तमे पटले यथास्पृश्यस्पर्शविषये प्रायश्चित्तानि बहुविषयेषु पृथक् पृथक् प्रतिपाद्यन्ते। ४४ तमे पटलेऽस्पृश्यस्पर्शविषयकप्रायश्चित्तान्येवरीत्या न प्रतिपादितानि। किं तु चण्डालैरार्तवैश्च प्रासादलिङ्गादिसस्पर्शे कर्तव्यप्रायश्चित्तान्येव कथ्यन्ते। यथा —

'चण्डालैरार्तवैर्वापि स्पृष्टं लिङ्गादि सद्म वा।
विसृज्याशेषमृत्पात्रं शकृदालेपनं कुरु॥
कुशाद्भिश्चैव गव्यैश्च प्रोक्ष्य पुण्याहमाचरेत्।
मूर्तिहोमं ततः कृत्वा ततः स्नपनमाचरेत्॥ इति॥

(**रौरवे** ४४.११ उ० – १३ पू०)

५६ तमे पटले प्रायश्चित्तविधौ पूर्वप्रदर्शितास्पृश्यस्पर्शविषयकप्रायश्चित्तविषय एव पृथक् पृथग्विशदतया प्रोक्तः। नान्यविषयकाणि प्रायश्चित्तानि निरूपितानीति संप्रति सम्यक् प्रदर्श्यते।

तथा हि – ४४ तमे पटले प्रायश्चित्तविधौ प्रथमतः 'प्रासादपतने, प्रासादसुधाकर्महीने, प्रासादाङ्ग-

कूटादीनां विच्छेदे, प्रासादेऽग्निदग्धे, दिङ्मूर्तीनां वृषभादीनां च भेदच्छेदचलनेषु, लिङ्गप्रतिमा-पिण्डिकानां चलनस्फुटनभेददाहेषु संजातेषु, आवरणपीठादिहीने च जीर्णोद्धारकरणपूर्वकं कर्तव्यानि प्रायश्चित्तानि संक्षेपतः कथ्यन्ते। अत्र मध्ये प्रदर्शितप्रतिमाविषयकचलनस्फुटनभेदादिषु कर्तव्यो जीर्णोद्धारप्रकार एव ५५ तमे पटले जीर्णोद्धारविधौ विशदतया प्रतिपादितः। एतद्विषयकसाजात्य-वैजात्यविषयः ५५ तमपटलविषयकसाजात्यवैजात्यविचारे सूचितः।

४४ तमे पटले प्रतिपादितप्रासादादिविषयकजीर्णोद्धारप्रकारः ५५ तमे पटले जीर्णोद्धारविधौ, ५६ तमे पटले प्रायश्चित्तविधौ वा नैव प्रदर्शित इति भेदोऽवगन्तव्यः।

एवं ४४ तमे पटले प्रायश्चित्तविधौ जीर्णोद्धारपूर्वकं कर्तव्यप्रायश्चित्तप्रतिपादनानन्तरं लिङ्गादौ प्रासादे च चण्डालार्तवप्रवेशे कर्तव्योऽस्पृश्यस्पर्शविषयकः प्रायश्चिविधिः संक्षेपेण प्रतिपाद्यते। अयमेव विषयो विस्तरेण ५६ तमे पटले प्रतिपादित इति पूर्वं सूचितः।

एवं ४४ तमे पटले प्रायश्चित्तविधौ अस्पृश्यस्पर्शविषयकप्रायश्चित्तकथनानन्तरं पूजाविषये 'एक-मासार्चनहीने, नैवेद्याङ्गहीने, गन्धद्रव्यहीने, संधिदीपहीने, नित्यादिदीपहीने, अष्टमङ्गलास्त्रादिहीने तत्पतने च, नित्यकर्महीने, नित्योत्सवहीने च कर्तव्यानि प्रायश्चित्तानि कथ्यन्ते। एतदनन्तरं लिङ्ग-प्रतिमाविषयकस्थलकर्मसुधाकर्माष्टबन्धनहीने कर्तव्यः प्रायश्चित्तप्रकारोऽभिधीयते। पश्चादुत्सवविषये 'संवत्सरोत्सवहीने, ध्वजदण्डतत्पीठच्छेदभेदादिसंभवे, बलिदान-परिवेष-नीराजन-तीर्थसंग्रह-तीर्थकर्म-हीनेषु च कर्तव्यानि प्रायश्चित्तानि संक्षेपतः कथ्यन्ते। अत्रास्पृश्यस्पर्शविषयकप्रायश्चित्तानन्तरं पूजा-विषये प्रोक्तानि, स्थलकर्महीनादिविषये, तथोत्सवविषये च कथितानि प्रायश्चित्तानि ५६ तमे पटले नैव दृश्यन्त इति भेदोऽधिगन्तव्यः।

अपि च ४४ तमे पटले पूर्वोक्तविषयादनन्तरमद्भुतशान्तिविषयकप्रायश्चित्तविधिः प्रदर्श्यते। एत-द्विषयकसाजात्यवैजात्यप्रकारः ५४ तमे पटले सर्वशान्तिविधौ साजात्यवैजात्यविचारे प्रदर्शित इति ततोऽधिगन्तव्यः।

अद्भुतशान्तेरनन्तरं ४४ तमे पटलेऽभिहितानां मूर्तिहोम-शान्तिहोम-दिशाहोमानां विषये साजात्य-वैजात्यविचारः प्रसङ्गात् त्रिपञ्चाशे प्रतिपादित इति ततोऽवधेयः। एवं षट्पञ्चाशपटलविषयकसा-जात्यवैजात्यविषयः प्रत्यपादि।

**सप्तपञ्चाशे पटले** नागप्रतिष्ठाविधिर्विस्तरेण प्रतिपाद्यते। अस्मिन्पटले १३३ श्लोकाः सन्ति। अष्टत्रिंशे पटले नागराजप्रतिष्ठातीव संग्रहेण प्रतिपादिता। तत्र ३६ श्लोका एव सन्ति। ३८ तमे पटले-ऽस्मिन् प्रोक्तः क्रियाकलापो नितरां संक्षेपेण दृश्यते। तथा हि – 'मन्त्रोद्धारः, प्रतिमालक्षणं, रत्नन्यासः, नेत्रोन्मीलनं, जलाधिवासः, यागमण्टपवर्णनं, शयनाधिवासः, कुम्भस्थापनं, होमः, कुम्भाभिषेकः' इति दशसंख्याक एव क्रियाकलापो निर्दिश्यते।

सप्तपञ्चाशपटले नागप्रतिष्ठाविषये तु बहुसंख्याकः क्रियाकलापोऽभिधीयते। यथा —

'नागप्रतिष्ठायोग्यस्थाननिरूपणं, नागप्रतिष्ठाकालः, प्रतिमालक्षणविषये नागप्रमाणनागरूपभेदतत्फ-लानां निरूपणं, आचार्यर्त्विजां वरणं, वेदपारायणाय विप्रवरणं, पुण्याहवाचनं, द्रव्यशुद्धिः, मृत्सं-ग्रहणं, वास्तुहोमः, अङ्कुरार्पणं, बेरशुद्धिः, नेत्रोन्मीलनं, जलाधिवास – क्षीराधिवास – धान्याधिवास-वस्त्राधिवासा इति चतुर्विधाधिवासनिरूपणं, रक्षाबन्धनं, कुण्डवेदिसहितमण्डपकल्पनं, शयनाधिवासः, कुम्भस्थापनप्रकारः, स्वर्णनागप्रतिमानिर्माणप्रकारः, सूर्यपूजादिगुरुपूजान्तातिविस्तृतमण्टपपूजाविधान-प्रकारः, प्रधानकुम्भवर्धन्योः पूजाप्रकारः, परिवारघटेष्वनन्ताद्यष्टनागपूजाप्रकारः, विस्तरेण होम-करणप्रकारः, परेद्युः प्रभाते करणीयविधेर्विस्तरेण प्रतिपादनं, प्राणप्रतिष्ठा, कुम्भाभिषेकः, अङ्गपूजा, आचार्यादिपूजा, दशदानकरणं, दम्पतीपूजा, ब्रह्मचारिपूजा, प्रतिवर्षं कर्तव्य आश्विनशुक्लचतुर्थी-

पूजनप्रकारः' इति बहुसंख्याकः क्रियाकलापः कर्तव्यत्वेनाभिधीयते। एवमष्टत्रिंशे पटले नागराजप्रतिष्ठांविषयेऽतीव संक्षेपतः क्रियाकलापोऽभिहितः। सप्तपञ्चाशपटले नागप्रतिष्ठाविषये बहुविधक्रियाकलापोऽभिधीयत इत्युभयोर्नितरां वैजात्यमस्तीति स्पष्टम्।

सप्तपञ्चाशपटलप्रोक्तक्रियाकलापविषये सिद्धान्तदीपिकायामुक्ता विषयाः प्रायेण सदृशाः सन्ति। तत्रत्याः श्लोकाश्च तत्र तत्र टिप्पण्यां प्रदर्शिताः। अस्याः सिद्धान्तदीपिकायाः कर्तृनाम न दृश्यते। 'टि १२०' इत्यङ्कितहस्तलिखितमातृकायामियं सिद्धान्तदीपिका वर्तते। अस्यामादौ 'शृणु देवि प्रवक्ष्यामि शेषस्थापनमुत्तमम्।' इति देवीसंबोधनं दृश्यते।

अस्मिन्पटले प्रतिष्ठाविषये नागप्रतिष्ठा कार्तिकशुक्लचतुर्थ्यां कर्तव्येति प्रोच्यते। यथा —

'प्रतिष्ठा स्थिरलग्ने तु मध्यमा चोभयात्मके।
चतुर्थ्यां कार्तिके मासे शुक्लपक्षे शुभे दिने॥
नागप्रतिष्ठा कर्तव्या चान्यकालेषु वर्जयेत्।' इति।

(**रौरवे** ५७.६ – ७ पू०)

अस्मिन्विषये सिद्धान्तदीपिकायां विकल्पेन कार्तिककृष्णचतुर्थ्यपि ग्राह्यत्वेनाभिधीयते। यथा —

'श्रावणे वा चाश्वयुजि कार्तिक्यां वा विशेषतः।
शुक्लपक्षे विशेषेण कृष्णेऽप्यापञ्चमीदिनात्॥
पञ्चमी नागराजस्य नागानां शान्तिवर्धनी।
पञ्चम्यां किल नागानां भवति ह्युत्सवो महान्॥
पञ्चम्यामेव कर्तव्या प्रतिष्ठा फलदायिनी।
चतुर्थ्यां वा तु षष्ठ्यां वा' इति।

(**सिद्धान्तदीपिकायाम्** (टि० १२०.९९ पृ०)

कार्तिकशुक्लचतुर्थ्यां प्रतिष्ठा कर्तव्येत्यस्मिन्नागमेऽभिधीयत इति विशेषोऽवगन्तव्यः।

अस्मिन्पटले २१ – २५ श्लोकेषु प्रतिमाया जलाधिवासानन्तरं ग्रामप्रदक्षिणं कारयित्वा क्षीराधिवासनं पयःसूक्तेन मन्त्रेण कर्तव्यम्। ततो धान्यसूक्तमन्त्रेण धान्याधिवासो विधेयः। 'युवा सुवासाः परिवीतेति' मन्त्रेण वस्त्राधिवासः कर्तव्य इत्युच्यते। किं च जलाधिवासविषये गङ्गादीनां पूजनं, तथोदकशान्तिरुद्रसूक्तश्रीसूक्तरात्रिसूक्तघृतसूक्तपुरुषसूक्तपञ्चशान्तिजपः कर्तव्य इति विशेषेणाभिधीयते। मण्डपपूजातीव विस्तरेण प्रतिपाद्यत इति विशेषोऽवगन्तव्यः। कुम्भाभिषेकानन्तरं प्रोक्ताङ्गपूजा ब्रह्मचारिणां पूजा च कर्तव्यत्वेन विहिता या शान्तिकुसुमाकरेऽपि लभ्यते इति विशेषश्च परिगणनीयो भवति। शान्तिकुसुमाकरग्रन्थप्रोक्ताङ्गपूजा ब्रह्मचारिणां पूजा च टिप्पण्यां प्रदर्शिता। अन्ते प्रतिवर्षमाश्विनशुक्लपक्षचतुर्थ्यां विद्वान्सर्वकामार्थसिद्धये सर्पराजं पूजयेत्। ब्राह्मणानां विशेषेण परेऽहनि परमान्नभोजनं कारयेदित्युच्यते। अस्मिन्विषये भविष्यपुराणे ३८ तमेऽध्याये पञ्चमीकल्प उत्तम इत्युच्यते। अस्मिन्नागमे चतुर्थीकल्प एव कर्तव्य इत्युच्यत इति विशेषोऽवधेयः। प्रतिष्ठायामपि चतुर्थीपक्ष एवोक्त इत्ययं विषयोऽपि परिगणनीयः। 'चतुर्थ्यपि ग्राह्येति' जयसिंहकल्पद्रुमे चतुर्थीव्रतनिर्णयेऽभिधीयते। यथा —

'नागचतुर्थी तु मध्याह्नव्यापिनी पञ्चमीयुता ग्राह्येति 'निर्णयामृते माधवीये' चोक्तम्। इति।

अस्मिन्नागमे चतुर्थीपक्ष एव ग्राह्यत्वेनोक्त इति विशेषः परिगणनीयः। एवं सप्तपञ्चाशपटलसाजात्यवैजात्यविषयः प्रत्यपादि।

**अष्टपञ्चाशे पटले**ऽर्धरात्रसमये ज्ञानदीक्षा कर्तव्या। यतो देहेन्द्रियादीनां व्यापारो रात्रौ विलयं याति, अत एव शास्त्रविदुत्तमैरुत्तमत्वेन रात्रिकालोऽभिमत इति हेतुप्रदर्शनपूर्वकमभिधीयते। यथा —

'अशुद्धमायारूपेण कालरात्रिरुदाहृता।
मायातत्त्वान्तिमस्थाने चिद्रूपस्य हि दर्शनम्॥
चिद्रूपं शुद्धमायान्ते वस्तुनिश्चायकं क्रमात्।
मायाद्वयोर्विलयनमेकाकारस्य भावनम्॥
तिरोधानातिरोधानं निर्दर्शनसुदर्शनम्।
एतैः संयुक्तकाला तु कालरात्रिर्विशिष्यते॥
क्षयकृत्येऽर्धरात्रिः स्यान्नित्यसंहृन्निशि स्थिता।
देहेन्द्रियादिव्यापारो रात्रौ संलीयते यतः॥
एतेन शास्त्रविदुषां रात्रिः कालोत्तमा भवेत्'। इति।

(**रौरवे** ५८.७ – ११ पू०)

अयं विषय उत्तरकामिकसुप्रभेदसूक्ष्मागमेषु अर्धरात्रसमय उपदेशः कार्य इत्युच्यते। यथा —

'एकान्ते निर्जने स्थाने मध्यरात्रावुपक्रमे।
सच्छिष्याणां सदाचार्यो बोधं कुर्याद्विशेषतः॥'

(**उत्तरकामिके** टि० २९८(२) पृ० २०१)

'रात्रौ निशीथसमये एकान्ते भवने शुभे।'

(**सुप्रभेदे** टि० २४५.२६२ पृ०)

'अर्धरात्रोपदेशेन ज्ञानदीक्षां समाचरेत्।' इति।

(**सूक्ष्मे** टि० ११२.५५१ पृ०)

अत्र विषये रौरवागमस्योत्तरकामिकसुप्रभेदसूक्ष्मागमैः साजात्यं विद्यते। रौरवे हेतुप्रदर्शनमप्यस्तीति विशेषोऽवगन्तव्यः।

रौरवे ज्ञानदीक्षानन्तरं शिष्याय गुरुः पत्यादिपदार्थविचारकं शिवज्ञानबोधकं शास्त्रमुपदिशेदित्युच्यते। यथा —

'शिवज्ञानबोधशास्त्रं दद्यात्पत्यादिचिन्तनम्।' इति॥

(**रौरवे** ५८.३५ उ०)

अस्मिन्विषये उत्तरकामिके दशकार्यमथवा अर्थदशकं शिष्याय गुरुरुपदिशेदित्युच्यते। यथा —

'तत्पश्चाज्ज्ञानसद्भावमिदं शिष्याय बोधयेत्।
प्रथमं तत्त्वरूपं च द्वितीयं तत्त्वदर्शनम्॥
तृतीयं तत्त्वशुद्धिश्च चतुर्थं चात्मलक्षणम्।
पञ्चमं चात्मदर्शं च षष्ठं स्यादात्मशोधनम्॥
सप्तमं शिवरूपाख्यमष्टमं शिवदर्शनम्।
नवमं शिवयोगं च दशमं शिवभोगकम्॥
त्रित्रिभेदैश्चतुष्केण पतिपाशपशुत्रयम्।
गुरोर्वचनमात्रेण जीवन्मुक्तिप्रकाशकम्॥
इत्यर्थदशकं ज्ञानमार्गेणास्य विधीयते। इति।'

(**उत्तरकामिके** टि० २९८(२) २०१, २०२ पृ०)

सूक्ष्मागमेऽप्यस्मिन्विषये दशकार्योपदेशः कार्य इति सूच्यते। यथा —

'दशकार्यक्रमं चैव बोधयेच्छिववद्गुरुः।' इति।

(**सूक्ष्मे** टि० ११२.५५४ पृ०)

रौरवे शिवज्ञानबोधकशास्त्रोपदेशः कर्तव्य इत्युच्यते। उत्तरकामिकसूक्ष्मागमयोर्देशकार्योपदेशः कार्य इति विशिष्य स एवार्थः प्रतिपाद्यत इति विशेषोऽधिगन्तव्यः।
एतदनन्तरं रौरवे —

'अनुग्राह्यस्तु यः शिष्यो वाङ्मनःकायकर्मभिः।
अर्थप्राणाभिमानांश्च सद्गुरुभ्यो निवेदयेत्॥
एतस्मात्कारणादेव स्वातन्त्र्यरहितो भवेत्।'

इत्यत्र शिष्येण गुरवे स्वात्मसमर्पणप्रकारोऽभिधीयते। विषयोऽयमचिन्त्यविश्वसादाख्येऽपि सम्यक् प्रतिपाद्यते। यथा —

'शरीरमर्थं प्राणं च गुरवे संनिवेदयेत्'।
'चित्तं तु सकलं तस्मै गुरवे तु समर्पयेत्॥
स्वातन्त्र्यं चापि सर्वं च विसृज्य मनसा तदा।
वाचा च कर्मणा चैव गुर्वर्थं तु चरेद्बुधः॥' इति।

(**अचिन्त्यविश्वसादाख्ये** ३६.३४पू०, ३५, ३६पू०)

अत्र रौरवागमोक्तो विषयः सम्यग्विशदतया वर्ण्यत इति साजात्यं स्पष्टम्।
अयमेवार्थ उत्तरकामिकेऽपि सूच्यते। यथा —

'शरीरमर्थं प्राणं च सद्गुरुभ्यो निवेदयेत्।
दीर्घदण्डं नमस्कुर्यान्निर्लज्जो गुरुसंनिधौ॥' इति॥

(**उत्तरकामिके** टि० २९८(२) २०१, २०२पू०)

अस्मिन्पटले विद्यमानाः ४३उ० – ४८ श्लोकास्तथा ५१-५३ श्लोकाश्च रौरवसूत्रसंग्रहाख्ये रौरवविद्यापादेऽष्टमपटले दीक्षावर्गाख्ये किंचित्पाठभेदैः सह दृश्यन्ते। यथा —

जलं जले यथा क्षिप्तं क्षीरे क्षीरमिवार्पितम्।
तथैव ह्येकतां याति दीक्षामन्त्रेण मन्त्रवित्॥
यथा प्रदीप्ते ज्वलने तूलराशिः समर्पितः।
दग्धो निर्याति सर्वत्र न भूयस्तूलतां व्रजेत्॥
एवं वै मण्डलं प्राप्य दीक्षामन्त्रसमुद्भवम्।
न पुनर्जन्मतां याति दीक्षितो मनुजोत्तमः॥
भिन्ने देहे शिवो भूत्वा शिवधर्मैः समन्वितः।
शिवधर्ममनुप्राप्य ह्यविभागाय कल्पते॥
यथा समुद्रमासाद्य नदी मिष्टाम्बुवाहिनी।
क्षारतोयत्वमायाति प्रभावाद्धि महोदधेः॥
एवं वै भिन्नदेहस्तु शिवतत्त्वमुपागतः।
सकृत्समुद्रसंयोगाद्विभागो नैव कल्पते॥' इति।

(**रौरवे** विद्यापादे ८.७उ० – १३)

एते दीक्षाप्रशस्तिबोधकाः श्लोकाः ५८ तमे ज्ञानदीक्षाविधौ विद्यमानैः (४३उ० – ४८) श्लोकैः सह प्रायेण साजात्यं भजन्ते। यथा —

'जले जलं यथा क्षिप्तं क्षीरे क्षीरमिवार्पितम्।
तथैव ह्येकतां याति दीक्षामन्त्रेण मन्त्रवित्॥
यथा प्रदीप्ते ज्वलने तूलराशिः समर्पितः।

दग्धो निर्याति सर्वत्र न भूयस्तूलतां व्रजेत् ॥
एवं शैवाध्वरं प्राप्य दीक्षामन्त्रसमुद्भवम् ।
न पुनर्जन्मतां याति दीक्षितो मनुजोत्तमः ॥
भिन्ने देहे शिवो भूत्वा शिवधर्मैः समन्वितः ।
शिवानन्दमनुप्राप्य नाविर्भावाय कल्पते ॥
जलं सामुद्रमासाद्य नदी हृष्टाम्बुवाहिनी ।
क्षारतोयत्वमायाति प्रभावाद्धि महोदधेः ॥
एवं वै देहभिन्नात्मा शिवमेवाधिगच्छति ।' इति ।

(**रौरवे** ५८.४३ उ० – ४८)

एवं —

'यथा सूर्योदयं प्राप्य तमः क्षिप्रं विनश्यति ।
एवं दीक्षां समासाद्य धर्माधर्मैर्विमुच्यते ॥
यथा सूर्य इमाँल्लोकान्प्रकाशयति रश्मिभिः ।
तथा मन्त्राध्वरे देवः शक्तिभिस्तु प्रकाशते ॥'
'यथादित्यस्तु भूमिष्ठं रश्मिभिर्हरते मलम् ।
एवं शक्तिसमायोगाद्दीक्षिताद्धरते विभुः ॥' इति ।

(**रौरवे** विद्यापादे ८.३, ४, ६ उ०, ७ पू०)

एतेऽपि दीक्षाप्रशस्तिप्रतिपादकाः श्लोकाः ५८ तमे पटले ज्ञानदीक्षाविधौ विद्यमानैः (५१ – ५३) श्लोकैः प्रायेण समानाकारतया दृश्यन्ते । यथा —

'यथा सूर्योदयं प्राप्य तमः क्षिप्रं विनश्यति ।
एवं दीक्षां समासाद्य धर्माधर्मौ विनश्यतः ॥
यथा सूर्य इमाँल्लोकान्प्रकाशयति रश्मिभिः ।
तथा मन्त्रान्हरो देवः शक्तिभिस्तान्प्रकाशयेत् ॥
यथादित्यस्तु भूयिष्ठं रश्मिभिर्हरते जलम् ।
एवं शक्तिभिरीशोऽपि दीक्षिताद्धरते मलम् ॥' इति ।

(**रौरवे** ५८.५१ – ५३)

एवं ५८ तमे पटले दृश्यमाना दीक्षाप्रशस्तिप्रतिपादकाः (४३ उ० – ४८; ५१ – ५३) श्लोका रौरवे विद्यापादेऽष्टमपटले विद्यमानैः (३, ४, ६ उ० – १३) श्लोकैः प्रायेण समानाकारतया वर्तन्त इति साजात्यं स्पष्टं भवति। एवमष्टपञ्चाशपटले साजात्यं वैजात्यं च प्रादर्शि ।

**एकोनषष्टितमे पटले** नित्यपूजाविधौ २१२ श्लोका विद्यन्ते । अत्र बहवो विषया दृश्यन्ते । दशमपटले शिवार्चनविधौ ६६ श्लोका एव वर्तन्ते । एकोनषष्टितमे प्रोक्ता विषया बहवो नात्र दृश्यन्ते । उभयत्रापि नित्यपूजाविधिरेव प्रतिपाद्यते । उभयोः पटलयोर्विषये साजात्यं वैजात्यं च यथाकथंचिदभिधीयते । तत्र तावत् ५९ तमे पटले (१ – २२ पू०) श्लोकेषु 'शिवपूजाफलम्, आत्मार्थपरार्थपूजनयोर्लक्षणम्, आत्मार्थपरार्थयजनेऽधिकारिनिरूपणं, दीपान्त – हविष्यान्त – उत्सवान्त – नृत्तान्ताख्यानां चतुर्विधपूजनानां फलप्रदर्शनं, श्रेष्ठमध्यमकनिष्ठाख्यानां त्रिविधपूजनानां स्वरूपकथनमित्येते विषया निरूप्यन्ते । एतद्विषये साजात्यवैजात्यावगमाय मूलागमतस्तथोपागमतश्च यथासंभवं तत्र तत्र श्लोकाष्टिप्पण्यां प्रदर्शिताः । अत्र प्रदर्शिताः 'शिवपूजाफलादिश्रेष्ठमध्यमकनिष्ठरूपत्रिविधपूजनान्ता विषया रौरवे दशमपटले शिवार्चनविधौ नैव दृश्यन्त इति भेदो विशिष्यावगन्तव्यः ।

एतत्पटलस्थाः (१०, ११, १४ उ०; १५ पू०) श्लोका भीमसंहितायां प्रायेण समानाकारतया दृश्यन्ते। यथा —

'आदिशैव इति प्रोक्तः स शिवब्राह्मणो गुरुः।
तेषु वै भौतिकैरेव योग्या ये स्थापनादयः॥
भौतिकश्च सपत्नीको नैष्ठिकोऽथ विपत्निकः।
तेषु वै भौतिकः श्रेष्ठस्तदभावे तु नैष्ठिकः॥ इति।

(**वर्णाश्रमचन्द्रिकायाम्** ८० पृष्ठे 'भीमसंहितायाम्' इति निर्दिश्योद्धृतौ।)

'गोवत्समयभेदः स्यात्क्षीरवच्छिवमुच्यते।
शिवं सर्वगतं शान्तं भजेन्नित्यं शिवाश्रमी॥' इति।

(**ज्ञानावरणविळक्के** ४१३ पृष्ठे 'भीमसंहितायाम्' इति निर्दिश्योद्धृतः।)

एतच्छ्लोकत्रयं रौरवे प्रायेण समानाकारतया दृश्यते। यथा —
'आदिशैव इति प्रोक्तः स शिवब्राह्मणो गुरुः।
एषु वै भौतिकेष्वेव योग्यं संस्थापनार्चनम्॥
भौतिकश्च सपत्नीको नैष्ठिकोऽथ विपत्निकः।
शैवे च भौतिकः श्रेष्ठस्तदभावे तु नैष्ठिकः॥'
'गोवत्समयभेदः स्यात्क्षीरवच्छिव उच्यते।
शिवं सर्वगतं शान्तं यजेन्नित्यं शिवव्रती॥' इति।

एवं भीमसंहितायाः प्रकृतविषये रौरवागमेन सह साजात्यं वर्तत इति स्पष्टं भवति।

एवमेतत्पटलस्थाः (१७ उ० – २१) श्लोकाः प्रायेण समानाकारतया पूर्वकारणे दृश्यन्ते। यथा —

'स्वस्थनराक्षनिमिषचतुर्भागं क्षणं स्मृतम्।
तद्द्वयं तु लवं प्रोक्तं निमिषं तद्द्वयं भवेत्॥
निमिषैश्च त्रिभिः काष्ठा तिथिकाष्ठा कला स्मृता।
त्रिंशत्कला मुहूर्तं च तदेव घटिकाद्वयम्॥
सार्धेन नाडिकाः सप्त यामं तत्संधिरुच्यते।
संधयोऽष्टौ समाख्यातास्त्वहोरात्रं प्रजापते॥
यजनं प्रतियामं तु उत्तमं त्विति कीर्तितम्।
उदये चैव मध्याह्ने प्रदोषे चार्धयामके॥
यजनं मध्यमं मध्ये उदयेऽस्तमनेऽधमम्।' इति॥

(**पूर्वकारणे** ३१.२ – ६ पू०)

प्रायेण पूर्वनिर्दिष्टश्लोकसमानाकारतया रौरवश्लोका दृश्यन्ते। तथा —
'स्वस्थनराक्षनिमिषचतुर्भागस्त्रुटिः स्मृता।
तद्द्वयं तु लवः प्रोक्तो निमिषस्तद्द्वयं भवेत्॥
निमिषाः पञ्चदश काष्ठा तिथिकाष्ठाः कला स्मृता।
त्रिंशत्कला मुहूर्तं च तदेव घटिकाद्वयम्॥
सार्धास्तु नाडिकाः सप्त यामः स संधिरुच्यते।
संधयोऽष्टौ समाख्यातमहोरात्रं प्रजायते॥
यजनं प्रतियामं तु श्रेष्ठमित्यभिधीयते।

उदये चैव मध्याह्ने संध्याकालेऽर्धयामके ॥
यजनं मध्यमं मध्ये उदयेऽस्तमये तथा ।'' इति ।
(**रौरवे** ५९.१७ उ० – २१)

अत्र पूर्वकारणरौरवश्लोकानां प्रायेण समानाकारत्वमस्तीति स्पष्टं प्रतीयते। 'त्रुटिः' इत्यत्र पूर्वकारणे 'क्षणं' इति दृश्यते। सर्वमन्यत्समानतया वर्तते।

५९ तमेऽस्मिन्पटले (२२ उ० – २४ पू०) श्लोकयोः पूजाविषये 'संधिक्रमः' इति विषयः कथ्यते। अत्रैकसंधौ पूजायां स्नानार्चननिवेदनबलिदाननित्याग्निकार्यनित्योत्सवानां विषये कालनिरूपणं क्रियते। यथा —

'घटिके द्वे भवेत्स्नानं घटिकैकार्चने भवेत् ।
घटिकार्धं निवेद्यार्थं बलिदानं तु तत्समम् ॥
नित्याग्निकार्ये त्वर्धं च नित्योत्सवं त्रिनाडिकम् ।
एवं संधिक्रमः प्रोक्तो ह्यर्चयेद्देशिकोत्तमः ॥' इति ।
(**रौरवे** ५९.२२ उ० – २४ पू०)

अयमेव विषयो रौरवे नवमपटलेऽर्चनाङ्गविधौ प्रकारान्तरेणोच्यते। यथा —

'घटिका त्वभिषेकार्थं घटिका त्वर्चने भवेत् ।
पादं धूपार्थमित्युक्तं हविरर्थे त्रिपादकम् ॥
पादं नित्याग्निकार्यार्थमुत्सवार्थं द्विनाडिकम् ।
तदन्ते नृत्तगेयार्थं घटिकाद्वयमुच्यते ॥' इति ।
(**रौरवे** ९.९.१०)

अत्र स्नानार्चनधूपनैवेद्यनित्याग्निकार्यनित्योत्सवनृत्तगेयाख्यविषयेषु कालो विधीयते। ५९ तमे पटले स्नानार्चननैवेद्यबलिदाननित्याग्निकार्यनित्योत्सवविषयेषु कालोऽभिधीयत इति विषये भेदो दृश्यत इति वैजात्यं स्पष्टं भवति। कालनिरूपणविषयेऽपि भेदो दृश्यते। अयं विषयो विमर्शनीयः।

रौरवे ५९ तमे पटले (२२ उ० – २४ पू०) श्लोकयोः प्रतिपादितं संधिक्रमविषयं पूर्वकामिके पञ्चमपटले प्रतिपादितः कालविधिः प्रायेणानुसरति। यथा —

'घटिकाद्वितयं स्नाने घटिकैकार्चने भवेत् ।
घटिकार्धं निवेद्यार्थं बलिदानं तु तत्समम् ॥
नित्याग्निकार्यमर्धं च नित्योत्सवे द्विनाडिका ।
घटिकैका तु नृत्तार्थं काल एष प्रकीर्तितः ॥
एवं कालविधिः प्रोक्तो महासंध्यात्रयस्य तु ।' इति ॥
(**पूर्वकामिके** ५.६ उ० – ८)

अत्र ५९ तमे पटले (२२ उ० – २४ पू०) प्रोक्तवत् स्नानार्चननिवेदनबलिदाननित्याग्निकार्येषु कालविधिर्वर्तत इति साजात्यं स्पष्टम्। नित्योत्सवविषये रौरवे त्रिनाडिकं' इत्युक्तम्। नृत्तविषयस्तत्कालश्च न निरूप्यते। पूर्वकामिके नृत्तसहितनित्योत्सवविषये नाडिकात्रयं विधीयत इति व्याख्यातुं शक्यत्वादस्मिन् विषये पूर्वकामिकरौरवागमयोः प्रायेणार्थतः साजात्यं सम्यगस्तीति प्रतीयते।

ततः ५९ तमे पटले रौरवे (२४ उ० – २७ पू०) दशविधपूजाङ्गानि ज्ञात्वा ततः शिवपूजामुपक्रमेतेत्युक्त्वा तानि दशविधपूजाङ्गानि प्रदर्श्यन्ते। यथा —

'दशप्रकारपूजाङ्गं ज्ञात्वा पूजां समारभेत् ।
प्रथमं कायशुद्धिः स्यादात्मशुद्धिरतः परम् ॥

पुष्पशुद्धिर्यथामन्त्रं स्थानशुद्धिस्तथैव च।
द्रव्यशुद्धिस्तथा मन्त्रलिङ्गशुद्धिरतः परम्॥
पीठशुद्धिस्तथैव स्यादासनं कल्पयेत्क्रमात्।
एवं दशप्रकारेण पूजयेत्परमेश्वरम्॥' इति।

(**रौरवे** ५९.२४ उ० – २७ पू०)

अत्र 'काय – आत्म – पुष्प – स्थान – द्रव्य – मन्त्र – लिङ्ग – पीठशुद्धयः' इत्यष्टविधान्यङ्गान्येवाभिधीयन्ते। कायात्मशुद्ध्योर्विषये प्रत्येकं द्विविधत्वं शिवार्चनचन्द्रिकायामभिधीयते। यथा — 'अथ आत्मशुद्धिः, सा द्विविधा। पूजकजीवस्य शिवभावापादनात्मिका जीवशुद्धिरूपा, पूजकदेहस्य शिवदेहत्वापादनात्मिका देहशुद्धिरूपा च।' अथ देहशुद्धिः, सा द्विविधा सूक्ष्मदेहशुद्धिः स्थूलदेहशुद्धिश्च' इति। एतदनुसारेण कायात्मशुद्ध्योः प्रत्येकं द्विविधत्वाङ्गीकारे चतुर्विधशुद्धिरूपाङ्गचतुष्टयं सिद्धं भवति। अनेनाङ्गचतुष्टयेन सह पुष्प – स्थान – द्रव्य – मन्त्र – लिङ्ग – पीठशुद्ध्याख्यानामङ्गषट्कानां संकलनेन दशविधपूजाङ्गानि संभवन्ति। एवं शिवपूजाविषये दशाङ्गप्रतिपादनमत्रैव प्रोच्यते, नान्यत्रेति विशेषोऽवगन्तव्यः।

अजितागमे परमात्मशुद्धिविषये द्विविधत्वमुच्यते। यथा —

'आत्मशुद्धि ततः कुर्याद् द्विविधा सा प्रकीर्तिता।
आत्मनश्च शरीरस्याप्यात्मसंज्ञात्र कथ्यते॥
तयोस्तु शुद्धिरित्यात्मशुद्धिरेवं प्रकीर्तिता।' इति।

अत्र देहात्मनोः शुद्धिरात्मशुद्धिरित्यभिधीयते। तदनन्तरं स्थानशुद्धिर्द्रव्यशुद्धिर्मन्त्रशुद्धिर्लिङ्गशुद्धिश्च क्रमेणात्र प्रतिपाद्यन्ते। एवं च शिवपूजायामजितागमे पञ्चशुद्धय एवागमान्तरवत् प्रतिपादिता भवन्ति।

एवमेव शिवपूजायां पञ्चशुद्धिक्रम एव पूर्वकामिकपूर्वकारणदीप्तमकुटसुप्रभेदाख्येष्वागमेषु दृश्यते। यथा —

'आत्मशुद्धिक्रिया पूर्वा स्थानशुद्धिर्द्वितीयिका।
तृतीया द्रव्यशुद्धिः स्याच्चतुर्थं मन्त्रशोधनम्॥
पञ्चमी लिङ्गशुद्धिश्च कथ्यन्ते पञ्चशुद्धयः।' इति॥

(**पूर्वकामिके** ४.३७, ३८ पू०)

'आत्मशुद्धिस्तु पूर्वं स्यात्स्थानशुद्धिर्द्वितीयकम्।
तृतीयं द्रव्यशुद्धिः स्याच्चतुर्थं लिङ्गशोधनम्॥
पञ्चमं मन्त्रशुद्धिः स्यादित्येताः पञ्चशुद्धयः। इति।

(**पूर्वकारणे** ३०.४५ उ०, ४६)

'आत्मशुद्धिर्भवेत्पूर्वं स्थानशुद्धिर्द्वितीयकम्।
तृतीयं द्रव्यशुद्धिस्तु चतुर्थं लिङ्गशोधनम्॥
पञ्चमं मन्त्रशुद्धिस्तु उच्यन्ते पञ्चशुद्धयः।' इति।

(**दीप्ते** २३.२ उ०, ३)

'पञ्चशुद्धिक्रमं वक्ष्ये शृणुष्वैवं महेश्वर।
प्रथमं चात्मशुद्धिश्च द्वितीयं स्थानशोधनम्॥
तृतीयं द्रव्यशुद्धिः स्याच्चतुर्थं लिङ्गशोधनम्।
पञ्चमं मन्त्रशुद्धिस्तु वक्ष्यते च पृथक् पृथक्॥' इति।

(**मकुटे** ३.५६ उ० – ५८ पू०)

'पञ्चशुद्धिं समारभेत्।
देहं स्थानं तथा द्रव्यं मन्त्रं लिङ्गं च पञ्चकम्।
कुर्याच्छिवार्चनादौ तु तेषां क्रमं वदामि ते॥' इति।

(**सुप्रभेदे** क्रियापादे ८.१६, १७)

अत्र शुद्धिविषये प्रतिज्ञायां 'देहम्' निर्दिश्यते। अन्ते 'पूजयेद्धृदयेनैव आत्मशुद्धिस्तु कीर्तिता।'

(**सुप्रभेदे** क्रियापादे ८.५९ उ०)

इति निगद्यते। अतोऽजितागमप्रोक्तवद्देहात्मनोः शुद्धिरात्मशुद्धिरित्यभिधीयत इति भाति। एवमेव रौरवे दशमपटले शिवार्चनविधौ पञ्चशुद्धिक्रम एव निर्दिष्टः। यथा—

'आदावेवात्मशुद्धिं तु द्वितीयं स्थानशुद्धिकम्।
तृतीयं द्रव्यशुद्धिं तु चतुर्थं लिङ्गशुद्धिकम्॥
पञ्चमं मन्त्रशुद्धिं तु क्रमात्कुर्वीत देशिकः।' इति।

(**रौरवे** १०.२, ३ पू०)

एवं च प्रायेण सर्वेष्वागमेषु शिवपूजायां पञ्चशुद्धिक्रम एव दृश्यते। ५९ तमेऽस्मिन् पटले परं नित्यपूजायां दशविधपूजाङ्गानि प्रतिपाद्यन्त इति भेदो विशिष्य गणनीयो भवति।

ततः ५९ तमे पटले नित्यपूजाविधौ प्रतिज्ञानुसारेण प्रत्येकं द्विधाभूता कायशुद्धिरात्मशुद्धिश्च (२७ उ० – ५३) श्लोकेषु प्रतिपाद्येते। तत्र प्रथमं शौचाचमनस्नानादिदेवऋषितर्पणान्ताः क्रियाः कर्तव्यत्वेन सूच्यन्ते। ततो भूतशुद्धिप्रकारः, सृष्टिस्थितिसंहारभेदेन प्रत्येकं त्रिविधः करन्यासविधि-रङ्गन्यासविधिश्च प्रतिपाद्यन्ते। ततोऽन्तर्यागविधिर्विशिष्याभिधीयते। एवं कायात्मशुद्ध्योः प्रतिपादन-द्वारा दशविधपूजाङ्गेषु प्रतिज्ञातेष्वङ्गचतुष्टयं प्रतिपादितं भवति। एतद्विषये साजात्यावगमाय टिप्पण्यां प्रदर्शिताः सूक्ष्मागमश्लोका द्रष्टव्याः।

रौरवे दशमपटले शिवार्चनविधौ त्वात्मशुद्धिविषयोऽतीव संक्षेपेण कथ्यते।

'जलस्नानं पुरा कृत्वा मन्त्रस्नानमतः परम्।
भस्मस्नानं तृतीयं च रेचकादि चतुर्थकम्॥
पञ्चमं तु कलान्यासमन्तर्यागं तु षष्ठकम्।
यद्यत्तु पूजयेन्मन्त्री तत्तदात्मनि भावयेत्।
हृदीशमर्चयेन्नित्यं मनसा हविषान्तकम्॥
आत्मशुद्धिर्भवेदत्राप्यन्तर्यागस्तु षट्क्रियः।' इति॥

(**रौरवे** १०.३ उ० – ६ पू०)

अत्र स्नानाद्यन्तर्यागान्ताः क्रियाः कर्तव्यत्वेन सूच्यन्ते। न तु स्पष्टं प्रतिपाद्यन्ते। ५९ तमे पटले आत्मशुद्धिविषये क्रियाः स्पष्टमभिधीयन्त इति भेदोऽवगन्तव्यः।

ततः ५९ तमे पटले नित्यपूजाविधौ (५४ – ८६) श्लोकेषु प्रतिज्ञानुसारेण दशविधपूजाङ्गेषु पञ्चमपूजाङ्गत्वेन पुष्पशुद्धिरभिधीयते। अत्र सात्त्विकराजसतामसपुष्पाणां निर्देशस्तेषां फलं च प्रथमं निरूप्यते। ततः पूजार्हाणां पत्राणां निर्देशो निर्माल्यरहितपुष्पनिरूपणं, वर्ज्यपुष्पकथनं, प्रातरादि-कालेषु पूजायामुपयोक्तव्यपुष्पाणां निर्देशस्तथा सर्वसंधिषु पूज्यानां पत्राणां निरूपणमुत्तममध्यमाध-मपुष्पाणां निर्देशो वर्ज्यपत्रपुष्पनिरूपणमित्येते विषया निरूपिताः। 'पुष्पशुद्धिर्यथामन्त्रम्' (२५ उ०) इत्यत्र प्रतिज्ञास्थले यथामन्त्रं पुष्पशुद्धिरुच्यत इत्युक्तम्। मन्त्रप्रतिपादकग्रन्थः पुष्पशुद्धिविषये न दृश्यते। निर्माल्यरहितपुष्पनिरूपणावसरे तद्विषये परं शुद्धिविषयकमन्त्रो निरूपितः। यथा—

'पूजान्ते तु समादाय क्षालयेद्धृदयेन तु।
प्रोक्षयेत्पुरुषेणैव पूजयेत्तु पुनः पुनः।' इति॥
(**रौरवे** ५९.७३ उ०; ७४ पू०)

अत्र हृदयमन्त्रेण क्षालनं तत्पुरुषमन्त्रेण प्रोक्षणं च कर्तव्यमित्युच्यते। अत्र पुष्पशुद्धिविषये निर्दिष्टा विषया आगमान्तरेष्वर्चनाङ्गविधौ कथ्यन्ते। साजात्यवैजात्यावगमाय टिप्पण्यामागमान्तरश्लोका यथासंभवं तत्र तत्र प्रदर्शिताः।

पूर्वोक्तपुष्पविषये रौरवे नवमपटलेऽर्चनाङ्गविधौ प्रातरादिकालेषु पूजायामुपयोक्तव्यानि पुष्पाणि पत्राणि च परं सामान्यतो निर्दिश्यन्ते। नान्यानि सात्त्विकादीनि पुष्पाणि कथ्यन्ते। यथा—

'श्वेतपुष्पं तु पूर्वाह्णे मध्याह्ने रक्तपुष्पकम्।
पूर्वरात्रौ तु पीतं स्यादर्धरात्रौ तु मालती॥
प्रशस्तं सर्वदा पत्रमुग्रगन्धादिवर्जितम्।' इति॥
(**रौरवे** ९.६, ७ पू०)

अत्र पूर्वाह्णे मध्याह्ने पूर्वरात्रौ च क्रमेण श्वेतरक्तपीतपुष्पाणि पूजायामुपयोक्तव्यानीति सामान्येन पुष्पाणि निर्दिष्टानि। अर्धरात्रौ परं मालतीपुष्पमुपयोक्तव्यमिति पुष्पनाम प्रोक्तम्। श्वेतादिपुष्पविषये नामतो निर्देशो न विद्यते। एवं पत्रविषयेऽप्युग्रगन्धादिवर्जितं पत्रं सर्वकालेषु प्रशस्तमिति सामान्यत एव निर्देशो वर्तते।

५९ तमे पटले तु प्रातःकाले, मध्याह्ने, प्रदोषकाले अर्धयामे च पूजायामुपयोक्तव्यानां पुष्पाणां नामतो निर्देशो दृश्यते। पत्रविषये परमुक्तानि पत्राणि सर्वाणि सर्वसंध्यासु योग्यानीति सामान्येनोक्तम्। यथा—

'श्वेताम्बुजं च शुक्लार्कमागस्त्यं चैव मालतीम्।
नन्द्यावर्तं श्रियावर्तं पुन्नागं चैव पट्टिकाम्॥
द्विकर्णीं चैव लक्ष्मीं च वकुलं पाटलीं तथा।
वैजिकं च पलाशं च अशोकं शङ्खिनीं तथा॥
कदलीकुसुमं चैव प्रातःकाले तु दापयेत्।'
(**रौरवे** ५९.७८ उ० – ८०)

'करवीरं रक्तपद्मं पाटली बृहती तथा।
द्रोणपुष्पद्वयं चैव उत्पलं पद्मपुष्पकम्॥
धुत्तूरं चैव कोरण्डं मध्याह्ने तु प्रदापयेत्॥' इति॥
(**रौरवे** ५९.८१, ८२ पू०)

'भद्री चैव महाभद्री मल्लिका मालती तथा।
शङ्खिनीपुष्पकुरवं शमीपुष्पं च मौसली॥
अतसी बहुकर्णी च दापयेत्तु प्रदोषके।' इति॥
(**रौरवे** ५९.८२ उ० – ८३)

'जातिनीलोत्पलं चैव दान्तं बिल्वस्य पत्रकम्।
केतकी पृथिवीपद्ममर्धयामे प्रदापयेत्॥' इति॥
(**रौरवे** ५९.८४)

'उक्तानि सर्वपत्राणि सर्वसंध्यासु दापयेत्।' इति॥
(**रौरवे** ५९.८५ पू०)

अथ 'उक्तानि सर्वपत्राणि' इत्यस्य (५९.६५ उ० – ७१ पू०) श्लोकप्रोक्तानीत्यर्थोऽधिगन्तव्यः।

एवं प्रातरादिकालेषु पूजायामुपयोक्तव्यपुष्पाणां पत्राणां च विषये रौरवे ९.६, ७ पू० सार्धश्लोकप्रोक्तविषयस्य, रौरवे ५९.७८ उ० – ८५ पू० श्लोकप्रोक्तविषयस्य च परस्परं वैजात्यं पुष्पविषये वर्तत इति स्पष्टम्। पत्रविषये परमुभयत्रापि साजात्यं विद्यत इति विशेषोऽधिगन्तव्यः।

अस्मिन् ५९ तमे पटले नित्यपूजाविधावेव पुष्पशुद्धेः पृथक्तया परिगणनं कृत्वा प्रतिपादनं क्रियते। एवंरीत्या पुष्पशुद्धिप्रतिपादनमागमान्तरेषु न दृश्यते।

आगमान्तरेषु समन्त्रकं पुष्पशुद्धिर्द्रव्यशुद्धावन्तर्गतत्वेन प्रतिपाद्यते। तत्राजितपूर्वकामिकपूर्वकारण-दीप्तागमेषु प्रोक्तः पुष्पशुद्धिप्रकारः क्रमेण निरूप्यते।

'गन्धपुष्पादिकं यत्तद् द्रव्यं संप्रोक्ष्य चास्त्रतः।
अभ्युक्ष्य कवचेनाथ मन्त्रसंहितयालभेत्॥
द्रव्यशुद्धिर्विधातव्या' इति।

(**अजिते** २०.११५, ११६ पू०)

अत्र पुष्पविषयेऽस्त्रमन्त्रेण प्रोक्षणं कवचमन्त्रेणाभ्युक्षणं संहितामन्त्रेणालभनं च विधेयमित्युच्यते।

'गन्धं पुष्पं च धूपं च दीपमर्घ्यं निवेद्यकम्।
दधिक्षीरघृतादींश्च प्रोक्षयेद्धृदयेन तु॥
'गन्धं वस्त्रं भूषणं च नैवेद्यं कुसुमं तथा।
सद्यवाममहाघोरनरेशैरभिमन्त्रयेत्॥' इति॥

(**पूर्वकामिके** ४.२१३, २१७ उ०; २१८ पू०)

अत्र हृदयमन्त्रेण प्रोक्षणं संहितामन्त्रेणाभिमन्त्रणं च पुष्पविषये शुद्ध्यर्थं कर्तव्यमित्यभिधीयते।

'क्षीरं दधिघृतादींश्च गन्धं पुष्पं च धूपकम्।
वर्धनीतोयमादाय प्रोक्षयेत्पुरुषेण तु॥
द्रव्यशुद्धिर्भवेदेवम्।' इति।

(**पूर्वकारणे** ३०.१५१ उ०, १५२; **दीप्ते** २३.३०, ३१ पू०)

अत्र पुष्पविषये वर्धनीतोयेन तत्पुरुषमन्त्रेण प्रोक्षणं कर्तव्यमिति शुद्धिप्रकारः पूर्वकारणदीप्तागमयोः कथितः। एवं चागमान्तरेषु पुष्पशुद्धिर्द्रव्यशुद्ध्यन्तर्गतत्वेन प्रतिपाद्यते। न तु पुष्पशुद्धिः पृथक्तया परिगण्यते। ५९ तमे पटले नित्यपूजाविधावेव पुष्पशुद्धिः पृथक्तया परिगण्यत इति भेदोऽत्र विशिष्याधिगन्तव्यः।

ततः ५९ तमे पटले नित्यपूजाविधौ पुष्पशुद्ध्यनन्तरं (८७ – ९०) श्लोकेषु द्वारपूजाविषये सामान्यविधिरुच्यते। यथा --

'द्वारपूजाविधिं शृणु।
द्वारोर्ध्वे दक्षिणे विघ्नं तस्य वामे तु वाक्पतिम्॥
द्वारस्य सव्यपार्श्वे तु जाह्नवीं संप्रपूजयेत्।
यमुनां तस्य वामे तु द्वाराग्रे वृषभं न्यसेत्।
कवाटे दक्षिणे वामे विमलं च सुबाहुकम्।
तयोर्मध्ये यजेल्लक्ष्मीं तस्याधः पृथिवीं न्यसेत्॥
ज्ञानशक्तिं यजेत्सव्ये क्रियाशक्तिं तु वामके।'
एवं सामान्यमाख्यातम्' इति।

(**रौरवे** ५९.८७ – ९०)

अत्र द्वारोर्ध्वे दक्षिणभागे विघ्नेशं वामभागे सरस्वतीं तथा विघ्नेशसरस्वत्योर्मध्ये लक्ष्मीं च पूजयेत्। द्वारस्याधः पृथिवीं, सव्ये ज्ञानशक्तिं, वामे क्रियाशक्तिं च पूजयेत्। द्वारसव्यपार्श्वे गङ्गां, द्वारवामपार्श्वे यमुनां तथा द्वाराग्रे वृषभं च पूजयेत्। कवाटे दक्षिणे वामे च क्रमेण विमलं सुबाहुं च पूजयेदित्युच्यते।

रौरवे दशमपटले शिवार्चनविधौ (१३ – १७ पू०) श्लोकेषु द्वारपूजाविधिः प्रकारान्तरेण दृश्यते। यथा —

'द्वारान्तिके युगाश्रे च हस्तमात्रे तु मण्डले।
ब्रह्माणमर्चयित्वा तु दीपान्तं ब्रह्ममन्त्रतः॥
तद्द्वास्य प्रवेशे तु द्वारस्थांश्च समर्चयेत्।
दक्षिणेऽदक्षिणे नन्दिकालौ च क्रमशो यजेत्॥
भुवङ्गं च पतङ्गं चाप्यूर्ध्वाधस्तात्सुपूजयेत्।
विमलं च सुबाहुं च पूजयेत्तु कवाटयोः॥
स्कन्दं वै पट्टिकामध्ये विघ्नेशं दक्षिणे यजेत्।
श्रीदेवीं मध्यतो यष्ट्वा वागीशीमुत्तरे यजेत्॥
दीपान्तमर्चयेदेतान्स्वस्वमन्त्रमुदाहरन्।' इति।

(**रौरवे** १०.१३ – १७ पू०);

अत्र द्वारसमीपे हस्तमात्रपरिमिते चतुरश्रमण्डले ब्रह्माणस्तन्मन्त्रेण दीपान्तमर्चनं कृत्वा तन्मण्डलमुद्वासयेदिति ब्रह्मपूजा प्रथमं प्रतिपाद्यते। ततो द्वारस्थान्देवान्पूजयेदित्युक्त्वा तेषां पूजाकरणप्रकारोऽभिधीयते। तत्र द्वारस्य दक्षिणवामभागयोः क्रमेण नन्दिकालौ, तथा द्वारोर्ध्वाधः क्रमेण भुवङ्गपतङ्गौ च पूजयेत्। द्वारोर्ध्वपट्टिकाया मध्ये स्कन्दं, पट्टिकाया दक्षिणोत्तरभागयोर्विघ्नेशसरस्वत्यौ, तथा विघ्नेशसरस्वत्योर्मध्ये लक्ष्मीं च पूजयेत्। कवाटे क्रमेण दक्षिणवामभागयोर्विमलं सुबाहुं च पूजयेदित्युच्यते।

रौरवे दशमपटले शिवार्चनविधौ द्वारपूजाविषये प्रतिपादिता द्वारान्तिके कर्तव्या ब्रह्मपूजा, तथा द्वारोर्ध्वाधः क्रमेण कर्तव्या भुवङ्गपतङ्गयोः पूजा, द्वारोर्ध्वपट्टिकामध्ये कर्तव्या स्कन्दपूजा च ५९ तमे पटले नित्यपूजाविधौ न दृश्यन्ते। एवं ५९ तमे पटले नित्यपूजाविधौ द्वारपूजाविषये प्रतिपादिता द्वाराग्रे कर्तव्या वृषभपूजा, तथा द्वारस्याधः कर्तव्या पृथिवीपूजा, तथा तत्र सव्ये वामे च क्रमेण कर्तव्या ज्ञानशक्तिक्रियाशक्त्योः पूजा च दशमपटले न दृश्यन्त इति भेदोऽवगन्तव्यः। अपि च ५९ तमे पटले प्रकृतविषये द्वारदक्षिणवामभागयोः क्रमेण गङ्गायमुनयोः पूजा कर्तव्येत्युच्यते। दशमपटले तु तत्र नन्दिकालयोः पूजा करणीयेत्युच्यत इत्यपरो भेदो ज्ञातव्यः। कवाटे दक्षिणवामभागयोः कर्तव्या विमलसुबाहुपूजा, तथा द्वारोर्ध्वे कर्तव्या विघ्नेशसरस्वत्योः पूजा तयोर्मध्ये कर्तव्या लक्ष्मीपूजा चोभयत्रापि समानतया वर्तत इति साजात्यमधिगन्तव्यम्। एवं सामान्यद्वारपूजाविषये साजात्यं वैजात्यं च न्यरूपि।

ततः ५९ तमे पटले नित्यपूजाविधौ (९१ – ९८) श्लोकेषु द्वारपूजाविषये विशेषप्रकारोऽभिधीयते। तत्र चतुर्द्वारेषु पूजनीयानामष्टद्वारपालानां नन्द्यादीनां स्वरूपमायुधानि च प्रदर्श्य तेषां पूजाविधिर्लेशतः प्रतिपाद्यते। तत्र प्राग्द्वारे नन्दिकालौ, दक्षिणद्वारे अनन्तपशुपती, पश्चिमद्वारे दण्डिमुण्डिनौ, उत्तरद्वारे विजयभृङ्गीशौ च पूजनीयावित्युच्यते। रौरवे दशमपटले शिवार्चनविधौ नायं विषयो दृश्यते। किं तु रौरवे ३२ तमे पटले द्वारपालप्रतिष्ठाविधौ चतुर्द्वारेषु पूजनीयानामष्टद्वारपालानां नामवर्णायुधस्थानलक्षणानि सम्यक् प्रतिपाद्यन्ते। यथा —

'नन्दिकालौ तु पूर्वे तु दक्षिणेऽदक्षिणे स्थितौ॥
दण्डिमुण्डी अवाच्यां तु विजयो भृङ्गिरेव च।

वारुणे रक्षकावेतौ गोपत्यनन्तकाविमौ ॥
उत्तरद्वाररक्षार्थं दक्षिणेऽदक्षिणे न्यसेत् ।
श्यामाभकुङ्कुमाभौ च नन्दिकालौ क्रमात्स्थितौ ॥
इन्द्रगोपनिभौ चैव मयूरस्येव कन्धरम् ।
अवाच्यां द्वारिकौ भासां पद्मरागाभनीलकौ ॥
वारुणे द्वारपालौ तु सितकालाभावुत्तरे ।
दण्डं गदा च खड्गश्च त्रिशूलं भिन्दिपालकः ॥
वेत्रं गदा च वज्रं च नन्द्यादीनां तु चिह्नकम् ।
त्रिनेत्राश्चतुर्भुजाः सर्वे त्वतिरौद्राः सदंष्ट्रकाः ॥
जटामकुटयुक्ताश्च करण्डं वा किरीटकम् ।
द्वारपार्श्वकहस्तौ द्वौ पूर्वे चिह्नं परेऽञ्जलिः ॥
अग्रहस्तद्वयोः पूर्वे सूच्यन्ये हरपल्लवम् ।
हस्तानां वेशनीत्रं चाप्युद्धृतालम्बनं तथा ॥
शृङ्गारं युक्तितः कुर्यात्सर्वाभरणवासधृत् ।
सुस्थितो द्वारपार्श्वाङ्घ्रिरन्याङ्घ्रितलमुद्धृतम् ॥
चिह्नदण्डे निधातव्यमुद्धृताङ्घ्रितलं रुरो ।
अन्यद्भङ्गत्रयं त्विष्टभङ्गस्थानकमेव वा ॥
सुस्थितो द्वारपार्श्वेऽङ्घ्रिरन्यत्कुञ्चितमाचरेत् ।' इति ।

(**रौरवे** ३२.६ उ० – १६ पू०)

अत्र 'पूर्वद्वारे नन्दिकालौ, दक्षिणद्वारे दण्डिमुण्डिनौ, पश्चिमद्वारे विजयभृङ्गी, उत्तरद्वारे गोपत्यनन्तकौ' इति चतुर्द्वारपालानां नामानि निर्दिश्यन्ते ।

५९ तमे पटले तु 'पूर्वद्वारे नन्दिकालौ, दक्षिणद्वारे अनन्तपशुपती, पश्चिमद्वारे दण्डिमुण्डिनौ, उत्तरद्वारे विजयभृङ्गीशौ' इति चतुर्द्वारपालानां नामानि प्रोक्तानि । उभयत्रापि पूर्वद्वारपालनाम परं समानतया वर्तते । अन्यत्सर्वं भिन्नतया दृश्यत इति वैजात्यमवगन्तव्यम् । चतुर्द्वारपालानां वर्णायुधादिविषये आगमान्तरप्रोक्तसाजात्यं वैजात्यं च रौरवागमद्वितीयभागे उपोद्घाते ३२ तमपटलार्थसंग्रहे (२६, २७ पुटयोः) सम्यक् प्रतिपादितमस्ति । एवं रौरवोत्तरागमोपोद्घाते ७५, ७६ पुटयोर्द्वारपालप्रतिष्ठाविधिसाजात्यवैजात्यविचारेऽप्ययं विषयोऽभिहितोऽस्ति । एतदुभयमप्यत्र द्रष्टव्यम् ।

द्वारपूजाया अनन्तरं रौरवे ५९ तमे पटले नित्यपूजाविधौ (९९ उ० – १०२ पू० श्लोकेषु) सद्योजातमन्त्रमुच्चरन्नग्रमण्टपं प्रविश्य वास्तोष्पतेति मन्त्रेण वास्तुदेवताविषये गन्धपुष्पार्चनं कृत्वा महाघण्टां ताडयेदित्युक्त्वा महाघण्टाताडनकालो विधीयते । घण्टाध्वनिं श्रुत्वा राक्षसानां विनाशः स्यादिति चोच्यते । यथा —

'सद्योजातं समुच्चार्य प्रविश्येशाग्रमण्टपम् ।
वास्तोष्पतेति मन्त्रेण ऐशान्यां वास्तुदैवते ॥
गन्धपुष्पं बलिं दत्त्वा महाघण्टां प्रताडयेत् ।
स्नानारम्भे तदन्ते तु अर्चनान्ते निवेद्यके ॥
होमान्ते चोत्सवान्ते च नृत्तान्ते घोषयेत्क्रमात्' । इति ॥

(**रौरवे** ५९.९९ उ० – १०२ पू०)

रौरवे दशमपटले शिवार्चनविधौ द्वारपूजाया अनन्तरं दृश्यमानो विषयः प्रकारान्तरेण वर्तते । यथा —

'अस्त्रेण ताडयेद्घण्टां पटमस्त्रेण संव्रजेत्।
गर्भगेहं प्रविश्याथ धूपं दीपं च दापयेत्॥
पुष्पाञ्जलिकरः स्थित्वा क्षुरिकेणैव पूजयेत्॥ इति॥

(**रौरवे** १०.१७ उ०, १८)

अत्रास्त्रमन्त्रेण घण्टाताडनं कुर्यात्। ततोऽस्त्रमन्त्रेणैव तिरस्करिणीपटं वर्जयित्वा गर्भगृहं प्रविश्य धूपदीपौ प्रदाय, पुष्पाञ्जलिकरः स्थित्वा क्षुरिकामन्त्रेण पूजयेदित्युच्यते। अत्र घण्टाताडनमुभयत्रापि समानतया वर्तते। अन्यत्सर्वं भिन्नतया विद्यत इति वैजात्यं स्पष्टम्।

ततो रौरवे ५९ तमे पटले नित्यपूजाविधौ १०२ उ०, १०३ श्लोकयोः प्रतिज्ञानुसारेण दशविध-पूजाङ्गेषु षष्ठपूजाङ्गत्वेन स्थानशुद्धिरभिधीयते। यथा —

'स्थानशुद्धिं ततः कृत्वा गोमयेनोपलेपयेत्।
तन्मध्ये वसुधां यष्ट्वा दिग्बन्धं चास्त्रमन्त्रतः॥
स्थानशुद्धिरिति ख्याता' इति।

(**रौरवे** ५९.१०२ उ०; १०३)

गोमयोपलेपनेन पूजास्थानस्य शुद्धिं कृत्वा तन्मध्ये भूमिं संपूज्यास्त्रमन्त्रेण दिग्बन्धनं कुर्यादित्यु-च्यते। भूमिपूजात्र सूच्यते, न तु स्पष्टं प्रतिपाद्यते।

रौरवे दशमपटले शिवार्चनविधौ (६ उ०, ७ पू०) श्लोके स्थानशुद्धिरुच्यते। यथा —

'मार्जनालेपने चैव शिवाद्भिः प्रोक्षणं ततः।
स्थानशुद्धिरिति ख्याता' इति।

(**रौरवे** १०.६ उ०, ७ पू०)

अत्र पूजास्थाने मार्जनं गोमयालेपनं च कृत्वा शिवाम्भसा प्रोक्षणं कुर्यादित्युच्यते। भूमिपूजा दिग्बन्धकरणं च न प्रतिपाद्यत इति वैजात्यं स्पष्टम्। उभयत्रापि गोमयालेपनमुक्तमिति साजा-त्यमप्यस्तीत्यवगन्तव्यम्।

शिवाम्भःसाधनप्रकार उत्तरकामिके प्रायश्चित्तविधौ प्रतिपादितः। यथा —

'कुम्भे वा कलशे वाथ स्थण्डिलोपरि संस्थिते।
सूत्रवस्त्रसुवर्णाम्बुकूर्चचन्दनसंयुते॥
शिवेनाङ्गैः समभ्यर्च्य ब्रह्मभिस्तत्स्थितोदकम्।
शिवाम्भ इति निर्दिष्टम्' इति।

(**उत्तरकामिके** ३०.४४, ४५)

अत्र सूत्रवस्त्रकूर्चाद्यलंकृतमम्बुपूरितं कुम्भं कलशं वा स्थण्डिले संस्थाप्य तत्रस्थमुदकं शिवमन्त्रेण तथाङ्गब्रह्ममन्त्रैश्चाभिमन्त्रयेत्। तदम्भः शिवाम्भ इत्युच्यते। प्रकृतेऽयं शिवाम्भःसाधनप्रकारोऽव-गन्तव्यः। स्थानशुद्धिविषये आगमान्तरप्रोक्तं साजात्यं वैजात्यं च रौरवे द्वितीयभागे उपोद्घाते २२ तमे पुटे प्रदर्शितमस्ति। सोऽयं विषयोऽत्र ज्ञातव्यः।

ततो रौरवे ५९ तमे पटले नित्यपूजाविधौ प्रतिज्ञानुसारेण दशविधपूजाङ्गेषु सप्तमाङ्गत्वेन द्रव्यशुद्धिरभिधीयते। यथा —

'पाद्याचमनपात्रकम्॥
अर्घ्यपात्रं शरावं च शङ्खं भाण्डं च क्षालयेत्।
निरीक्ष्य हृदयेनैव कवचेनावकुण्ठयेत्॥
वस्त्रपूतेन तोयेन वर्धनीं च प्रपूरयेत्।

पञ्चब्रह्मषडङ्गैश्च शिवमन्त्रेण तज्जलम् ॥
धेनुमुद्रां दर्शयित्वा सर्वपात्राणि प्रोक्षयेत् ।
यववेणूंस्तथा दूर्वाः कुशांश्चैव शिवाम्भसा ॥' इति ॥

(**रौरवे** ५९.१०३ उ० – १०६)

अत्र पाद्याचमनार्घ्यपात्राणां तथा शरावशङ्खभाण्डानां च शुद्धिप्रकारः प्रथमं कथ्यते। तत्र पूर्वोक्तपात्राणां प्रक्षालनं कृत्वा हृदयमन्त्रेण निरीक्षणं कवचमन्त्रेणावकुण्ठनं कर्तव्यमित्युच्यते। प्रक्षालनविषये मन्त्रो न निर्दिष्टः। ततो वर्धन्यां वस्त्रपूतं तोयं प्रपूर्य तस्मिञ्जले पञ्चब्रह्मषडङ्गमन्त्रैः शिवमन्त्रेण चाभिमन्त्रणं कृत्वा धेनुमुद्रां प्रदर्श्य पूर्वोक्तसर्वपात्राणि तेन वर्धनीस्थतोयेन प्रोक्षणं कुर्यादित्युच्यते। यववेणुदूर्वाकुशानां शुद्धौ शिवाम्भःप्रोक्षणं विधीयते। यवादिविषये शुद्ध्यर्थं मन्त्रो न निर्दिश्यते। शिवाम्भःसाधनप्रकारः स्थानशुद्धिविषये पूर्वं प्रदर्शितः। सोऽयमत्रावधेयः।

रौरवे दशमपटले शिवार्चनविधौ तु द्रव्यशुद्धिप्रकारोऽतीव संक्षेपेण प्रतिपाद्यते। यथा —

'द्रव्यं पाद्यादिकं ततः।
साधयित्वात्र पात्रेषु शोधयेदस्त्रमन्त्रतः ॥
प्रोक्षयेत्पुरुषेणैवमेतत्स्याद् द्रव्यशुद्धिकम्।' इति ॥

(**रौरवे** १०.७, ८ पू०);

अत्र पाद्यादिपात्रसाधनं कृत्वास्त्रमन्त्रेण शोधनं तत्पुरुषमन्त्रेण प्रोक्षणं च कुर्यादिति क्रियाकलापः संक्षेपेण कथ्यत इति वैजात्यं स्पष्टम्।

ततो रौरवे ५९ तमे पटले नित्यपूजाविधौ १०७ उ० – ११६ श्लोकेषु पाद्याचमनार्घ्यविषये उत्तममध्यमकन्यसा इति प्रकारत्रयं प्रतिपाद्यते। अस्मिन्विषये रौरवे नवमपटलेऽर्चनाङ्गविधौ पाद्याचमनयोर्विषय एक एव प्रकार उच्यते। अर्घ्यविषये परं प्रकारत्रयमभिधीयते। यथा —

'सिद्धार्थचन्दनं दूर्वा चोशीरं पाद्यमुच्यते।
लवङ्गजातीकर्पूरमेलालकसमन्वितम् ॥
द्रव्यमाचमनार्थं तु प्रोच्यते तु शिवाम्भसा।
जलं क्षीरं कुशाग्रं च यवसिद्धार्थतण्डुलम् ॥
तिलं व्रीहिसमायुक्तमर्घ्यमष्टाङ्गमुच्यते।
साक्षतं यवव्रीहि च सर्षपार्घ्यमितीरितम् ॥
व्रीहितण्डुलसंमिश्रमच्युतं तत्प्रकीर्तितम्।' ॥इति ॥'

(**रौरवे** ९.१ उ० – ४)

एवं पाद्याचमनार्घ्यविषये वैजात्यमस्तीत्यवगन्तव्यम्।

ततो रौरवे ५९ तमे पटले नित्यपूजाविधौ धूपविषये उत्तममध्यमकन्यसा इति प्रकारत्रयं ११७ – १२१ श्लोकेषु विस्तारेण कथ्यते। रौरवे नवमपटलेऽर्चनाङ्गविधौ तु धूपविषये प्रकारत्रयं संग्रहेण निरूप्यते। यथा —

'गुग्गुलं गोघृतं वापि अगरुर्वाथ धूपकम्।' इति ॥

(**रौरवे** ९.७ उ०)

एवं धूपविषये साजात्यं वैजात्यं चास्तीत्यवगन्तव्यम्।

रौरवे नवमपटलेऽर्चनाङ्गविधौ दीपविषये दीपद्रव्यं त्रिविधं प्रदर्श्य तत्रोत्तममध्यमकन्यसप्रकारा उच्यन्ते। यथा —

'गव्याज्यमुत्तमं दीपं तैलं मध्यममुच्यते।
अनाज्यं कन्यसं ख्यातं पुन्नागं मधुकं तु वा॥'' इति॥

(**रौरवे** ९.८)

अत्र गोघृतमुत्तमं तैलं मध्यममनाज्यं पुन्नागमधुकयोः स्नेहः कन्यस इत्युच्यते।
रौरवे ५९ तमे पटले नित्यपूजाविधौ तु दीपविषयद्रव्यप्रतिपादकग्रन्थो न दृश्यते।
रौरवे ५९ तमे पटले नित्यपूजाविधौ धूपविषयप्रतिपादनानन्तरं पूजायामर्घ्यगन्धपुष्पवारिदानकाला निरूप्यन्ते। यथा —

'आवाहनान्ते पूजान्ते विसर्जनेऽर्घ्यं प्रदापयेत्।
अर्घ्ये विलेपने स्नाने त्रिषु गन्धं सुयोजयेत्॥
आवाहनार्घ्यपाद्येषु स्नाने धूपे विलेपने।
नैवेद्ये च विसर्गे च पुष्पमष्टसु योजयेत्॥
तत्कालं तु विसृज्याथ सप्तवारि नियोजयेत्।' इति॥

(**रौरवे** ५९.१२२ – १२४ पू०)

अत्रावाहनान्ते पूजान्ते विसर्जने चार्घ्यं त्रिषु कालेषु प्रदद्यात्। अर्घ्यविलेपनस्नानेषु त्रिषु कालेषु गन्धदानं कुर्यात्। आवाहनार्घ्यपाद्यस्नानधूपविलेपननैवेद्यविसर्जनेष्वष्टसु कालेषु पुष्पदानं कर्तव्यम्। पूर्वोक्तकालेषु प्रथममावाहनकालं विना सप्तसु कालेषु वारिदानं करणीयमित्युच्यते।
पूर्वोक्तो विषयो रौरवे दशमपटले शिवार्चनविधौ प्रायेण सदृशतया प्रतिपाद्यते। यथा —

'अष्टपुष्पं त्रिगन्धं च सप्तवारि तथैव च।
त्रिषु चार्घ्यं तथा धूपो रुरो शृणु यथाक्रमम्॥
आवाहनार्घ्यपाद्ये च स्नानधूपविलेपने।
नैवेद्ये च विसर्गे च पुष्पमष्टसु योजयेत्॥
अर्घ्ये विलेपने स्नाने त्रिषु गन्धं सुयोजयेत्।
आवाहने तथा चार्घ्ये पाद्ये स्नाने तथैव च॥
आचमने निवेद्ये च विसर्गे सप्तवारि वै।
आवाहनान्ते पूजान्ते विसर्गे च त्रिधार्घ्यकम्॥
आसनार्चनकाले च पूजान्ते च विशेषतः।
सप्तदशोपचारान्ते धूपकालास्त्रयः स्मृताः॥' इति॥

(**रौरवे** १०.५६ – ६०)

अर्घ्यदानकालो गन्धदानकालः पुष्पदानकालश्चोभयत्र समानतया प्रोक्त इति साजात्यं स्पष्टम्। वारिदानविषये परमुभयत्र भेदो दृश्यते। रौरवे ५९ तमपटले अर्घ्यपाद्यस्नानधूपविलेपननिवेदनविसर्जनाख्येषु सप्तकालेषु वारिदानं कर्तव्यमित्युच्यते। रौरवे दशमपटले तु आवाहनार्घ्यपाद्यस्नानाचमननिवेदनविसर्जनाख्येषु सप्तसु कालेषु वारिदानं प्रोक्तमिति वैजात्यमवगन्तव्यम्। धूपकालो ५९ तमे पटले नोक्तः। दशमपटले आसनार्चने पूजान्ते सप्तदशोपचारान्ते च धूपः कर्तव्य इति धूपकालः प्रोक्त इति विशेषोऽवगन्तव्यः। विषयोऽयं रौरवे द्वितीयभागे उपोद्घाते २३ तमे पुटेऽपि विचारितोऽस्ति। सोऽप्यत्रावलोकनीयः। रौरवे ५९ तमे पटले द्रव्यशुद्धिप्रकारनिरूपणावसरे प्रसङ्गात्पाद्याचमनार्घ्यधूपानां तथार्घ्यादिदानकालस्य च प्रतिपादनं कृतम्। ततः १२४ उ०; १२५ श्लोकयोः स्नानोदकपाद्याद्युदकगन्धपुष्पनिवेद्यकानां तथा क्षीरदधिघृतादीनां च शिवाम्भःप्रोक्षणेन शुद्धिरित्युक्त्वा द्रव्यशुद्धिप्रकारः समाप्यते। यथा —

'स्नानोदकं च पाद्यादिगन्धपुष्पनिवेद्यकम् ।
क्षीरं दधिघृतादीनि प्रोक्षयेत्तु शिवाम्भसा ॥
द्रव्यशुद्धिर्भवेदेवम्'॥ इति॥

(**रौरवे** ५९.१२४ उ०, १२५)

ततो रौरवे ५९ तमे पटले नित्यपूजाविधौ प्रतिज्ञानुसारेण दशविधपूजाङ्गेषु अष्टमपूजाङ्गत्वेन मन्त्रशुद्धिप्रतिपादनोपक्रमः सूच्यते। ग्रन्थपातवशान्मन्त्रशुद्धिप्रतिपादकग्रन्थोऽत्र लुप्तो भवति। मन्त्रशुद्धिप्रतिपादकग्रन्थो दीप्तागमश्लोकानुसारेण पूरितः। यथा —

'मन्त्रशुद्धिमथ श्रृणु।
ओंकारदीपिता मन्त्रा नमस्कारान्तयोजिताः॥
अर्चने तु प्रयोक्तव्या मन्त्राश्चामोघशक्तयः।' इति॥

(**रौरवे** ५९.१२५ उ०, १२६)

रौरवे दशमपटले शिवार्चनविधौ तु मन्त्रशुद्धिविषयः प्रकारान्तरेण दृश्यते। यथा —

'अन्यूनाधिकवर्णं तु सर्वान्मन्त्रान्समुच्चरेत्।
ऊनवर्णेन मृत्युः स्यादधिके शोकसंभवः॥
स्वरहीने विपत्तिः स्यात्तस्मान्मन्त्रं सुशोधयेत्।' इति॥

(**रौरवे** १०.११, १२ पू०)

अत्र वर्णहीने मृत्युर्वर्णाधिक्ये शोकः स्वरहीने विपच्च संभवेत्। अतोऽन्यूनाधिकवर्णं यथास्वरं मन्त्रोच्चारणं कुर्यात्। ततो मन्त्रं सुशोधयेदित्युच्यते। शोधनप्रकारो न निर्दिश्यते। एवं च मन्त्रशुद्धिविषये वैजात्यं स्पष्टं भवति। अस्मिन्विषये आगमान्तरसाजात्यवैजात्यावगमाय टिप्पण्यां प्रदर्शिता आगमश्लोकास्तथा रौरवद्वितीयभागोपोद्घाते २२ तमे पुटे प्रतिपादितविषयाश्चावलोकनीयाः।

ततो रौरवे ५९ तमे पटले नित्यपूजाविधौ मन्त्रशुद्धेरनन्तरं (१२७ – १३२ पू० श्लोकेषु) पूजाकाले तिरस्करिण्या आवश्यकता प्रतिपाद्यते। यथा —

'अस्त्रेणैव तु मन्त्रेण महाघण्टां प्रताडयेत्।
क्षिपेत्ततो यवनिकां ब्रह्ममन्त्रं समुच्चरन्॥
वेदविक्रयकाश्चापि तन्त्रविक्रयका अपि।
पापक्रूरपरिभ्रष्टनास्तिकाः श्रुतिदूषकाः॥
दुश्चर्मकुष्ठसंयुक्ताः शिवद्रव्यापहारिणः।
गुरुद्रव्यापहारी च गुरुरोगी च पातकी॥
दुर्मुखश्च दुराचारो मूर्खाश्च गुरुनिन्दकाः।
कुनखाः कुब्जकाश्चैव गोलका एकचक्षुषः॥
अङ्गहीनः सुरासेवी वेश्यामिश्रणचारिणः।
लिङ्गच्छेदकविच्छिन्नान्वर्जयेच्छिवदर्शने॥
प्रमादाद्दर्शनं कृत्वा तत्पूजा निष्फला भवेत्।' इति॥

(**रौरवे** ५९.१२७ – १३२ पू०)

अत्र (५९.१२७ तमे श्लोके) घण्टाताडने तिरस्करिणीपटप्रक्षेपे च क्रमेणास्त्रमन्त्रो ब्रह्ममन्त्रश्चाभिहितः। अस्मिन्विषये रौरवे दशमपटले शिवार्चनविधौ घण्टाताडने तथा तिरस्करिणीपटवर्जने चास्त्रमन्त्रो विधीयते। यथा —

अस्त्रेण ताडयेद्घण्टां पटमस्त्रेण संवृजेत्।' इति॥

(**रौरवे** १०.१७ उ०)

अत्र घण्टाताडनविषयेऽस्त्रमन्त्रविधानमुभयत्रापि सदृशतया विद्यते। पटप्रच्छादने ब्रह्ममन्त्रः ५९ तमे पटलेऽभिहितः। सोऽयं विषयो रौरवे दशमपटले शिवार्चनविधौ नोक्तः। एवं पूजायां तिरस्करिण्या आवश्यकताप्रतिपादकग्रन्थोऽपि रौरवे दशमपटले शिवार्चनविधौ न दृश्यते। तिरस्करिण्या आवश्यकताप्रतिपादकग्रन्थः पूर्वकारणागमे नित्यार्चनविधौ दृश्यते। पूर्वकारणागमश्लोका अत्र टिप्पण्यां प्रदर्शिताः।

ततो रौरवे ५९ तमे पटले (१३२ उ० – १३५ पू० श्लोकेषु) तिरस्करिणीपटप्रक्षेपकालस्तद्विसर्जनकालश्चाभिधीयते। यथा —

'त्रिकालेषु पटं दत्त्वा स्नाने धूपे तथोत्सवे॥
शेषकालेषु सर्वेषु पटं न परिवेष्टयेत्।
अथवान्यप्रकारेण पटकालो विशेषतः॥
पूजाकाले तु नैवेद्ये पुष्पालंकरणे ततः।
मुद्रादर्शनकाले तु हेमरत्नादियोजने॥
एवमादिषु कालेषु प्रच्छन्नपटमारभेत्।' इति॥

(**रौरवे** ५९.१३२ उ० – १३५ पू०)

अत्र यवनिकाप्रक्षेपे तद्विसर्जने च प्रथमं संग्रहेण कालं प्रदर्श्य, पश्चाद्यवनिकाप्रक्षेपकालो विशिष्य स्पष्टं निरूप्यते॥

रौरवे दशमपटले प्रच्छन्नपटकालः परमेवं प्रतिपाद्यते। यथा —

'स्नाने पुष्पार्चने काले नैवेद्ये च तथैव च।
शुद्धनृत्तावसाने च प्रच्छन्नपटकालकः॥' इति॥

(**रौरवे** १०.६१)

प्रच्छन्नपटविसर्जनकालो रौरवे दशमपटले न दृश्यते।

प्रच्छन्नपटक्षेपणकालस्तद्विसर्जनकालश्च सुप्रभेदागमे स्पष्टतयाभिधीयते। यथा —

'निर्माल्योद्वासने काले स्नानान्ते तु विशेषतः॥
हविष्यादौ च नृत्तान्ते कुर्याद्यवनिकां ततः।
स्नानारम्भे तथा धूपे हविष्यान्ते तथैव च॥
नित्योत्सवादिकाले च पटप्रच्छादनं भवेत्।' इति॥

(**सुप्रभेदे** ८.७७ उ० – ७९ पू०)

अयं विषयः साजात्यवैजात्यावगमाय द्रष्टव्यः।

ततो रौरवे ५९ तमे पटले नित्यपूजाविधौ (१३५ उ० – १४३ श्लोकेषु) प्रतिज्ञानुसारेण नवमदशमपूजाङ्गत्वेन लिङ्गशुद्धिः पीठशुद्धिश्च प्रतिपाद्येते। तत्र दैविकमार्षं गाणपं मानुषमिति चतुर्विधलिङ्गानि निर्दिश्य लिङ्गशोधनप्रकारः समन्त्रकं निरूप्यते। तत्रास्त्रमन्त्रेण शुद्धतोयेन लिङ्गं शोधयेदिति सामान्यतो लिङ्गशोधनप्रकारो निरूपितः। ततो लिङ्गस्य मूर्धदेशे ईशानमन्त्रेण संस्पृशेत्। तत्पुरुषमन्त्रेण लिङ्गमुखदेशं संस्पृशेत्। अघोरमन्त्रेण लिङ्गदक्षिणपार्श्वं संस्पृशेत्। लिङ्गवामपार्श्वं वामदेवमन्त्रेण संस्पृशेत्। लिङ्गस्य पृष्ठे पादभागे च सद्योजातमन्त्रेण संस्पृशेदिति लिङ्गशुद्धिप्रकारः कथ्यते। मनोन्मनीमूलमन्त्रेण पीठशुद्धिं कुर्यात्। ततो महापट्टैरुपानान्तं देव्यङ्गमन्त्रैः संस्पृशेदिति पीठशुद्धिप्रकारोऽभिधीयते। एवं प्रतिज्ञानुसारेण दशविधपूजाङ्गानि प्रतिपादितानि। सर्वेष्वागमेषूपलभ्यमानेषु लिङ्गशुद्ध्यन्तर्गतत्वेन पीठशुद्धिरुच्यते। रौरवे ५९ तमे पटले नित्यपूजाविधावेव पीठशुद्धेः पृथक्तया परिगणनं दृश्यते। परं तु प्रतिपादनावसरे लिङ्गशुद्धिः पीठशुद्धिश्च पृथक्तया न प्रतिपादिता।

रौरवे दशमपटले शिवार्चनविधौ (८ उ० – १० श्लोकेषु) लिङ्गशुद्धिप्रकारोऽभिधीयते। यथा —

'लिङ्गं पीठं स्थलं सर्वं शुद्धं कुर्याच्छिवाम्भसा।
लिङ्गशुद्धिं शिवास्त्रेण पीठं पाशुपतास्त्रतः॥
विद्याङ्गास्त्रेण मन्त्रेण स्थलशुद्धिं समाचरेत्।
शिवाद्भिः क्षाल्य शोष्यैस्तु शिखिपिञ्छैर्विशेषतः॥
सोमेश्वरादिबिम्बं च संमृजेद्बिम्बशुद्धिकम्।' इति॥

(**रौरवे** १०.८ उ० – १०)

अत्र लिङ्गं पीठं तत्रत्यं सर्वस्थलं च शिवाम्भसा शुद्धं कुर्यात्। ततः शिवास्त्रमन्त्रेण लिङ्गशुद्धिः, पाशुपतास्त्रमन्त्रेण पीठशुद्धिः, विद्याङ्गास्त्रमन्त्रेण स्थलशुद्धिश्च कर्तव्येति लिङ्गपीठयोः शुद्धिस्तत्रत्यस्थलशुद्धिश्च समन्त्रकं प्रतिपाद्यते। ततः शिवाम्भसा प्रक्षालनं शिखिपिञ्छैः शोषणं च कर्तव्यमित्युच्यते। सोमेश्वरादिबिम्बशुद्धिश्चैवं करणीयेति बिम्बशुद्धिप्रकारः सूच्यते। लिङ्गपीठशुद्धिविषये मन्त्रविषयकभेदो बहुधा वर्तत इति वैजात्यं स्पष्टं भवति। सोमेश्वरादिबिम्बशुद्धिसूचनं ५९ तमे पटले न दृश्यत इत्यपरं वैजात्यमस्तीत्यवगन्तव्यम्।

ततो रौरवे ५९ तमे पटले नित्यपूजाविधौ प्रतिज्ञानुसारेण दशविधपूजाङ्गानां लिङ्गपीठशुद्ध्यन्तानां प्रतिपादनानन्तरं (१४३ उ०–१४५ पू०) श्लोकयोर्गुरुपूजा प्रतिपाद्यते। यथा —

'पश्चात्संपूजयेद्गुरुम्।
शिरोर्ध्वे कल्पयेत्पद्मं साष्टपत्रं सकर्णिकम्॥
स्वगुरुं पूजयेन्मध्ये तस्य शक्तिसमन्वितम्।
तस्माद् गुरूपदेशेन यष्ट्वा देवं सदाशिवम्॥' इति॥

(**रौरवे** ५९.१४३ उ०–१४५ पू०)

अत्र गुरुपूजाकरणप्रकारो निरूप्यते। गुरुपूजाविषयेऽचिन्त्यविश्वसादाख्ये प्रोक्तो विषयो यथावल्लिख्यते। यथा —

'ऐशान्ये स्वगुरौ भक्त्या चासनं पूजयेत्ततः।
ओं गुं गुर्वासनाय नमश्चैवं तु कल्पयेत्॥' इति॥

(**अचिन्त्यविश्वसादाख्ये** १२.५२ उ०; ५३ पू०)

गुरुपूजाविषये क्रियादीपिकायां प्रदर्शितो विषयो लिख्यते। यथा —

'मुख्यैशान्ये दक्षिणामुखं स्वगुरुं गुरुपादुकां वा गन्धादिषु वा शिवमन्त्रेण आवाहनादिजपान्तं पूजयित्वा, स्वामिन् भवदुपदिष्टमार्गेण शिवं पूजयाम्यनुज्ञां देहीति प्रार्थयेत्।' इति॥

(**क्रियादीपिकायाम्** पृ० ५६)

अत्र विषये पूर्वकामिके प्रदर्शितो विषयो लिख्यते —

'गणेशं पीठवायव्यां गन्धपुष्पादिभिर्यजेत्।
ऐशान्यां गुरुपङ्क्तीश्च पूजयेद्धृदयेन तु॥' इति॥

(**पूर्वकामिके** ४.२८७)

एवं गुरुपूजाविषयेऽचिन्त्यविश्वसादाख्यप्रोक्तो विषयस्तथा क्रियादीपिकाप्रोक्तो विषयो लिङ्गशुद्ध्यनन्तरं पूर्वकामिकप्रोक्तविषयश्च साजात्यप्रदर्शनाय तदीयग्रन्थमूलतः प्रदर्शितः। गुरुपूजाविषयोऽयं रौरवे दशमपटले शिवार्चनविधौ न दृश्यत इति वैजात्यमवगन्तव्यम्।

गुरुपूजानन्तरं रौरवे ५९ तमे पटले (१४५ उ० – १६४ श्लोकेषु) शिवासनकल्पनप्रकारो निरू-

प्यते। तत्र अनन्तासनसिंहासनयोगासनपद्मासनविमलासनाख्यानि पञ्चासनानि क्रमेणोपर्युपरि कल्पनीयानीत्युक्त्वा तेषां पञ्चानामासनानां लक्षणं विस्तरेणाभिधीयते।

रौरवे दशमपटले शिवार्चनविधौ पञ्चासनकल्पनप्रकारोऽतीव संक्षेपेण (२० – २९ श्लोकेषु) प्रतिपादितः। पञ्चासनकल्पने क्रम उभयत्रापि समानतया विद्यते। लक्षणकथनावसरे ५९ तमे पटले बहवो विषया अधिकतया प्रोच्यन्ते। आसनकल्पनविषये आगमान्तरेषु प्रोक्तो भेदोऽजितागमे प्रथमभागे २१७ तमे पुटे टिप्पण्यां प्रदर्शितोऽस्ति। सोऽयं विषयोऽत्रावलोकनीयः।

ततो रौरवे ५९ तमे पटले नित्यपूजाविधौ पञ्चासनकल्पनकथनानन्तरं (१६५ – १७३ पू० श्लोकेषु) 'चन्द्रार्कनाशनयुक्तकाले पूजा कर्तव्या' इत्ययं विषयो नन्दिकेश्वरप्रश्नस्य भगवदीश्वरसमाधानकथनरूपेण निरूप्यते।

चन्द्रार्कनाशनयुक्तकालविवरणमत्र टिप्पण्यां सम्यक् प्रदर्शितम्। योगिनामन्तर्यागप्रकरणे वक्तव्योऽयं विषयः पूजाप्रस्तावादत्रोच्यत इति भाति।

नन्दिकेश्वरो रुरुणा गुरुवंशकथनावसरे दशसु गुरुषु मध्ये शास्त्रवक्तृत्वेन परिगण्यते। अयं विषयो रौरवसूत्रसंग्रहे तृतीयपटले तन्त्रावतारे ५ – ११ श्लोकेषु दृश्यते। अस्मिन्नित्यपूजाविधौ ५९ तमे पटले परं नन्दिकेश्वरप्रस्तावो दृश्यते। विषयोऽयं विमर्शनार्हः।

'चन्द्रार्कनाशनयुक्तकाल एव पूजा कर्तव्या' इत्ययं विषयः पूर्वकामिकेऽर्चनविधौ अन्तर्यागविषये प्रोच्यते। यथा —

'चन्द्रार्कोदयतः पूजा वृथा क्लेशो भविष्यति।
चन्द्रार्कनाशने पूजा साधयेदीप्सितं फलम्॥
सुषुम्नामध्यगे प्राणे पूजयेत्सर्वदेवताः।' इति॥

(**पूर्वकामिके** ४.१९४ उ०; १९५)

एवं पूर्वकारणेऽपि नित्यार्चनविधौ दृश्यते। यथा —

'यजनेऽर्केन्दुसंचारे निष्फलं तदवाप्नुयात्।
चन्द्रार्कनाशयजनं सर्वसिद्धिकरं शुभम्॥' इति॥

(**पूर्वकारणे** ३०.६ उ०; ७ पू० पृ० २०८)

पूर्वकामिके पूर्वकारणे च चन्द्रार्कनाशनयुक्तकालेऽनुष्ठितं पूजनमेवेप्सितफलसाधकं भवेदित्युच्यते। 'चन्द्रार्कनाशनयुक्तकाल एव पूजा कर्तव्या' इत्ययं विषयो रौरवे दशमपटले शिवार्चनविधौ न दृश्यत इति वैजात्यमवगन्तव्यम्।

ततो रौरवे ५९ तमे पटले नित्यपूजाविधौ (१७३ उ० – १९१ श्लोकेषु) लिङ्गपूजाविधिः कथ्यते। तत्र प्रथमं (१७३ उ० – १७६ पू०) श्लोकेषु मानुषादन्येषु पूर्वनिर्दिष्टेषु दैविकार्षगाणपाख्येषु लिङ्गेषु विषये आवाहनमुद्वासनमुभयमपि न कर्तव्यम्। सर्वत्र सदाशिवस्याभिमुखीकरणमावाहनं भवति। पूजापरिसमाप्तौ सदाशिवस्य विमुखीकरणमुद्वासनं भवति। उद्वासनमेव विसर्जनमित्युच्यते। सर्वेषां लिङ्गानां परिवृतेषु पञ्चमुखेषु स्नानद्रव्यैर्गन्धपुष्पैश्च पूजयेदित्युक्त्वा लिङ्गपूजा पारभ्यते।

रौरवे दशमपटले शिवार्चनविधौ पूर्वोक्तविषयो न दृश्यत इति भेदोऽवगन्तव्यः।

ततो ५९ तमे पटले १७६ उ० – १९१ श्लोकेषु लिङ्गपूजाप्रकारोऽभिधीयते। तत्र आवाहनमुद्रया लिङ्गे शिवमावाह्य स्थापनमुद्रया संस्थाप्य ध्वजमुद्रया संनिधानं कारयित्वा तत्पुरुषमन्त्रेण निरोधयेदिति आवाहनस्थापनसंनिधाननिरोधनाख्याः चतुःसंस्काराः प्रतिपादिताः। निरोधनविषये मन्त्रो निर्दिश्यते, न मुद्रोक्ता। ततः सद्योजातादिपञ्चब्रह्ममन्त्रैर्लिङ्गमुद्रया च लिङ्गमभ्यर्चयेत्। ततो देवं सदाशिवं लिङ्गे ध्यायेदिति ध्यानकरणं सूच्यते। ध्यानप्रकारो न कथ्यते। ततः सद्योजातमन्त्रेण

पादभागे पाद्यं, वामदेवमन्त्रेण मुखेष्वाचमनमघोरमन्त्रेण शिरस्यर्घ्यं च समर्पयेदिति पाद्याचमनार्घ्य-प्रदानप्रकारो निरूप्यते। ततः 'पञ्चाङ्गमन्त्रै रुद्रसूक्तैश्च जलाभिषेकं कुर्यात्। गन्धद्वारेति मन्त्रेण गन्धोदकस्नापनं, तत्तन्मन्त्रैः क्षीरदधिघृतमधुशर्कराभिषेकं, हिरण्यवर्णेति मन्त्रेण हेमरत्नोदकाभिषेकं च कुर्यात्। ततो व्योमव्यापिमन्त्रेण शुद्धजलाभिषेचनं कर्तव्यमित्यभिषेकप्रकारो निरूप्यते। ततो लिङ्ग-पीठयोर्वस्त्रेण मार्जनं कृत्वा, ईशानमन्त्रेण शिरसि पुष्पसमर्पणं वस्त्रदानं च कुर्यात्। पश्चादुपवीतोत्तरीयभूषणगन्धपुष्पाणि हृदयमन्त्रेण दद्यादित्यलंकरणप्रकारः कथ्यते। ततो घण्टां ताडयित्वा ब्रह्ममन्त्रेण यवनिकां प्रक्षिप्य धूपदीपौ प्रदाय पुनराचमनं दत्त्वा सद्योजातमन्त्रेणार्घ्यं समर्पयेत्। ततो हृदयमन्त्रेण नैवेद्यं दत्त्वास्त्रमन्त्रेण उद्वर्तनं कृत्वा ताम्बूलं निवेदयेत्। ततः शास्त्रदृष्टेन मार्गेण नीराजनं कुर्यात्। त्रियम्बकेति मन्त्रेण शिवस्य भस्मरक्षां कुर्यात्। ततः पञ्चवक्त्रेषु मुखवासं दद्यादित्युक्त्वा मुखवाससाधनप्रकारो वर्ण्यते। ततो द्वारादिबलिपीठान्तं बलिं दद्यादिति बलिदानविधिः सूच्यते। एवं लिङ्गपूजाविधिः प्रतिपाद्यते। ततो नित्याग्निं कुर्यादित्युच्यते। एवं रौरवे ५९ तमे पटले प्रोक्तो लिङ्गपूजाप्रकारो निरूपितः। रौरवे दशमपटले शिवार्चनविधौ (३० – ४७ पृ० श्लोकेषु) लिङ्गार्चन-प्रकारः कथ्यते। तत्रादौ मूलमन्त्रेण सद्योजातमन्त्रेण च लिङ्गे शिवं समावाह्य, आसनोपरि लिङ्गे सदाशिवं ध्यायेदित्युक्त्वा सदाशिवध्यानप्रकारः सम्यक्प्रतिपाद्यते। ततो मनोन्मनीध्यानप्रकारं सम्यक्प्रतिपाद्य तां तन्मूलमन्त्रेण लिङ्गे वामदेवपार्श्वे ध्यायेदित्युच्यते। ततः सद्योजातमन्त्रेणावाहनं वामदेव-मन्त्रेण स्थापनमघोरमन्त्रेण संनिधानं तत्पुरुषमन्त्रेण निरोधनं च कुर्यादित्यावाहनस्थापनसंनिधाननि-रोधनाख्यचतुःसंस्कारनिर्वर्तनप्रकारोऽभिधीयते। तत ईशानमन्त्रेण स्वागतनिवेदनं कर्तव्यमित्युच्यते। ततो लिङ्गस्य वारुणे ब्रह्ममूर्तिं, सौम्ये शिवं, पूर्वतो मूर्ध्नि ईशानं, दक्षिणे ईश्वरं, लिङ्गोर्ध्वे सदाशिवं च विन्यसेदिति पञ्चमूर्तिन्यासोऽभिहितः। ततः पञ्चमूर्तीनां वर्णाः प्रतिपाद्यन्ते। तत एवं सूक्ष्मतनुं प्रकल्प्य तस्यामङ्गप्रत्यङ्गोपाङ्गन्यासं कृत्वा मूलमन्त्रं च न्यसेदित्युच्यते। ततो मकुटात्पादपर्यन्त-मष्टत्रिंशत्कलान्यासं समाचरेदित्युच्यते। ततस्तत्पुरुषमन्त्रेण निरोधनमाचरेदित्युच्यते। ततः पाद्याचम-नार्घ्याणि हृदयमन्त्रेण दद्यादिति पाद्याचमनार्घ्यप्रदानप्रकारः कथ्यते। पञ्चब्रह्ममन्त्रैरङ्गमन्त्रैः, व्योमव्यापिमन्त्रेण च जलाभिषेकः कर्तव्यः। सद्योजातमन्त्रेण पञ्चगव्याभिषेकं कुर्यात्। हरिद्रामलकतैललेपनं हृदयमन्त्रेण कुर्यादित्यभिषेकप्रकारो निरूपितः। ततो वस्त्राभरणगन्धपुष्पधूपहविष्यताम्बूलानि हृदयमन्त्रेण दद्यादिति लिङ्गपूजाविधिरभिधीयते।

लिङ्गपूजाविषये ५९ तमपटलप्रोक्तविषयस्य दशमपटलप्रोक्तविषयस्य च बहवो भेदाः सन्ति। उदाहरणाय केषुचिद्विषयेषु भेदाभेदौ निरूप्येते। ५९ तमे पटले आवाहनस्थापनसंनिधानानि मुद्रया कर्तव्यानीत्युच्यते। १० तमे पटले तु सद्योजातवामदेवाघोरमन्त्रैः कर्तव्यानीत्युच्यते। निरोधनविषये परमुभयत्रापि तत्पुरुषमन्त्रेण कर्तव्यमित्युच्यते। अतो निरोधनविषये साजात्यमावाहनादिविषये वैजात्यं विद्यत इति स्पष्टम्। सद्योजातादिपञ्चब्रह्ममन्त्रैर्लिङ्गमुद्रया च लिङ्गमभ्यर्चयेदित्युक्तिर्दशमपटले न विद्यत इति भेदोऽवगन्तव्यः। लिङ्गे सदाशिवस्यैकस्य ध्यानं कर्तव्यमिति ५९ तमे पटले प्रोच्यते। अत्र विषये दशमपटले सदाशिवमनोन्मन्योरुभयोरपि लिङ्गे ध्यानं करणीयमित्युच्यत इति साजात्यं वैजात्यं चास्तीति ज्ञातव्यम्। एवं पाद्याचमनार्घ्यदानविषये ५९ तमे पटले सद्यमन्त्रेण पाद्यं वाम-देवमन्त्रेणाचमनमघोरमन्त्रेणार्घ्यं च दातव्यमिति कथ्यते। अत्र विषये दशमपटले पाद्यादित्रयमपि हृदयमन्त्रेण दातव्यमित्युच्यत इति भेदोऽवगन्तव्यः।

५९ तमे पटले जलाभिषेको व्योमव्यापिमन्त्रेण विधेय इत्युच्यते। अत्र विषये दशमपटले पञ्च-ब्रह्ममन्त्रैरङ्गमन्त्रैर्व्योमव्यापिमन्त्रेण च जलाभिषेकः करणीय इत्यभिधीयते। अत्र साजात्यं वैजात्यं च विद्यत इति स्पष्टम्। दशमपटले पञ्चमूर्तिकल्पनं, तत्राङ्गप्रत्यङ्गोपाङ्गन्यासो मूलमन्त्रन्यासो

मकुटात् पादपर्यन्तमष्टत्रिंशत्कलान्यासश्च करणीय इत्युच्यते। सोऽयं विषयो ५९ तमे पटले न विद्यते। एवमेवान्यत्र विषयेऽपि साजात्यं वैजात्यं चोहनीयम्। रौरवे दशमपटले लिङ्गपूजानन्तरं सोमेशस्य पूजाविधानमभिधीयते। सोमेशस्थापनविधौ ३४ तमे पटले लिङ्गस्यापरभागे सोमेशो भद्रपीठे स्थापनीय इत्युच्यते। प्रतिमाकरणं वर्णलेपनादिप्रकारेण कर्तव्यमिति चोक्तम्। तत्प्रतिमाया अभिषेकानर्हत्वात्तदीयाभिषेको लिङ्ग एव करणीय इति सूचयित्वा सोमेशपूजाविधिः प्रतिपादितः। सोमेशप्रस्तावो रौरवे ५९ तमे पटले नित्यपूजाविधौ न दृश्यत इत्यपि भेदोऽधिगन्तव्यः। लिङ्गपूजाविषये साजात्यं वैजात्यं च यथाकथंचित्प्रादर्शि। ततो रौरवे ५९ तमे पटले लिङ्गपूजानन्तरमावरणार्चनं (१९२ – २१२ श्लोकेषु) कथ्यते। तत्र गर्भावरण – विद्येशावरण – गणेशावरण – लोकेशावरणास्त्रेशावरणाख्यानि पञ्चावरणानि सशक्तिकं पूजनीयानीति प्रतिज्ञाय पञ्चावरणपूजा प्रतिपाद्यते। प्रत्यावरणं शक्तयश्च निर्दिश्यन्ते। रौरवे दशमपटले शिवार्चनविधौ (६२ – ६६ श्लोकेषु) संक्षेपतः पञ्चावरणार्चनं प्रोच्यते। तत्र प्रथमावरणे विद्येशाः पूजनीया इत्युच्यते। द्वितीयावरणे गौरीमारभ्य चण्डेश्वरान्तं पूजयेदित्युच्यते। एतेन प्रथमे विद्येशावरणं द्वितीये गणेशावरणं च पूजनीयमित्युक्तं भवति। तृतीयावरणे भवाद्यष्टमूर्तयः पूजनीया इत्युच्यते। चतुर्थे पञ्चमे च इन्द्रादिलोकपाला वज्राद्यस्त्राणि च पूजयेदित्युच्यते। अत्रावरणविषये शक्तयो न निर्दिश्यन्ते। अयं विषयोऽवश्यमवगन्तव्यः। रौरवे ५९ तमे पटले आवरणार्चने शक्तयोऽप्यर्चनीया इत्युक्तम्। सोमेश्वरादिदेवानां विषये एकावरणार्चनं करणीयमित्युच्यते। एवमावरणार्चनविषये नितरां वैजात्यमस्तीति स्पष्टम्। आवरणार्चनविषये आगमान्तरप्रोक्तसाजात्यवैजात्यविचारो रौरवागमे प्रथमभागे ४४ पृष्ठे टिप्पण्यां तथा सार्धत्रिशतिकालोत्तरोपोद्घाते (६६ – ६९ पुटेषु) प्रतिपादितोऽस्ति। सोऽयमत्रावलोकनीयः। एवं ५९ तमे पटले साजात्यं वैजात्यं च प्रादर्शि।

**षष्टितमे पटले** मठप्रतिष्ठाविधौ विद्यमानाः (१ – ८ श्लोकाः) सोमशम्भुपद्धतिस्थमठप्रतिष्ठाविधिश्लोकैः प्रायेण समानाकारा दृश्यन्ते। अतो मातृकायामदृश्यमानाः (९ – १२) श्लोकास्तदीयैः श्लोकैरेव पूरिताः।

अत्र चत्वरे शिवकुम्भस्यैकस्यैवोदगाननत्वेन स्थापनमुच्यते। यथा —

'चतुष्के विन्यसेत्कुम्भं धान्यस्थमुदगाननम्।' इति॥

(**रौरवे** ६०.५ उ०)

अचिन्त्यविश्वसादाख्ये तु शिवकुम्भं संस्थाप्य वेदिकायामन्यानुदगाननांश्चतुष्कुम्भान् स्थापयेदिति पञ्चकुम्भस्थापनमभिधीयते। यथा —

'शिवकुम्भं च संस्थाप्य' ---------
'यजमानः सुलग्ने तु स्नातश्च कृतमङ्गलः॥
चतुष्कुम्भान्न्यसेद्धीमान्वेदिकायामुदङ्मुखान्'। इति॥

(**अचिन्त्यविश्वसादाख्ये** ७३.१३ उ०; १५ उ०; १६ पू०)

सूक्ष्मागमे नवकुम्भस्थापनं कृत्वा मध्यकुम्भे शिवं पूजयेत्। परितोऽष्टसु कुम्भेषु विद्येशानष्ट पूजयेदित्युच्यते। यथा —

'नव कुम्भांश्च संस्थाप्य मध्यकुम्भे शिवं यजेत्।
पूजां पूर्वोक्तवद्धीमान्गन्धादिभिर्यथाक्रमात्॥
विद्येशान्परितो यष्ट्वा पूर्वादीशान्तकं क्रमात्।
गन्धपुष्पैश्च धूपैश्च नैवेद्यान्तैः प्रपूजयेत्॥' इति॥

(**सूक्ष्मे** ७९ तमे पटले (टि० १९१ पृ० ४१६)

एवं कुम्भस्थापनविषये आगमान्तरवैजात्यं प्रादर्शि।

अत्र षष्ठश्लोकपूर्वार्धे विप्रदैवज्ञशिल्पिभ्यो दक्षिणां दद्यादित्युच्यते। अयमेव विषयोऽचिन्त्यविश्वसादाख्ये किंचिद्विशेषेणाभिधीयते। यथा —

'ब्राह्मणानां च दानं च दैवज्ञाय विशेषतः।
शिल्पिने च ततो दद्याद्यथाविभवविस्तरम्॥' इति॥

(**अचिन्त्यविश्वसादाख्ये** ७३.१६ उ०, १७ पू०)

सूक्ष्मागमे त्वाचार्यसाधकादीनां वस्त्रभूषणदानं कुर्यादित्युच्यते। यथा —

'आचार्यसाधकादीनां दापयेद्वस्त्रभूषणम्।' इति॥

(**सूक्ष्मे** ७९ तमे पटले (टि० १९१ पृ० ४१६)

एवं दक्षिणादानविषये साजात्यं वैशिष्टयं वैजात्यं च प्रत्यपादि।

अस्मिन्पटले (६ उ० – ८) श्लोकेषु वेदिकायां मण्डले द्वारकुम्भपूजा, वास्तुपूजा, मठावयवेषु जगती – पादपीठ – जङ्घा – कपोत – छदनेषु पञ्चसु यथाक्रमं निवृत्त्यादि – पञ्चकलान्यासः, हृदयमन्त्रेण शक्तिपूजा, ध्यानपूर्वकं स्वस्वनामभिर्द्वारपालपूजा च कर्तव्येत्युच्यते। अयं विषयोऽचिन्त्यविश्वसादाख्ये प्रायेणार्थतः शब्दतश्च सदृशतया दृश्यते। यथा —

'पूजयेत्पूर्वतः कुम्भान्वास्तुं द्विकरमण्डले।
जगत्यां पादपीठे च जङ्घायां च कपोतके॥
भेदने च [छदने च] यथासंख्यं निवृत्त्यादिकला न्यसेत्।
हृदयेन समभ्यर्च्य शक्ति दिक्पालकानपि।
व्या[इत्यावाह्य] स्वसंज्ञाभिः पूजयेद्ध्यानपूर्वकम्॥' इति॥

(**अचिन्त्यविश्वसादाख्ये** ७३.१७ उ० – १९)

अत्र द्वारपालकपूजास्थाने दिक्पालकपूजा प्रोच्यत इति किंचिद्वैजात्यमस्ति। अन्यत् सर्वं सदृशतया वर्तत इति साजात्यं स्पष्टम्।

सूक्ष्मागमेऽस्मिन्विषये द्वारकुम्भपूजा, यागमण्डपपूजा, मठावयवेषु जगती – कण्ठ – पट्टिका – अङ्घ्रि – कपोतेषु पञ्चसु स्थानेषु यथाक्रमं निवृत्त्यादिपञ्चकलामन्त्रैः पूजा, द्वारे द्वाराधिपपूजा च कर्तव्येत्युच्यते। यथा —

'तोरणं द्वारकुम्भांश्च यागपूजां समाप्य च।
'मठान्तर्जगतीकण्ठपट्टिकाङ्घ्रिकपोतकम्॥
एतेषु पञ्चस्थानेषु सुगन्धेन विलिप्य च।
निवृत्त्यादिकलामन्त्रानर्चयित्वा क्रमेण तु॥
धूपदीपादिकं दत्त्वा द्वारे द्वाराधिपान्यजेत्'। इति॥

(**सूक्ष्मे** ७९ (टि० १९१ पृ० ४१६, ४१७)

अत्र वास्तुपूजा शक्तिपूजा च नास्ति। मठावयवेषु नामभेदश्चास्तीति वैजात्यं स्पष्टम्।

अत्र (९ – ११) श्लोकेषु 'वह्न्यागारं गत्वा वास्तुदेवतानिवृत्त्यादिपञ्चकलाभ्यस्तथा द्वारपालेभ्यश्च स्वस्वसन्त्रैर्जुहुयात्। ततो दिग्बलिं विधायाचम्य सकलीकरणं कृत्वा मठालयोपरि वीजपूराम्रनारङ्गकपित्थादिफलरसैः कुम्भतोयैश्चाभिषेचनं कुर्यादिति होमविधिर्दिग्बलिः कुम्भाभिषेकविधिश्चातीव संक्षेपतोऽभिधीयन्ते।

एवमेवाचिन्त्यविश्वसादाख्येऽपि दृश्यते। यथा —

'वह्निगेहं समासाद्य तर्पयेद्वास्तुदेवताः।
निवृत्यादिकलाश्चापि द्वारपालान्स्वमन्त्रकैः॥
दत्त्वा दिग्बलिमाचम्य सकलीकृतविग्रहः॥
मधुराम्रकपित्थैश्च बीजपूरफलैस्तथा॥
बदरामलवार्ताकनारङ्गलिकुचादिभिः।
संस्नाप्य स्नापयेत्कुम्भजलैरुपरि चालयम्॥' इति॥

(**अचिन्त्यविश्वसादाख्ये** ७३.२० – २२)

अत्रार्थतः शब्दतश्च बहुधा साजात्यमस्तीति स्पष्टम्। सूक्ष्मागमेऽस्मिन्विषये होमविधिः, परेद्युः करणीयकुम्भाभिषेकविधिश्च विस्तरेण सम्यक् प्रतिपादितः। सूक्ष्मागमश्लोका यथावदत्र टिप्पण्यां प्रदर्शिताः।

ततोऽत्र १२ तमे श्लोके ऐश्वर्यस्थितिहेतवे संतानादिवृद्धये च मठस्य कर्तृनाम करणीयमित्युच्यते। यथा —

'विभूतिस्थितिहेत्वर्थं संतानादिविवृद्धये।
तदर्थं कीर्तयेन्नाम कर्तृनामाङ्कितं मठम्॥' इति॥

(**रौरवे** ६०.१२)

अचिन्त्यविश्वसादाख्येऽप्ययं विषय एवमेव सम्यक् प्रतिपाद्यते। यथा —

'विभूतिस्थिरहेत्वर्थं संतानादिविवृद्धये।
कीर्त्यर्थं कीर्तयेन्नाम कर्तृनामपुरःसरम्॥
एकं मठं सुसंज्ञातं कुर्याद्वै देशिकोत्तमः।' इति॥

(**अचिन्त्यविश्वसादाख्ये** ७३.२३, २४पू०)

अत्र रौरवोक्तोऽर्थ एवं किंचिद्विशिष्य 'कीर्त्यर्थं मठस्य कर्तृनामकरणं देशिकोत्तमेन कर्तव्यम्' इत्युच्यते। रौरवोक्तविषयेण बहुधात्र साजात्यं दृश्यते।

सूक्ष्मागमेऽपि फलप्रदर्शनपूर्वकमयं विषयोऽभिहितः। यथा —

'मठस्य नाम कृत्वा तु कर्तृनामाङ्कितं मठम्।
एवं यः कुरुते मर्त्यः सोऽन्ते सायुज्यमाप्नुयात्॥ इति॥

(**सूक्ष्मे** ७९ तमे पटले (टि० १९१ पृ० ४१९)

अत्र मठकर्तुः सायुज्यरूपमोक्षपदवी भवेदित्युच्यते।

अस्मिन्पटले १३ – १७ श्लोकेषु प्रासादादिकं यद्यत्क्रियते, तत्र सर्वत्र गर्भन्यासोऽवश्यं कर्तव्य इत्युच्यते। प्रासादे कुत्र स्थाने गर्भन्यासः कर्तव्य इति च निर्दिश्यते। मठप्रतिष्ठाविधेः प्रकृतत्वान्मठविषये गर्भन्यासयोग्यस्थानमवश्यं निरूपणीयम्। तदीयग्रन्थोऽत्र लुप्त इति भाति। अथवा 'यथाक्रमम्' इति सूच्यत इत्यवगन्तव्यम्। एवं षष्टितमपटले साजात्यं वैजात्यं च प्रादर्शि।

**एकषष्टितमे पटले**ऽष्टबन्धनविधौ (१उ०, २पू० श्लोके) लिङ्गपीठान्तरे योजनीयमष्टबन्धनं पक्वमपक्वमिति द्विविधं भवेदित्युच्यते। अत्र विषये सहस्रागमे 'अष्टबन्धनेऽपक्वं पक्वमिति द्विविधं भवति। तत्राष्टबन्धनद्रव्येषु पाकयोग्यं पक्वं स्यात्। अष्टबन्धनद्रव्याणां मर्दनेन संपादितमपक्वं भवेदिति द्वयोरपि लक्षणं च प्रतिपाद्यते। यथा —

'अपक्वं पक्वमेवं तु द्विविधं बन्धनक्रमम्।
पक्वं तु पाकयोग्यं स्यादपक्वं मर्दनं भवेत्॥
पक्वापक्वपदं ज्ञात्वा बन्धयेत्सुदृढं बुधः। इति॥

(**सहस्रे** टि० ३४. पृ० १४)

पूर्वकारणागमे पक्वापक्वयोरष्टबन्धनयोः संपादनप्रकारो विस्तरेणाभिधीयते। मानुषार्षदैविकगाणपलिङ्गविषये पक्वाष्टबन्धनं, स्वयम्भुलिङ्गविषयेऽपक्वाष्टबन्धनं च योजनीयमिति च कथ्यते। यथा —

'पक्वाष्टबन्धनं कुर्यान्मानुषस्य प्रजापते।
आर्षस्य दैविकस्यैव गाणपस्य तथैव च॥
मृदुपाकेन कर्तव्यं स्वयमुद्भूतलिङ्गके।
आर्द्रबन्धनकं कुर्यादाचार्यः सम्यगेव तु॥
द्रव्येषु तैलं सर्पिर्वा संयोज्य पाचयेत्क्रमात्॥
अतिपक्वे प्रजानाशः अपक्वे द्रव्यनाशनम्॥
पक्वं वै पाचयित्वाथ बन्धयेल्लिङ्गपीठयोः।' इति॥

(**पूर्वकारणे** १३६ पृ० ६३२)

ततोऽत्र पटले आग्नेयादिपूर्वदिगन्तमष्टबन्धनहीने संभाव्यमानो दोषः (२ उ० – ४) श्लोकेषु कथ्यते। तथा हि आग्नेय्यां, याम्ये, नैर्ऋत्यां, वारुण्यां, वायव्यां, सौम्यके, ऐशान्यां, पूर्वस्यां चाष्टदिक्ष्वष्टबन्धनहीने क्रमेण 'वह्निदाह – व्याधिपीडा – ग्रामनाश – वर्षनाश – सस्यनाश – स्त्रीनाश – धननाश – आभिचारदोषाश्च संभवेयुरित्युच्यते।

पूर्वकारणे सहस्रागमे चायं विषयः प्रायेण सदृशतया क्वचिद्विषये व्यत्यासेन चाभिधीयते। यथा —

'अष्टबन्धविहीने च पूर्वे राष्ट्रं विनश्यति।
आग्नेय्यामग्निदग्धं तु याम्ये च मृतिरुच्यते॥
ग्रामनाशं तु नैर्ऋत्यां वारुण्यां वर्षवर्जितम्।
सर्वनाशं तु वायव्यां स्त्रीणां नाशं तु सौम्यके॥
ऐशान्यां धननाशः स्यात्सर्वदोषः प्रवर्तते।' इति॥

(**पूर्वकारणे** १३६ पृ० ६२३)

'पूर्वे तु कलहं विद्यादाग्नेय्यामग्निदाहकम्।
याम्ये तु व्याधिपीडा च नैर्ऋत्यां ग्रामनाशनम्॥
वारुण्यां वर्षनाशः स्याद्वायव्यां सस्यनाशनम्।
सौम्ये चैवार्थनाशः स्यादैशान्यां पुत्रनाशनम्॥
परितो बन्धहीने तु सर्वनाशकरं भवेत्॥ इति॥

(**सहस्रे** टि० ३४ पृ० ३)

पूर्वकारणे सहस्रे च दोषप्रदर्शनं पूर्वाद्यैशानपर्यन्तत्वेनाभिधीयते। रौरवे तु आग्नेय्यादिपूर्वदिगन्तत्वेनाभिहितमित्यवगन्तव्यम्। एवमत्र विषये साजात्यं वैजात्यं च प्रदर्शितम्।

ततोऽत्र पटले (६, ७ पू०) श्लोकयोरष्टबन्धनहीनकाले क्रियमाणानि नित्यनैमित्तिककर्मणी, बलिनित्योत्सवप्रदक्षिणस्नपनानि च निष्फलानि स्युः। एवं पूजाकाले क्रियमाणाः सर्वेऽर्घ्यपाद्याद्युपचाराश्च विफला भवेयुरिति कथ्यते।

पूर्वकारणागमेऽयं विषयः किंचिद्विशेषेण प्रतिपाद्यते। यथा —

'अष्टबन्धनहीने तु पूजा नैवेद्यमेव च।
बलिर्नित्योत्सवं चैव नमस्कारप्रदक्षिणम्॥
नृत्तगीतं च वाद्यं च नित्त्यनैमित्तिकं तथा॥
उपचाराणि सर्वाणि निष्फलं तु विधीयते।' इति॥

(**पूर्वकारणे** १३६ पृ० ६२७)

अत्र नमस्कारनृत्तगीतवाद्यान्यधिकतया भण्यन्ते। रौरवे स्नपनकर्माधिकतया प्रोक्तमिति साजात्यं वैजात्यं च द्रष्टव्यम्।

अत्र पटले (७ उ० – ९ पू० श्लोकेषु) लिङ्गपीठान्तरेऽष्टबन्धनहीनत्वाद्यदि लिङ्गे ब्रह्मभागे, विष्णुभागे, कूर्मासने, नन्द्यावर्तशिलाभागे, च निर्माल्यं दृश्येत तदा क्रमेण ब्रह्मक्षत्रियवैश्यशूद्रवर्गाणां नाशः स्यादिति दोषोऽभिधीयते। अयं विषयः पूर्वकारणागमे किंचिद्विशेषेण कथ्यते। यथा —

'शक्तिस्थानेषु निर्माल्यं शैवस्त्रीवर्गनाशनम्।
विष्णुभागे तु निर्माल्यं नृपवर्गविनाशनम्॥
ब्रह्मभागे तु निर्माल्यं ब्रह्मवर्गविनाशनम्।
शिलाभागे तु निर्माल्यं गर्भनाशकरं भवेत्॥
नन्द्यावर्तशिलाभागे दुर्भिक्षं तु प्रजायते।
कूर्मासने तु निर्माल्यं सर्वनाशकरं भवेत्॥
स्थले चैव प्रवेशे तु विट्शूद्रसर्वनाशनम्।
पीठान्तरेषु निर्माल्यं ज्वरमारीप्रवेशनम्॥' इति॥

(**पूर्वकारणे** १३६ पृ० ६२७)

अत्र ब्रह्मभागविष्णुभागविषयं विनान्यत्सर्वं भिन्नतया दृश्यत इति साजात्यं वैजात्यं चास्तीति स्पष्टम्।

अस्मिन्पटले (११, १२ श्लोकयोः) अष्टबन्धनहीने सति दोषनिवृत्तये पुनरष्टबन्धनं यदि षण्मासमध्ये क्रियते, तदा दिनवारमुहूर्तादिकं न द्रष्टव्यम्। सर्वेषु मासेष्वष्टबन्धनं विनाङ्कुरार्पणं कुर्यात्। षण्मासात् परतो यद्यष्टबन्धनं क्रियते, तदा दिनवारमासनक्षत्राणि दृष्ट्वाङ्कुरार्पणपूर्वकं कर्तव्यमित्युच्यते।

अस्मिन्विषये पूर्वकारणागमेऽष्टबन्धनहीने पुनरष्टबन्धनं यदि क्रियते, तदा दिनवारमुहूर्तादिकमनपेक्ष्य सर्वमासेषु तत्कर्म कर्तव्यमिति सामान्येनाभिधीयते। यथा —

'दिनवारमुहूर्तं च वर्जयेत्तु विचक्षणः।
सर्वमासेषु कर्तव्यमष्टबन्धनकर्म च॥' इति॥

(**पूर्वकारणे** १३६ पृ० ६२०)

अत्र साजात्यं वैजात्यं चास्तीति स्पष्टम्। अस्मिन्विषये चन्द्रज्ञानागमे पुनरष्टबन्धनं षण्मासमध्ये यदि क्रियते, तदा दिनवारमुहूर्तादिकं न द्रष्टव्यम्। षण्मासादूर्ध्वमष्टबन्धनकरणे मासपक्षनक्षत्राणि दृष्ट्वाङ्कुरार्पणपूर्वकमष्टबन्धनं कुर्यादित्युच्यते। यथा —

'दिनवारमुहूर्तं च वर्जयेद्देशिकोत्तमः।
षण्मासादूर्ध्वमेवं चेदष्टबन्धविहीनके॥
अङ्कुरं मासपक्षर्क्षे अष्टबन्धं समाचरेत्।' इति॥

(**चन्द्रज्ञाने** टि० १००९ पृ० १०६)

एतद्विषये रौरवचन्द्रज्ञानागमयोः साजात्यमस्तीति स्पष्टं भवति।

अस्मिन्विषये योगजागमेऽष्टबन्धनहीनतां दृष्ट्वा सद्य एव यदि पुनरष्टबन्धनकर्मारभ्यते, तदा दिनवारमुहूर्तादिकमनपेक्ष्याङ्कुरार्पणं विना कर्तव्यम्। षण्मासादूर्ध्वं यद्यष्टबन्धनं क्रियते, तदा दिनवारमुहूर्तादिकं सम्यग्वीक्ष्याङ्कुरार्पणपूर्वकं तत्कर्म निर्वर्तनीयम्। अत्र यदि वैपरीत्यं स्यात् तदा कर्त्रादिनाशनं संभवेदित्युच्यते। यथा —

'दृष्टमात्रेण यत्रैव वसुबन्धं न्यसेद्यदि।
नैव वारक्रमोपेतं मुहूर्तादीनि चाङ्कुरम्॥
षण्मासोर्ध्वकृतं चेद्धि मुहूर्ताद्यङ्कुरान्वितम्।
विपरीतं न कर्तव्यं कृतं कर्त्रादिनाशनम्॥ इति॥

(**योगजे** टि० १००९ पृ० १०९)

अत्र विपरीतकरणे दोषः प्रदर्श्यते। रौरवे दोषप्रदर्शनं न विद्यत इति रौरवयोगजयोर्विषये वैजात्यमस्ति। अन्यत्सर्वं समानतया वर्तत इति साजात्यमपि दृश्यते।

अस्मिन्पटले षोडशे श्लोके कुण्डविषये कुण्डैर्वा स्थण्डिलैर्वा युतत्वेनाग्नेरायतनं द्विधा भवतीत्युच्यते। कुण्डसंख्या स्थण्डिलसंख्या वा न निरूपिता। यथा —

'अग्निकुण्डैः समायुक्तं स्थण्डिलैश्च समन्वितम्।
वालुकैश्च सितैर्वापि अग्नेरायतनं द्विधा॥ इति॥

(**रौरवे** ६१.१६)

अयं श्लोकः क्रमेण टि० १००९ (१००, १०७, १०९ पृष्ठेषु) **निश्वासतन्त्रे, चन्द्रज्ञाने, योगजे** च विद्यत इति निर्दिष्टः। प्रकृतविषये **पूर्वकारणागमे** "नवपञ्चैककुण्डं वा" (१३६ पृ० ६२८) इत्यत्र कुण्डैरेवाग्न्यायतनं कल्पनीयमित्युच्यते। एवं चात्र विषये साजात्यं वैजात्यं चागमेषु विद्यत इति प्रदर्शितम्।

अस्मिन्पटले कुम्भस्थापनविषये दृश्यमानौ (१९, २०) श्लोकौ पूर्वकारणागमे प्रायेण समानतया दृश्येते। यथा —

'कुम्भमध्ये जलद्रोणमष्टकुम्भसमन्वितम्।
मध्यकुम्भं तथा तोयं वर्धनीं तस्य वामके॥
सदाशिवं यजेन्मध्ये वर्धन्यां तु मनोन्मनीम्।
अष्टकुम्भेषु विद्येशानधिदेवाः प्रकीर्तिताः॥ इति॥

(**पूर्वकारणे** १३६ पृ० ६२१, ६२२)

एवमत्र होमविषये दृश्यमानाः २२ – २४ श्लोकाः पूर्वकारणागमे प्रायेण सदृशा दृश्यन्ते। यथा —

'समिधं सद्यमन्त्रेण आज्यं वामेन होमयेत्।
अघोरेण चरुं हुत्वा लाजं तत्पुरुषेण तु॥
तिलमीशानमन्त्रेण सर्षपं हृदयेन तु।
शिरोमन्त्रेण भृङ्गं च शिखया माषमेव च॥
आढकं कवचेनैव गोधूमं नेत्रमन्त्रतः।
चणकं चास्त्रमन्त्रेण सद्याद्यस्त्रान्तकं पुनः॥ इति॥

(**पूर्वकारणे** १३६ पृ० ६२८, ६२९)

एवमस्मिन्पटले (३३ पूर्वार्धे) आचार्यदक्षिणाहीने क्रिया निष्फलतां व्रजेदित्युच्यते। एवं पूर्वकारणेऽपि प्रोच्यते। यथा —

'आचार्यदक्षिणाहीने कर्ता भर्ता विनश्यति।
अत्र यागफलं सर्वं निष्फलं भवति ध्रुवम्॥ इति॥

(**पूर्वकारणे** १४४.१०८ (पृ० ७०८)

एवमत्र ३५ उत्तरार्धे 'देवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन।' इति दृश्यते। एवमेव **गुरुगीतायां** प्रथमाध्याये ४४ तमे श्लोके दृश्यते। यथा —

'शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन'। इति॥

एवमेकषष्टितमपटले साजात्यं वैजात्यं च प्रत्यपादि।

**द्विषष्टितमे पटले** कृत्तिकादीपनिर्णयविधौ (२ उ० ३ पू०) अर्धयोः पर्वयुक्ते दिने यदि केतुग्रस्तसोमोपरागो भवेत्तस्मिन्दिने कृत्तिकादीपोत्सवो न कर्तव्यः। अन्यस्मिन्नक्षत्रे दीपोत्सवो यथोक्तं करणीय इत्युच्यते। यथा —

'पर्वयुक्ते तु नक्षत्रनाथं केतुर्ग्रसेद्यदि।
तस्मिन्दिने न कर्तव्यमन्यर्क्षे तु यथोक्तवत्॥' इति॥

(**रौरवे** ६२.२ उ०, ३ पू०)

कालप्रकाशिकाख्यज्योतिषग्रन्थे तु कार्त्तिकमासे पूर्णिमायां कृत्तिकानक्षत्रे वृषभराशौ चन्द्र उच्चं गते सत्युपरागेऽपि दीपोत्सवः कर्तव्य इत्यभिधीयते। यथा —

'वृश्चिकेऽर्के विधौ तुङ्गे पूर्णायामग्निभे वृषे।
उपरागेऽपि कुर्वीत महादीपप्ररोहणम्॥' इति॥

(**कालप्रकाशिकायाम्** ३३.३१)

एवं च केतुग्रस्ते चन्द्रे कृत्तिकादीपोत्सवो न कर्तव्य इत्ययं विषय एतदागमीयो विशेष इत्यवगन्तव्यः।

पूर्वकारणागमे नक्षत्रत्रययुते पर्वणि तद्रात्रौ दीपकाले वा चन्द्रे राहुग्रस्ते सति दीपोत्सवः कर्तव्य इत्युच्यते। यथा —

'ऋक्षत्रययुते पर्वे राहुग्रस्ते चतुर्मुख।
तद्रात्रौ दीपकाले वा ग्रसेद्दीपं समाचरेत्॥' इति॥

(**पूर्वकारणे** १११.११ उ०, १२ पू०)

कालोत्तरागमे कार्त्तिकमासे कृत्तिकानक्षत्रयुक्तपूर्णिमायां तद्रात्रौ दीपकाले वा राहुग्रस्तसोमोपरागो यदि स्याद्रोहिण्यां दीपोत्सवं कारयेदित्युच्यते। यथा —

'कार्त्तिकमासे कार्त्तिक्यां रात्रौ दीपं समाचरेत्।
तद्रात्रौ राहुदष्टश्चेद्रोहिण्यां कारयेद् बुधः॥' इति॥

(**कालोत्तरे** (टि० ५५६ पृ० ४६१)

एवमागमान्तरेषूपरागविषये कृत्तिकादीपोत्सवकरणे विशेषो विद्यत इत्यवगन्तव्यः।

कृत्तिकादीपकालविषये रौरवे २६ तमे पटले कृत्तिकादीपविधौ 'सूर्ये वृश्चिकराशिं गते चन्द्रे च कृत्तिकानक्षत्रस्थे पौर्णमीयुक्तरात्रौ कृत्तिकादीपोत्सवः कर्तव्यः' इत्युक्तम्। यथा —

'वृश्चिकेऽर्कगते चन्द्रे चाग्निऋक्षं गते सति।
सपौर्णमास्यां वा रात्रौ कृत्तिकादीपमाचरेत्॥' इति॥

(**रौरवे** २६.१ उ०, २ पू०)

कृत्तिकादीपोत्सवनिर्णयविषये स्वायंभुवागमप्रोक्तविषयः रौरवे २६ तमे पटले टिप्पण्यां प्रदर्शितः। सोऽप्यत्रावलोकनीयः।

अपि चात्र पटले षष्ठश्लोके आर्द्रानक्षत्रान्तोत्सवमध्ये कृत्तिकादीपोत्सवो यदि भवेत् तदा यस्मिन्दिने पूर्वभागेऽन्त्यभागे च कृत्तिकानक्षत्रयोगोऽस्ति तस्मिन्नेव दिने दीपोत्सवः करणीय इत्युच्यते। अयं विषय एतदागमीयविशेषेषु परिगणनीयः। एवं द्विषष्टितमपटले साजात्यं वैजात्यं च प्रादर्शि।

**त्रिषष्टितमे पटले** शैवोत्पत्तिविधौ (१ – ६ पू०) श्लोकेषु सर्वसंहारकालादनन्तरं पुनःसृष्टिकाले

भगवान्परमेश्वरो जीवात्मनां रक्षणार्थं चिन्तयन् सदाशिवमूर्तिमास्थाय मनोन्मन्याख्यां शक्तिमिच्छाशक्तिं ज्ञानशक्तिं क्रियाशक्तिं तिरोधानकर्त्रीं शक्तिं च ससर्ज।

तत्र परमशिवात्प्रथमतः पराशक्तिः प्रादुरभूत्। तत्पराशक्तेर्नादः, नादाद्बिन्दुः, बिन्दोः सदाशिवः, तस्माद्रुद्रः, ततो विष्णुः, विष्णोर्ब्रह्मा, ब्रह्मणश्चराचरात्मकमिदं जगत्सर्वमुदभूदिति जगत्सृष्टिक्रमो वर्ण्यते।

अस्मिन्विषये वातुलशुद्धागमे (१.२३ उ० – ३० पू० श्लोकेषु) निष्कलपञ्चशक्तिसृष्टिः, तन्मूलतः सादाख्यसृष्टिश्च जायत इति कथ्यते। यथा 'भगवान्परमेश्वरः स्वेच्छया लोकोत्पत्तिकारणभूतसर्वतत्त्वानां सृष्टचर्थं चिन्तयामास। तदा तस्मात्परमशिवात् पराशक्तिराविरभूत्। तस्याः सहस्रांशादादिशक्तिस्तस्याः सहस्रांशादिच्छाशक्तिस्तस्याः सहस्रांशाज्ज्ञानशक्तिस्तस्याः सहस्रांशात्क्रियाशक्तिरिति निष्कलपञ्चशक्तिप्रादुर्भावः समजनि। ततो योगिनां यतीनां ज्ञानिनां मन्त्रिणां च ध्यानपूजानिमित्तं निष्कलपञ्चशक्तिमूलतः पञ्चसादाख्यतत्त्वभेदाः प्रादुरभूवन्। ते पञ्चतत्त्वभेदाः क्रमेण सदाशिवः, ईशः, ब्रह्मा, ईश्वरः, ईशान इति कथ्यन्ते। ततो ब्रह्मणः सकाशाज्जगच्चराचरात्मकमिदं समजनीति शक्तिसृष्टिः पञ्चसादाख्यसृष्टिश्च निरूप्येते। वातुलशुद्धागमश्लोकाश्चात्र टिप्पण्यां प्रदर्शिताः।

अत्र पटले (८ उ० – १५ पू० श्लोकेषु) परमेश्वरस्येशानादिपञ्चमुखैर्दीक्षिता मुनयस्तथा तेषु मुखेषूत्पन्ना अष्टाविंशतिशैवागमाश्च निरूप्यन्ते। तत्र ब्राह्मणर्षिः कौशिक ईशानवक्त्रेण, तथा क्षत्रियर्षिः काश्यपस्तत्पुरुषवक्त्रेण, वैश्यकुलोत्पन्नो नन्दी शुद्धशैवमार्गेण संचिन्त्य अघोरवक्त्रेण, ब्राह्मणर्षिरगस्त्यो वामदेववक्त्रेण, भरद्वाजः शूद्रमार्गेण संचिन्त्य सद्योजातवक्त्रेण च क्रमेण दीक्षिता इति मुनीनां नामजातिनिर्देशपूर्वकं पञ्चमुखैर्दीक्षितत्वप्रकारः सम्यक् प्रतिपादितः।

वीरागमे सप्तमपटलेऽयं विषयः प्रकारान्तरेण कथ्यते। यथा —

'कौशिकः काश्यपश्चैव भारद्वाजोऽत्रिरेव च।
गौतमश्चेति पञ्चैते पञ्चवक्त्रेषु दीक्षिताः॥'
'कौशिकश्चोत्तरमुखे काश्यपश्चैव दक्षिणे।
भारद्वाजः पुरा ज्ञेयः पश्चिमे गौतमस्तथा॥
अत्रिरूर्ध्वमुखे ज्ञेय एवमेतेषु दीक्षिताः।' इति॥

(**वीरे** ७.११ उ०, १२ पू०; १३ उ०; १४)

रौरवे भरद्वाजानन्तरं नन्द्यगस्त्यौ निर्दिश्येते। वीरे तु तत्र 'अत्रिगौतमौ प्रोक्ताविति भेदस्तथा ऋषीणां जातिर्न प्रतिपादितेति भेदश्चावगन्तव्यः। दीक्षाविषये वीरे कौशिक उत्तरेण वामदेववक्त्रेण, काश्यपो दक्षिणेनाघोरवक्त्रेण, भारद्वाजः पूर्वेण तत्पुरुषवक्त्रेण, गौतमः पश्चिमेन सद्योजातवक्त्रेण, अत्रिरूर्ध्वेनेशानवक्त्रेण च क्रमेण दीक्षिता इत्युच्यते। अत्र विषये रौरववीरागमयोरतीव भेदो वर्तत इति वैजात्यं स्पष्टम्।

अत्र पूर्वकारणागमे २६ तमे पटलेऽप्ययं विषयः प्रकारान्तरेणाभिधीयते। यथा —

'कौशिकः काश्यपश्चैव भारद्वाजोऽथ गौतमः।
अगस्त्यश्चैव पञ्चैते पञ्चवक्त्रेषु दीक्षिताः॥
कौशिकः शिवमूर्त्या तु दीक्षितः शिवगोचरः।
काश्यपस्त्वीश्वरेणैव शिखागोचरसंस्थितः॥
ईशानेन भरद्वाजो दीक्षितो ज्योतिगोचरः।
गौतमो ब्रह्ममूर्त्या तु सावित्रीगोचरः स्थितः॥
अगस्त्यश्चोर्ध्ववक्त्रेण दीक्षितो व्योमगोचरः।' इति॥

(**पूर्वकारणे** २६.३ – ६ पू०)

रौरवे भरद्वाजानन्तरं नन्दी निर्दिष्टः। पूर्वकारणे तत्र गौतमो निर्दिश्यत इति मुनिनामविषये भेदः स्पष्टः। मुनीनां जातिर्नोक्तेत्यपरो भेदश्चास्तीति स्पष्टम्। दीक्षाविषये भरद्वाजोऽगस्त्यश्चोर्ध्वमुखेनेशानेन दीक्षित इति स्पष्टमभिधीयते। कौशिककाश्यपगौतमाः क्रमेण शिवमूर्त्या, ईश्वरेण, ब्रह्ममूर्त्या च दीक्षिता इति कथ्यते। ते पञ्चमुखेषु केन मुखेन दीक्षिता इति स्पष्टं न प्रतिपाद्यते। व्याख्यानार्होऽयं विषय इति भाति। दीक्षाविषये रौरवपूर्वकारणागमयोरतीव भेदो वर्तत इति स्पष्टम्।

रौरवेऽस्मिन् ६३ तमे पटलेऽष्टाविंशतिशैवागमानां परमेश्वरपञ्चमुखोत्पन्नत्वं स्पष्टतया सम्यक् प्रतिपाद्यते। तत्र कामिकादिसहस्रान्तं विद्यमाना अष्टावागमा ईशानमुखोत्पन्नाः, अंशुमदादिवीरान्तं विद्यमानाः सप्तागमास्तत्पुरुषमुखोत्पन्नाः, रौरवादिचन्द्रज्ञानान्तं विद्यमानाश्चत्वार आगमा अघोरमुखोत्पन्नाः, मुखबिम्बादिसन्तानान्तं वर्तमानाः पञ्चागमा वामदेववक्त्राज्जाताः, शर्वोक्तादिवातुलान्तं दृश्यमानाश्चत्वार आगमाः सद्योजातवक्त्रादुद्भूता इति स्पष्टतयाष्टाविंशत्यागमानां पञ्चमुखोत्पन्नत्वप्रकारः सम्यगभिहितः। अष्टाविंशत्यागमानुपूर्वीप्रतिपादिका पट्टिका मुद्रितरौरवागमे प्रथमभागे प्रदर्शितास्ति। सात्रागमानुपूर्वीज्ञानायावलोकनीया।

अयं विषय उत्तरकामिके, रौरवोक्तप्रकाराद्भिन्नतया दृश्यत इति तदीयग्रन्थमूलतो निरूप्यते। यथा —

'कामिकाद्यजितान्ताश्च ईशवक्त्रसमुद्भवाः।
दीप्तादि सुप्रभेदान्ताः पुरुषाख्याननोद्भवाः॥
विजयाद्वीरतन्त्रान्ताः पञ्चैते घोरवक्त्रजाः।
रौरवान्मुखबिम्बान्ता वामदेवमुखोद्भवाः॥
प्रोद्गीताद्यष्टतन्त्रं च सद्यवक्त्रसमुद्भवम्।' इति॥

(**उत्तरकामिके** २४.१२७ उ० – १२९)

उत्तरकामिके ईशानतत्पुरुषाघोरवामदेवमुखेषु चतुर्षु पञ्च पञ्चागमाः संभूताः। शिष्टा अष्टागमाः सद्योजातमुखे संभूता इत्युच्यत इति रौरवादत्र भेदोऽस्तीति स्पष्टम्। ईशानादिसद्यान्ततयागमोत्पत्तिकथनमुभयत्राप्यस्तीति साजात्यमप्यवगन्तव्यम्।

अत्र विषये पूर्वकारणे चिन्त्यागमे च सद्योजातादीशानान्तेषु पञ्चसु मुखेषु कामिकादिवातुलान्ता आगमाः संभूताः। तत्र सद्योजातवामदेवाघोरपुरुषमुखेषु चतुर्षु क्रमेण पञ्च पञ्चागमा उत्पन्नाः। शिष्टा अष्टागमा ईशानमुखे संभूता इत्यागमोत्पत्तिः कथ्यते। यथा —

'कामिकाद्यजितान्तं च सद्योजातमुखोद्भवम्।
दीप्तादि सुप्रभेदान्तं वामदेवमुखोद्भवम्॥
विजयारभ्य वीरान्तं पञ्चैते घोरवक्त्रजाः।
रौरवान्मुखबिम्बान्तं पुरुषाख्याननोद्भवम्॥
प्रोद्गीताद्यष्टतन्त्रं च ईशाननसमुद्भवम्॥' इति॥

(**पूर्वकारणे** १.६८ – ७० पू०)

'कामिकाद्यजितान्तं च सद्योजातमुखोद्भवम्।
दीप्तादि सुप्रभेदान्तं वामदेवमुखोद्भवम्॥
विजयाद्यं च वीरान्तं शास्त्रं घोरमुखोद्भवम्।
रौरवाद्यं च बिम्बान्तं चोद्भूतं पुरुषात्तथा॥
सिद्धादि [प्रोद्गीतादि] वातुलान्तं ईशानस्य मुखोद्भवम्॥' इति॥

(**चिन्त्ये** १.६५ उ० – ६७)

अस्मिन्पटले (६ उ० – ८ पू० श्लोकेषु) शुद्धशैवं संक्रान्तिशैवं समावेशशैवम् उत्पत्तिशैवम् अभिव्यक्तिशैवम् उपशैवम् अनादिशैवमिति सप्तविधशैवमतं नाम्ना निर्दिश्यते।

उत्तरकामिके 'शैवं पाशुपतं सोमसिद्धान्तं लाकुलम्' इति चतुर्विधशैवमतं निर्दिश्यैतच्चतुर्विधं महेशस्य तत्पुरुषादिचतुर्वक्त्रेभ्य उद्भूतम्। तत्र पूर्वं पूर्वमुत्कृष्टम्। एतच्चतुर्विधमपि प्रत्येकं वामदक्षिणसिद्धान्ताख्यभेदेन त्रिविधं भवति। तत्र शैवसिद्धान्तः सर्वेभ्य उत्तमोत्तमो भवतीत्युच्यते। यथा —

'शैवं चतुर्विधं प्रोक्तं शैवं पाशुपतं तथा।
सोमसिद्धान्तकं चैव लाकुलं च चतुर्विधम्॥
चतुर्वक्त्रान्महेशाच्च पुरुषाद्याननोद्भवम्।
पूर्वं पूर्वं गुणोत्कृष्टं तत्र त्वेवं चतुर्विधम्॥
प्रत्येकं त्रिविधं प्रोक्तं वामदक्षिणभेदतः।
सिद्धान्ताख्येन तेषां च सिद्धान्तः श्रेष्ठ उच्यते॥
तत्रापि शैवसिद्धान्तः सर्वेभ्यो ह्युत्तमोत्तमः॥' इति॥

(**उत्तरकामिके** २४.७८ उ० – ८१)

सुप्रभेदे 'शैवं पाशुपतं सोमं लाकुलम्' इति चतुर्विधं शैवमतं वर्तते। तेषु शैवमेव सौम्यं भवति। पाशुपतादिकं रौद्रं भवति। तत्र शैवं पुनः वामं दक्षिणं मिश्रं सिद्धान्तमिति चतुर्विधं भवति। तेषु सिद्धान्तमेवोत्तमं भवतीत्युच्यते। यथा —

'शैवं पाशुपतं सोमं लाकुलं च चतुर्विधम्।
तेषु शैवं परं सौम्यं रौद्रं पाशुपतादिकम्॥
शैवं पुनश्चतुर्भेदं वामदक्षिणमेव च।
मिश्रं चैव तु सिद्धान्तं तेषु सिद्धान्तमुत्तमम्॥
अष्टाविंशतिभेदेन सिद्धान्तं शृणु तत्त्वतः॥' इति॥

(**सुप्रभेदे** क्रियापादे १.२८ – ३० पू०)

उत्तरकामिके सुप्रभेदे च प्रोक्तो विषयो रौरवोक्ताद्भिन्नो भवतीति वैजात्यं स्पष्टम्। ततोऽस्मिन्पटले (१५ उ० – १७ श्लोकेषु) संक्रान्तिशैवं काश्यपमतं, समावेशं कौशिकमतं, समुत्पत्तिशैवं भारद्वाजमतं, शुद्धशैवं नन्दिमतम्, अभिव्यक्तिशैवमगस्त्यमतम्, अनादिशैवं परमशिवादागतमिति षण्णां मतानां स्वरूपं लेशतः प्रतिपाद्यते। उपशैवमतविषये शिवद्विजेन भारद्वाजमार्गेण दीक्षितौ कुण्डगोलकौ उपशैवौ भवत इत्येतावन्मात्रमुच्यते। एतद्विषये उपलभ्यमानेष्वागमेषु यथाकथंचित्प्रमाणतया वक्तुं श्लोका नोपलभ्यन्ते। ज्ञानावरणविळक्के द्राविडग्रन्थे संक्रान्तिसमावेशसमुत्पत्तिशैवानां तथाभिव्यक्तिशैवानादिशैवयोश्च विषये सर्वसिद्धान्तविवेकाख्यग्रन्थतः केचन प्रमाणश्लोका उद्धृताः सन्ति। तथा शुद्धशैवमतविषये वातुलागमतः प्रमाणश्लोका उद्धृताः सन्ति। त एव श्लोका यथावदत्र टिप्पण्यां प्रदर्शिताः। परमोक्षनिरासकारिकायां सप्तमश्लोकवृत्तौ श्रीमता रामकण्ठाचार्येण संक्रान्तिसमावेशसमुत्पत्त्यभिव्यक्तिपक्षाणां विवरणं कृतम्। तदीया वृत्तिरपि टिप्पण्यां प्रतिपादिता। उपशैवमधिकृत्य नैव किंचित्प्रमाणमुपलभ्यते। ततोऽस्मिन्पटले (१८ – २३) श्लोकेषु आचार्यसंकरतन्त्रसंकरादिविषये संजाते नरकप्राप्तिः स्यादित्युच्यते। अत्र तन्त्रसंकरादिविषये पूर्वकारणमकुटवीरसुप्रभेदागमतः साजात्यवैजात्यप्रदर्शनाय प्रमाणश्लोकाष्टिप्पण्यां प्रदर्शिताः। ततोऽस्मिन्पटले २७ उ० – २८ श्लोकयोर्ब्राह्मणो वा चण्डालो वा सुगुणो वा दुर्गुणो वा भस्मरुद्राक्षसंमिश्रो यदि भवति स शिव एवं भवेदिति भस्मरुद्राक्षधारणप्रशंसा वर्ण्यते। अयं विषयो देवीभागवते ११ स्कन्धे ६.१३ उ० – १५ श्लोकेषु दृश्यते। यथा —

'ब्राह्मणो वापि चण्डालो निर्गुणः सुगुणोऽपि च।
भस्मरुद्राक्षधारी यः स देवत्वं शिवं व्रजेत्॥
शुचिर्वाप्यशुचिर्वापि तथाभक्ष्यस्य भक्षकः।
म्लेच्छो वाप्यथ चण्डालो युतो वा सर्वपातकैः॥
रुद्राक्षधारणादेव स रुद्रो नात्र संशयः।' इति॥

एवं त्रिषष्टितमे पटले साजात्यं वैजात्यं च प्रादर्शि।

**चतुःषष्टितमे पटले** फलपक्वादिसमर्पणकालविधौ प्रतिपादितो विषय उपलभ्यमानेष्वन्येष्वागमेषु न दृश्यते। अतोऽयमेतदागमीयविशेषेषु परिगणनीयो भवति। अस्मिन् पटलेऽभिहितो विषयो यथा-वदेतत्पटलार्थसंग्रहे निरूपितः।

**पञ्चषष्टितमे पटले** कामकोष्ठलक्षणविधौ (१ – ५ श्लोकेषु) शक्तित्रयं 'योगं भोगं वीरम्' इति प्रतिज्ञाय योगशक्तेर्लक्षणं सम्यक् स्पष्टतयाभिधीयते। तत्र 'योगशक्तिरुमाभागः पीठिकाकृतिरुच्यते।' इत्युक्त्वा पीठिकाकृतिनिरूपणं सम्यक् प्रतिपाद्यते। तत्र उपान – जगती – कुमुद – कम्प – कण्ठ – कम्प – पट्टी – घृतवार्याख्यान्यष्टौ पीठाङ्गानि योगशक्तेः क्रमेण पाद – जङ्घा – कुक्षि – बाहुयुग्म – कण्ठ – अधर – मुख – शिरोरूपाण्यङ्गानि भवन्तीति पीठाकृतित्वं सम्यगभिहितम्। एवंरीत्या लक्षण-प्रतिपादनमन्येष्वागमेषु न दृश्यत इति विषयोऽयमेतदागमीयविशेषेषु परिगणनीयो भवति।

पूर्वकारणे तथोत्तरकारणेऽपि शक्तित्रयलक्षणं प्रतिपाद्यते। यथा —

'योगं पीठसमायुक्तं भोगं वामसमन्वितम्।
वीरं स्वतन्त्रमित्युक्तं शक्तिरेवं त्रिधा भवेत्॥' इति॥

(**पूर्वकारणे** ९०, १३)

'योगं पीठसमायुक्तं भोगं वामसमन्वितम्।
वीरं स्वतन्त्रमित्युक्तं शक्तित्रयमिहोच्यते॥' इति॥

(**उत्तरकारणे** ८४.२)

योगशक्तिलक्षणमुभयत्रापि न स्पष्टतयाभिहितं, किं तु सूचितमिति स्पष्टम्।

भोगशक्तिविषये रौरवे ६५ तमे पटले (६ – २४ श्लोकेषु) स्थानकभोगशक्तिः आसीनभोगशक्ति-रिति द्विधा विभज्य द्वयोरपि लक्षणं विस्तरेण निरूप्यते। तत्राभङ्गं समभङ्गमतिभङ्गमिति त्रिविधं नतमानं निरूप्यते।

पूर्वकारणे 'भोगं वामसमन्वितम्' इति भोगशक्तेर्लक्षणं सूच्यते। नैव स्पष्टतया प्रतिपाद्यते। उत्तर-कारणे भोगशक्तिलक्षणं किंचित्स्पष्टतया दृश्यते। यथा —

'मूललिङ्गसमीपे तु वामभागेऽर्धमण्टपे।
आसनं स्थानकं प्रोक्तं द्विविधं भोगशक्तिकम्॥' इति॥

(**उत्तरकारणे** ८४.३)

शक्तित्रयं रौरवे ३१ तमे पटले गौरीस्थापनविधौ (१ – ३ श्लोकेषु) च प्रतिपाद्यते। यथा —

'अथ गौरीप्रतिष्ठां च वक्ष्येऽहं शृणु सुव्रत।
त्रिविधं तत्समाख्यातं वीरयोगक्रमं तथा॥
गौरीमेव स्थितां यत्र केवलं तदुदाहृतम्।
तदेव वीरमाख्यातं शम्भुना सह योगकम्॥
प्राकारे शयनस्थाने स्थाप्यं यानं क्रमं विदुः'॥ इति॥

अत्र गौर्याः परं स्थापनं वीरम्। शम्भुना सह गौर्याः स्थापनं योगम्। प्राकारे शयनस्थाने स्थापनं

क्रम इति त्रयो भेदाः प्रोक्ताः। अत्र प्रोक्तविषयस्य ६५ तमपटलप्रोक्तविषयस्य च नितरां भेदो वर्तत इति वैजात्यं स्पष्टम्। शक्तित्रयविषये पूर्वकारणे ८९ तमे पटले प्रकारान्तरं दृश्यते। यथा —

"केवलं सहजं पौष्ण्यं त्रिविधं तु विधीयते।
केवलं त्विति विख्यातं स्थापनं शम्भुना विना॥
भवानीसहितं देवं स्थापनं सहजं भवेत्।
प्रागेव स्थाप्य देवं तु भवानीस्थापनं पुनः॥
यत्तत्पौष्ण्यमिति ख्यातमेवं तु त्रिविधं स्मृतम्॥' इति॥

(**पूर्वकारणे** ८९.१ उ० – ३)

अत्र शम्भुं विना यत्र गौरीस्थापनं तत् केवलम्। भवानीशम्भ्वोः सहैव स्थापनं सहजम्। पूर्वं देवं संस्थाप्य पश्चात्काले देवीस्थापनं पौष्ण्यमिति भेदत्रयं निगद्यते। अयं विषयो नामतो लक्षणतश्च भिन्नो वर्तत इति वैजात्यं स्पष्टम्। अस्मिन्विषये सुप्रभेदे क्रियापादे ३८ तमे पटलेऽपि प्रकारान्तरं दृश्यते। यथा —

'त्रिभेदमन्यच्छक्तीनामेकं युक्तं सहेति च।
शक्तिस्तु केवलं यत्र स्थाप्यते त्वेकमुच्यते।
पूर्वं शम्भुं प्रतिष्ठाप्य शक्तेस्तु स्थापनं तथा।
कृतं युक्तं विधानेन युक्तं तत्परिकीर्तितम्॥
शक्तिं शम्भुमथैकत्र स्थापयेत्तत्सहैव तु।'
'मृण्मयं शैलजं चैकं शेषं लोहजमुच्यते।' इति॥

(**सुप्रभेदे** ३८.४ उ० – ६; १४ उ०)

अत्र शम्भुं विना शक्तेः परं यत्र स्थापनं तदेकम्। पूर्वं देवं संस्थाप्य पश्चात्काले देवीस्थापनं यत् तद् युक्तम्। सहैव देवदेव्योः स्थापनं सहेति भेदत्रयं वर्ण्यते। अत्रापि नामतो लक्षणतश्च भेदो दृश्यत इति वैजात्यं स्पष्टम्।

अस्मिन्विषये अंशुमदागमे स्वतन्त्रं केवलमिति द्विविधमिति निर्दिश्य परिवारादिभिर्युक्तं स्वतन्त्रं, परिवारविहीनं यत्तत्केवलमिति तयोर्लक्षणमभिधीयते। यथा —

'स्वतन्त्रं केवलं चेति द्विविधं परिकीर्तितम्।
स्वतन्त्रं वीरमित्युक्तं परिवारादिभिर्युतम्॥
परिवारादिहीनं यत्केवलं चेति कथ्यते।' इति॥

(**अंशुमदागमे** ८०.२ उ०, ३)

रौरवेऽस्मिन्पटले वीरशक्तिलक्षणं (२५ – ५६ श्लोकेषु) विस्तरेणाभिधीयते। तत्र देवी मध्यमदशतालेन कर्तव्या। परिवारसमावृतत्वेन स्थापनीयेति कथ्यते। देवी चतुर्भुजा त्रिनेत्रा, अथवा द्विभुजा द्विनेत्रा कर्तव्येत्युक्त्वा मूर्तिद्वयस्यापि लक्षणं प्रतिपाद्यते। वीरशक्तेर्लक्षणमेतत्पटलार्थसंग्रहे प्रतिपादितमस्ति। वीरशक्तेर्लक्षणविषये पूर्वकारणे ९० तमे पटले तथोत्तरकारणे ८४ तमे पटले च 'वीरं स्वतन्त्रमित्युक्तम्' इति लक्षणमुच्यते। अत्रोक्तस्वतन्त्रशब्दविवरणमंशुमदागमे परिवारादिभिर्युतमिति सम्यक् प्रतिपाद्यत इति भाति। एवं शक्तित्रयविषये साजात्यं वैजात्यं च प्रादर्शि। एवं सप्तचत्वारिंशत्पटलात्प्रभृति पञ्चषष्टिपटलान्तं दृश्यमाना एतदागमीयविशेषा यथाकथंचिन्निरूपिताः।

**अनुबन्धे** पटलपुष्पिकायां 'रौरवे शौचाचमनस्नानार्चनाविधिसंग्रहः' इति दृश्यते। अनुबन्धेऽत्र (१–७१) श्लोकेषु क्रमेण शौचे, दन्तधावने, आचमने, कौपीनधारणे, वारुणस्नाने विधिस्नानविषये, शिवतीर्थकल्पने, भस्मोत्पादनाय गोमयग्रहणे, गोमयदाहेन भस्मोत्पादने, भस्मस्नानविधौ, संध्योपासने

प्राणायामविधौ, मार्जनाघमर्षणयोः, अर्घ्यदाने, देवर्षिपितृतर्पणविधौ, प्रदक्षिणविधौ, पुष्पविषये, मन्त्रोद्धारविधौ च रौरवागमतः श्लोकाः संगृहीता इति पटलपुष्पिकामूलतो ज्ञायन्ते। रौरवे प्रथमभागे यद्यपि शौचविधिपटलस्तथा स्नान-भस्मस्नान-आचमन-मन्त्रोद्धारपटलाः सन्ति। तेषु पटलेषु सर्वेऽपि विषयाः संग्रहेण प्रतिपाद्यन्ते। तेषु पटलेषु शौचाचमनमन्त्रोद्धारविषयेषु परं केचन श्लोका एवोपलब्धाः। यथा शौचविषये अनुबन्धे प्रथमश्लोके 'यावद्भावस्य संशुद्धिस्तावच्छौचं समाचरेत्।' इति दृश्यते। अत्र विषये रौरवे (५.४ उ०) श्लोके 'यावन्मात्रं मनःशुद्धिस्तावच्छौचं समाचरेत्'। इति किंचित्पाठभेदेन दृश्यते।

आचमनविषयेऽनुबन्धे रौरवे आचमनविधौ च 'गोकर्णाकृतिहस्तेन माषमग्नजलं गृहेत्।' इति दृश्यते।

मन्त्रोद्धारविषये बीजमुख्यमन्त्रविषयश्लोका अनुबन्धे रौरवमन्त्रोद्धारपटले च प्रायेण सदृशतया दृश्यन्ते। यथा —

'षड्वर्गात्पञ्चमं चैव प्रथमेऽष्टममक्षरम्।
साग्निबीजमनुस्वारं [प्रथमं] बीजमुच्यते॥
तृतीयाच्च तृतीयं च आदौ चैवाष्टमाक्षरम्।
यान्तमारूढमत्रापि सानुस्वारं द्वितीयकम्॥
षष्ठमं चाष्टमे वर्गे आदौ चैवाष्टमाक्षरम्।
यान्तं बिन्दुसमायुक्तं तृतीयं बीजमुच्यते॥
बीजमुख्यमिदं प्रोक्तं [क्षुरिकास्त्रमथ शृणु]।

(अनुबन्धे ६३ उ० – ६६)

'षड्वर्गात्पञ्चमं चैव प्रथमेऽष्टममक्षरम्।
साग्निबीजमनुस्वारं प्रथमं बीजमुच्यते॥
तृतीयं च [द्वाद]शं तदादौ चैवाष्टमाक्षरम्।
यान्तमारूढमत्रापि सानुस्वारं द्वितीयकम्॥
षष्ठं चैवाष्टमे वर्गे यान्तं बिन्दुसमन्वितम्॥
.........संयुक्तं तृतीयं बीजमुच्यते।
बीजमुख्यमिदं ख्यातं वरुणादिदलत्रये॥

**(रौरवे क्रियापादे १.११ उ० – १४)**

अष्टाक्षरविषयेऽनुबन्धे — (७० उ० – ७१ पू०)
'दलानामग्रपूर्वादि ओं शिवाय नमो नमः।
अष्टाक्षरमिदं मन्त्रम्''
रौरवे —
'दलानामग्रपूर्वादि ओं शिवाय नमो नमः।'' इति॥

(**रौरवे** १.१६ उ०)

किं च दन्तधावनकौपीनधारणविषयौ रौरवे न दृश्येते। वारुणस्नानभस्मस्नानविषयेऽनुबन्धे प्रदर्शिता विषयाः, संध्योपासनविषये प्राणायामविधिः, प्रदक्षिणविधिश्च रौरवे नोपलभ्यन्ते। उपलब्धा विषया अपि संग्रहेण प्रतिपादिताः। यथा —

'शिवं ब्रह्माङ्गमुच्चार्य कारयेदघमर्षणम्।'
'देवानां च ऋषीणां च पितॄणां तर्पयेत् क्रमात्।'

(**रौरवे** ७.३ उ०, ६ पू०);

अनुबन्धेऽघमर्षणे देवर्षिपितृतर्पणविषये च बहवः श्लोकाः प्रदर्शिताः।

अनुबन्धे (७२ – १४५ श्लोकेषु) आत्मार्थपरार्थयजनाधिकारिविषये, करन्यासाङ्गन्यासयोः, अन्तर्यागे, पूजार्हपत्रविषये, निर्माल्यहीनपुष्पविषये, उत्तमादिपुष्पविषये घण्टाताडने, अर्घ्यादिदानकालविषये, मन्त्रप्रयोगविषये, लिङ्गशुद्धिविषये, पीठशुद्धिविषये, गुरुपूजायां, शिवासनकल्पने, लिङ्गपूजायाम्, आवरणार्चनविषये च रौरवागमतः श्लोकाः संगृहीतत्वेन प्रदर्शिताः। तत्र १०८, १०९ श्लोकयोः प्रतिपाद्यमानं मन्त्रप्रयोगविषयं विनाऽन्यविषये दृश्यमानाः श्लोकाः सर्वेऽपि रौरवे ५९ तमे पटले नित्यपूजाविधौ पूर्वप्रदर्शितविषये सन्ति। अतोऽर्चनाविधिसंग्रहविषयः सम्यगत्र प्रतिपादित इति भाति। अत्र विषये ५९ तमे पटले विद्यमानानां श्लोकानां संख्या क्रमेण सूच्यते।

आत्मार्थपरार्थयजनाधिकारिविषये ५९.९ – १४ श्लोका द्रष्टव्याः।

करन्यासे ५९.३१–३७ श्लोका द्रष्टव्याः।

अङ्गन्यासे ५९.३८–४० पू० श्लोका द्रष्टव्याः।

अन्तर्यागे ५९.४० उ०–५३ श्लोका द्रष्टव्याः।

पूजार्हपत्रविषये निर्माल्यहीनपुष्पविषये च ५९.७० उ०–७४ पू० श्लोका द्रष्टव्याः।

उत्तमादिपुष्पविषये ५९.८५ उ०, ८६ पू० श्लोकोऽवलोकनीयः।

घण्टाताडने ५९.१०१, १०२ श्लोकौ, द्रष्टव्यौ।

अर्घ्यादिदानकालविषये ५९.११६, १२२–१२४ पू० श्लोका द्रष्टव्याः।

लिङ्गशुद्धिविषये ५९.१४०–१४२ पू० श्लोका अवलोकनीयाः।

पीठशुद्धिविषये ५९.१४२ उ०, १४३ पू० श्लोको द्रष्टव्यः।

गुरुपूजायाम् ५९.१४४, १४५ पू० श्लोकौ द्रष्टव्यौ।

शिवासनकल्पने ५९.१४८ पू०–१६५ श्लोका द्रष्टव्याः।

लिङ्गपूजायाम् ५९.१७३ उ०–१८८ पू० श्लोका अवलोकनीयाः।

आवरणार्चनविषये ५९.१९३–१९५ श्लोका द्रष्टव्याः।

'उपांशूच्चार्य चार्चेत्तु वाचिकं होमकर्मणि।
मानसं पूजयेद्यत्तु पुष्पमन्त्रमुदाहृतम्॥
धूपदीपे तु नैवेद्ये होमकाले प्रजापते।
स्वाहान्तं संप्रयोक्तव्यमभिषेके नमोऽन्तकम्॥'

(अनुबन्धे १०८, १०९);

इत्येतच्छ्लोकद्वयं रौरवे कुत्रापि न दृश्यते।

एवमनुबन्धविषये रौरवे शौचाचमनस्नानार्चनासंग्रहविषये विशेषः यथाकथंचित्प्रत्यपादि।

## पटलार्थसंग्रहः

**सप्तचत्वारिंशे पटले** निर्वाणदीक्षाविधिरभिधीयते। तत्र प्रथमं यया प्रशस्तया क्रियया पशूनां शिवत्वव्यक्तिः, पाशत्रयविश्लेषश्च संजायते, दीक्षितस्य शिवज्ञानशिवभक्तिसंसारवैराग्यादिचिह्नानि च लक्ष्यन्ते सा दीक्षेति दीक्षास्वरूपं वर्ण्यते। ततः सामान्येन पशूनां लक्षणं कथ्यते। ततो मलमाया-कर्माख्यानां पाशानां त्रयाणां स्वरूपवर्णनमभिधाय, पशोरज्ञानतः कर्मभोगाय मायासंबन्धो भवति, ईश्वरेच्छां विना नैव मुक्तिर्भवेदिति निगद्यते। ततो बद्धमुक्तयोर्लक्षणं, तथा विज्ञानाकलप्रलयाकलसक-लाख्यानां त्रिविधानामात्मनां लक्षणं च प्रतिपाद्यते। ततो दीक्षाभेदा निरूप्यन्ते। तत्रादौ यत्राचार्य-मूर्तिमनपेक्ष्य शिवेनैव तीव्रशक्तिपातवशाद्विज्ञानाकलप्रलयाकलानां दीक्षा क्रियते सा निराधारा, आचार्य-मूर्तिमास्थाय मन्दमन्दतरतीव्रतीव्रतराख्यचतुर्विधशक्तिपातवशात् सकलानां शिवो दीक्षां निर्वर्तयति सा साधारेति साधारनिराधाराख्यदीक्षाभेदद्वयं निरूप्यते।

एवं शिवानुग्रहात् कृतपुण्यानामात्मनां चाक्षुष्यादिबहुविधा दीक्षाः संपद्यन्ते। ताश्च क्रमेण चाक्षुषी, स्पर्शदीक्षा, वाचिकी, मानसी, शास्त्री योगदीक्षा हौत्रीत्यादयो भवन्तीत्युच्यते। एतासां दीक्षाणां लक्षणं सम्यग्वर्ण्यते।

समासाद्दीक्षा ज्ञानवती क्रियावतीति द्विधा भिद्यते। इज्यानलकर्मादिकं विना मनोव्यापारमात्रतः क्रियमाणा ज्ञानवती, इज्यानलवती या सा क्रियावतीति तयोः स्वरूपं निरूप्यते। समयिपुत्रकयोर्नि-र्बीजिका दीक्षा, साधकाचार्ययोः सबीजा भवति। तत्र निर्बीजिका दीक्षा सद्यो निर्वाणदा, देहपाततः परं निर्वाणदेति द्विप्रकारा भवति। समयाचाराद्यनुवर्तनापेक्षा सबीजा, तदनपेक्षा निर्बीजिका। बाला-दीनामसमर्थानां निर्बीजिका दीक्षा, समर्थानां विदुषां च सबीजा दीक्षा कर्तव्येति सबीजनिर्बीजदीक्षयोः स्वरूपं प्रतिपादितम्। साधकाचार्ययोर्विषये धर्माधर्मात्मकं सर्वं कर्म यत्र शोध्यते सा शिवधर्मिणी। अधर्ममात्रसंशुद्धौ लोकधर्मिणीति सबीजदीक्षा द्विधा भवतीत्युच्यते। समयिपुत्रकयोर्नित्यमात्राधि-कारत्वान्निरधिकारैव, साधकाचार्ययोर्नित्यनैमित्तिककाम्यकर्मसु सर्वत्राधिकारत्वात्साधिकारैव भवतीति सबीजदीक्षाविषये निरधिकारसाधिकारभेदद्वयं निरूप्यते।

यत्र रुद्रपदे, ऐश्वरे पदे वा दीक्ष्यस्यात्मनो योगः, शिखाच्छेदो न क्रियते सा समयदीक्षा। यत्र पुत्रकस्य शिवपदे योगः, शिखाच्छेदश्च निर्वर्त्यते सा निर्वाणदीक्षा। अत्र पुत्रकस्याभिषेको नेति सूच्यते। साधकविषये पूर्वोक्तप्रकारेण निर्वाणदीक्षा, साध्यमन्त्रेणाभिषेकश्च भवतीति साधकविषयेऽभिषेकश्च सूचितः। आचार्यविषये निर्वाणदीक्षा सर्वमन्त्रैरभिषेकश्च भवतीत्याचार्याभिषेकश्च विधीयते। एवं समयदीक्षा – निर्वाणदीक्षा-साधकाभिषेकाचार्याभिषेकाणां परस्परं भेदो न्यरूपि।

दीक्षया मलमायाकर्माख्यत्रिविधसंसारबन्धनात्पशुर्मुच्यते। सा च दीक्षा षडध्वसंशुद्धिरूपा। अध्वानश्च मन्त्रपदवर्णभुवनतत्त्वकलाख्याः। एतेषामध्वनां परस्परं व्याप्यव्यापकभावोऽस्ति। तत्र मन्त्रपदवर्णाः समन्ततो व्याप्ताः। वर्णा भुवनैर्व्याप्ताः। भुवनानि तत्त्वैर्व्याप्तानि। तत्त्वानि च कलाभिर्व्याप्तानि। एवं च निवृत्त्यादिपञ्चकला मन्त्रादीनां पञ्चानामध्वनां परमव्याप्तिकाः। तेन कला एव कलादीक्षया विभाव्य शोधनीयाः। कलाशुद्ध्यैव तदन्तर्गतानां पञ्चानामध्वनां शुद्धिः संपद्यते। ताश्च कला हृत्कण्ठ-तालुभ्रूमध्यब्रह्मरन्ध्रावधि विलसन्तीति विभाव्य शोधनीया इत्यभिधाय निवृत्त्यादिपञ्चसु कलासु शुद्ध्यर्थं योजनीयानां तत्त्ववर्णभुवनपदमन्त्राणां गन्धादीनां गुणानां ब्रह्मादिकारणेश्वराणां च योजना-प्रकारो यथावद्वर्ण्यते।

दीक्षोपयुक्तानां षडध्वनां समुद्देशः सविभागं क्रमेण कथ्यत इत्युक्त्वा षडध्वनिरूपणं सम्यक् प्रति-

पाद्यते। तत्र सद्योजातवामदेवाघोरतत्पुरुषेशाना इति पञ्चब्रह्ममन्त्रास्तथा हृच्छिरःशिखाकवचास्त्राणीति पञ्चाङ्गमन्त्रा मूलमन्त्रश्चेति मन्त्राध्वा, व्योमव्यापिमन्त्रात्मकान्येकाशीतिपदानि पदाध्वा, अकारादिक्षकारान्ताः पञ्चाशद्वर्णा वर्णाध्वेति मन्त्रपदवर्णाध्वानस्त्रयो निरूप्यन्ते।

ततो निवृत्तिकलायां संयोजनीयानां कालाग्न्यादिभुवनानामष्टोत्तरशतं नामतो निर्दिश्य, तत्र कालाग्न्यादिरौद्रान्तानि भुवनानि षड् ब्रह्माण्डस्यान्तर्योजनीयानीत्युच्यते। ततः कपालीशादयो दश प्राच्याम्, अग्निरुद्रादयो दशानले, याम्याद्या दश दक्षिणभागे, निर्ऋत्याद्या दश नैर्ऋते भागे, बलाद्या दश वारुणे भागे, शीघ्राद्या दश वायव्ये भागे, निधीशाद्या दशोत्तरे भागे, विद्याधिपाद्या दशेशानभागे, वृषादयो दशाधोभागे, शम्भुमुख्याद्या दश ऊर्ध्वभागे च योजनीया इति ब्रह्माण्डबहिर्देशे दशदिक्षु योजनीयानां भुवनानां शतं न्यरूपि। एवं सर्वभुवनोर्ध्वे वीरभद्रो भद्रकालीति भुवनद्वयं योजनीयमिति निवृत्तिकलायां योजनीयभुवनानामष्टोत्तरशतं प्रतिपाद्यते।

प्रतिष्ठाकलायां संयोज्यान्यमरेशादिषट्पञ्चाशद्भुवनानि पूर्ववन्नामतो निर्दिश्यन्ते। अत्रापि अमरेशाद्यष्टकमप्तत्त्वे, हरिश्चन्द्राद्यष्टकं तेजस्तत्त्वे, गयाद्यष्टकं वायुतत्त्वे, वस्त्रापदाद्यष्टकमाकाशतत्त्वे, छगलण्डाद्यष्टकमहंकारतत्त्वे, पैशाचाद्यष्टकं बुद्धितत्त्वे, अकृताद्यष्टकं प्रकृतितत्त्वे च क्रमेण योजनीयमिति षट्पञ्चाशद्भुवनानां संयोजनप्रकारो न्यरूपि।

विद्याकलायां संयोज्यानि वामादीनि सप्तविंशतिभुवनानि नामतो निर्दिश्यन्ते। अत्रापि वामादीन्येकवीरकान्तानि षड् भुवनानि पुरुषतत्त्वे, प्रचण्डादिभुवनपञ्चकं रागतत्त्वे, क्रोधादिशिखेदान्तान्यष्ट भुवनानि द्विकद्विकतया नियतिविद्याकलाकालाख्येषु चतुर्षु तत्त्वेषु, महाद्युत्यादिभुवनान्यष्ट मायातत्त्वे च क्रमेण योजनीयानीति सप्तविंशतिभुवनानां संयोजनप्रकारः प्रत्यपादि।

शान्तिकलायां योजनीयानि वामाप्रभृति सदाशिवान्तान्यष्टादशभुवनानि शुद्धविद्यातत्त्वेश्वरतत्त्वसदाशिवतत्त्वेषु योजनीयानीति तानि भुवनानि नामतो निर्दिष्टानि। तत्र वामादिमनोन्मन्यन्तानि नव भुवनानि शुद्धविद्यातत्त्वे, अनन्तादिशिखण्डयन्तान्यष्ट भुवनानीश्वरतत्त्वे च योजनीयानि। सदाशिवभुवनमेकं सदाशिवतत्त्वे योजनीयमिति भुवनयोजनप्रकारः प्रतिपादितः।

शान्त्यतीतकलायां संयोज्यानि निवृत्त्यादीनि भुवनानि पञ्चदश भवन्तीति नामतो निर्दिष्टानि। एवं च पञ्चकलावर्तिभुवनानां संख्या चतुर्विंशोत्तरशतद्वयमिति भुवनाध्वा प्रतिपाद्यते।

ततः पञ्चभूतानि, पञ्चतन्मात्राणि, पञ्चकर्मेन्द्रियाणि, पञ्चज्ञानेन्द्रियाणि, तथा मनोऽहंकारबुद्धिप्रकृतितत्त्वानि, पुरुषरागनियतिविद्याकलाकालमायातत्त्वानि, शुद्धविद्यातत्त्वेश्वरतत्त्वसदाशिवतत्त्वशक्तितत्त्वशिवतत्त्वानीति षट्त्रिंशत्तत्त्वानि भवन्तीति तत्त्वाध्वा निरूपितः।

निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीतेति पञ्चकला भवन्तीति कलाध्वा प्रतिपाद्यते। एवं सप्तचत्वारिंशपटलार्थसंग्रहः।

**अष्टचत्वारिंशे पटले** आचार्याभिषेकविधिर्निगद्यते। तत्रादौ समयविशेषनिर्वाणदीक्षानन्तरमाचार्याभिषेको विधेयः। साधकस्यापि निर्वाणदीक्षानन्तरं साधकाभिषेकः कर्तव्य इति दीक्षाविधिक्रमोऽभिधीयते। देवालये सवेदिकं मण्टपं वा प्रपां वा प्रकल्प्य तत्र नवकुण्डं सप्तकुण्डमथवैकं कुण्डं वा कुर्यात्। अष्टमङ्गलानि, पञ्चवर्णलिखितलिङ्गानि, चतुर्द्वारचतुस्तोरणानि च कल्पयेदिति मण्डपविधि प्रतिपाद्य, तत्तद्वर्णाधिपदेवानन्यांश्च मण्डपे पूजनीयान्दिक्पालादिदेवांस्तत्तन्मन्त्रैः पूजयेदिति मण्डपपूजाविधिः सूच्यते। ततोऽभिषेकात्पूर्वदिने ईशानभागे उत्तरे वाङ्कुरार्पणं कुर्यादित्युक्त्वा तदर्थं शालिभिः स्थण्डिलकल्पन तत्र पालिकाविन्यासप्रकारस्तदधिदेवाश्च प्रतिपाद्यन्ते। ततः शिष्याणां स्वापविधिः समन्त्रकं निगद्यते। ततो दुःस्वप्नसुस्वप्नान्परीक्ष्य दुःस्वप्ने जाते तद्दोषशमनाय विधेयो होमविधिः सूच्यते। तत उषःकालप्रभृति कर्तव्यं नित्यकर्म कृत्वाचार्यः सुलग्नसहिते सुमुहूर्ते शिष्याणां चौलकर्म

यथाविधि कारयित्वा, तेषां स्नानशुद्धिवस्त्राच्छादनोपवीतधारणादिकं यथाक्रमं कारयेदित्युच्यते। ततः सौम्ये दक्षिणे वा कुम्भस्थापनं कर्तव्यमित्युक्त्वा नवविधतीर्थसहितनवकुम्भस्थापनं विधीयते। तत अग्न्याधानादिकं कृत्वाग्निं संपाद्य तत्र विधेयो होमविधिः सद्रव्यं समन्त्रकं प्रतिपाद्यते। ततोऽभिषेकार्थं वेदिकाकल्पनं, तत्रासनकल्पनपूर्वकं शिष्ययोजनप्रकारश्च वर्ण्यते। ततः शिष्यदेहशुद्धिप्रकारो निरूप्यते। तत्र पञ्चमृत्पञ्चगव्यपञ्चामृतपञ्चलेपनानां स्थापनप्रकारस्तैरभिषेकप्रकारस्तथाङ्गशुद्ध्यै कर्तव्यो लेपनप्रकारश्च विशिष्य प्रतिपादितः। शिष्याणां ब्रह्मक्षत्रियविट्शूद्राणां समयविशेषनिर्वाणदीक्षात्रयं कर्तव्यम् आचार्यत्वसंपादनाय कलाशुद्धिः, पञ्चप्रासादमन्त्रप्रदर्शनं च कर्तव्ये इति सूच्यते। अत्र समयदीक्षया जन्मशुद्धिः स्यादिति विशेषतोऽभिधानं दृश्यते। एवं जन्मशुद्धिर्देहशुद्धिर्मन्त्रशुद्धिः कलाशुद्धिरिति चतुर्धा शुद्धिप्रकारः सूच्यते। ततो मध्याह्ने पूर्वोक्तवद्धोमादिकं कृत्वा मण्डपाद्बहिः स्थण्डिलं प्रकल्प्य तत्र लिङ्गस्य तथा दशायुधानां च विन्यासप्रकारो निरूप्यते। एतदनन्तरं विषयानुस्यूतेरदर्शनादत्र ग्रन्थपातः स्यादित्यूहितुमवकाशोऽस्ति। ततः शङ्खाभिषेकविषयो लेशतः प्रतिपाद्यते। तत्र समयविशेषनिर्वाणदीक्षाभिः संस्कार्याणां प्रथमतो निर्देशः क्रियते। ततः शङ्खाभिषेकविषये जप्यानां मन्त्राणां प्रतिपादनं दृश्यते। तत इन्द्रादीशानपर्यन्तं वामादिशक्तयः स्थापनीया इत्युच्यते। ततः शिष्याणां वस्त्रभूषणधारणविषयः सूच्यते। ततः शङ्खजलप्रोक्षणप्रकारः प्रतिपाद्यते। ततोऽङ्गशुद्ध्यर्थं कर्तव्यो ऽङ्गहोमविषयोऽभिधीयते। अत्राङ्गानि परं निर्दिष्टानि तान्यपि न समग्रतया दृश्यन्ते। तदीयमन्त्रनिर्देशप्रतिपादकग्रन्थो न विद्यते। तत ऋत्विजां पूजापुरःसरं दक्षिणादानप्रकारो वर्ण्यते। ततोऽभिषेकविधिरभिधीयते। तत्र गुरुः शिष्यान्पूर्वाशामुखान्स्थापयित्वा स्वयमुत्तराभिमुखः स्थित्वाभिषेचयेदित्युच्यते। ततो ब्राह्मणादिचतुर्वर्णेषु यथाविधि दीक्षानामकरणपूर्वकं गीतनृत्तादिभिः शङ्खवीणावेण्वादिवाद्यघोषैर्वेदघोषैश्च सह कुम्भतोयैरभिषेचयेत्। इदमभिषेचनं गोत्रनामाभिषेचनमिति प्रशंस्यते। ततोऽभिषेकानन्तरकरणीयविधिः प्रतिपाद्यते। तत्र शिवसूत्रधारणविधिः प्रथमतो निगद्यते। शिवसूत्रधारणकाले जप्तव्यमन्त्रनिर्देशश्च विशिष्य प्रतिपादितः। ततः पाद्याद्युपचारदानं, शिवहस्तसमर्पणमधिकारसमर्पणमित्येते विषयाः सम्यङ्निरूपिताः। अधिकारसमर्पणविषयप्रतिपादनान्ते शिष्यं रङ्गं शिबिकां वारोप्य स्वगृहं प्रवेशयेदित्युच्यते। अन्ते चैवमभिषिक्त एवोत्तमाचार्यत्वेन गण्यत इति प्रशंस्यते। संवत्सरान्ते चैवमभिषिक्तमाचार्यं नित्यार्चननित्यहोमसमयविशेषनिर्वाणदीक्षाकरणे तथाचार्याभिषेककरणे च नियोजयेदित्युच्यते। अत्र पटले श्लोकानां पौर्वापर्यविषये दीक्षादर्शग्रन्थरीत्या विमृश्यमाने १७ तमः श्लोकः 'शिष्याणां चौलादिकरणम्' इत्येतच्छीर्षकपूर्वकं तृतीयश्लोकपूर्वार्धानन्तरं भवितव्यः। एवं कुम्भस्थापनविषयकः १८ तमः श्लोकः नवमश्लोकपूर्वार्धानन्तरमङ्कुरार्पणविषयात्पूर्वं स्थातव्य इति भाति। एवम् **अष्टचत्वारिंशपटलार्थसंग्रहः।**

**एकोनपञ्चाशे पटले** ग्रामदेवोत्सवविधिः प्रतिपाद्यते। तत्र प्रथमं विघ्नराजो गुहो विष्णुर्दुर्गा शास्तेति पञ्च देवाः ग्रामदेवतात्वेन परिगणिताः। एता देवताः शिववदेकग्रामे तत्र तत्र स्थाने स्थाने भवेयुरित्युच्यते। ततो दुर्गाविष्ण्वोरालयकल्पनप्रकारो वर्ण्यते। दुर्गाविष्ण्वोरालयाग्रे ध्वजस्थानं भवितव्यम्। महोत्सवे दुर्गाविष्ण्वोर्यानं वास्तुमङ्गलवीथ्यां कर्तव्यम्। पञ्चगोचरमूर्तीनां सर्वासां शिवस्थानबाह्येषु धाम भवितव्यमित्युच्यते। ततो ग्रामदेवतानां नित्योत्सवप्रकारवर्णनं, महोत्सवविषयसूचनं च दृश्यते। वास्तुमङ्गलवीथ्यां सर्वेषां महोत्सवः कर्तव्य इत्युच्यते। ततोऽन्यग्रामदेवानां स्वग्रामे महोत्सवकरणे दोषनिरूपणं क्रियते। एवम् **एकोनपञ्चाशपटलार्थसंग्रहः।**

**पञ्चाशे पटले** नवरात्रपूजाप्रकारो वर्ण्यते। तत्रादौ कन्यामासे कृष्णपक्षे, आर्द्रानक्षत्रे वा पूजयेदिति पूजाकालो निर्दिश्यते। ततो नवरात्रपूजनप्रकारो निरूप्यते। तत्र प्रथमाभारभ्य नवरात्रं पूजयेत्। उत्सवकाले चाह्नि यजमानस्योपवासो विधीयते। देशिको रक्षाबन्धनकर्म कारयेदित्युच्यते। पूजाकाले

मध्ये दुर्गां वामदक्षिणभागयोः क्रमेण सरस्वतीलक्ष्म्यौ च स्थापयेदित्यभिधीयते। पूजायां पायसान्नं निवेदनीयमित्युच्यते। तत उत्सवप्रकारो निरूप्यते। ततो रक्षाबन्धनस्थानानि निर्दिश्यन्ते। तत्र नदी-तीरे, तटाकतीरे, समुद्रतीरे च पूर्वदेशे, विशेषेण देवस्याग्रे किंचिदीशानकोणे, वह्निवृक्षसमीपे च रक्षा-सूत्रबन्धनं कारयेदित्युच्यते। ततो मण्डपपूजाप्रकारो वर्ण्यते। ततो दशमदिनोत्सवः प्रतिपाद्यते। तत्रोमासहितदेवानां यानकर्म कर्तव्यमित्युच्यते। ततो देवदेव्यौ वेदिकायां संस्थाप्य नवकलशस्नपनेना-भिषिच्य पायसान्नं निवेदयेदित्युच्यते। ततो यज्ञवृक्षपूजनं, युद्धयात्रावर्णनं च दृश्यते। अन्ते च देव-देव्यौ यानमारोप्यालयं प्रवेशयेदित्यभिधीयते। ततः सरस्वतीपूजा संक्षेपतः प्रतिपाद्यते। एवं **पञ्चाश-पटलार्थसंग्रहः**।

**एकपञ्चाशे पटले** क्षेत्रपालस्थापनविधिरुच्यते। क्षेत्रपालस्य मन्त्रमुद्राः, स्थापनपूजनोत्सवस्नप-नानि च कथ्यन्तामिति रुरोरीश्वरं प्रति प्रार्थना। तदीयप्रार्थनानुसारेणेश्वरेणोत्तराण्यभिधीयन्ते। तत्र प्रथमं क्षेत्रपालमन्त्रा मुद्राश्च निरूप्यन्ते। ततोऽष्टभुजक्षेत्रपाललक्षणमभिधाय तद्रूपं मृण्मयं कल्पयेदि-त्युच्यते। ततः क्षेत्रपालस्थापनयोग्यस्थानं, तदालयकल्पनप्रकारश्च निरूप्यते। ततो वेदिकाकुण्डसहि-तमण्डपकल्पनप्रकारः कथ्यते। तत्र पञ्चकुण्डकल्पनप्रकारः प्रतिपाद्यते। ततः मण्डपसंस्कारो वर्ण्यते। ततो रत्नन्यासनेत्रोन्मीलनग्रामप्रदक्षिणजलाधिवासविधयः संक्षेपतः कथ्यन्ते। ततः शयनाधिवासकुम्भ-स्थापनतत्पूजाप्रकारा अप्यतीव संक्षेपेण प्रतिपाद्यन्ते। ततो होमविधिः समन्त्रकं सद्रव्यकं चाभिधीयते। ततः प्रातः कर्तव्यत्वेन कुम्भाभिषेकविधिरपि लेशतः प्रतिपादितः। तत इन्द्रादीशानपर्यन्तं कल्पनीया इत्यसिताङ्गाद्यष्टभैरवाः परिवारत्वेन निर्दिश्यन्ते। क्रोधकुम्भकाविति द्वौ द्वारपालत्वेन निर्दिष्टौ। अन्ते चाचार्यपूजनप्रकारो वर्णितः। एवं क्षेत्रपालस्थापनविधिः संक्षेपेण प्रत्यपादि। ततो नित्यपूजा-विधिः, परिवारबलिदानप्रकारश्च संक्षेपतोऽभिधीयते। एवं नित्यपूजाविधानप्रकारो न्यरूपि। तत उत्सवविधिरभिधीयते। तत्र प्रतिष्ठान्ते सप्ताहमेकाहं वोत्सवं कारयेत्। सप्ताहोत्सवे रात्रावुत्सवार-म्भः, प्रभाते तीर्थविधिश्च कर्तव्याविति सूचयित्वा दिनदेवतानिरूपणं, होमविधिः, सायंप्रातःकरणीयबलि-विधिश्च संक्षेपेण प्रतिपाद्यन्ते। सप्ताहोत्सवे तीर्थविधिं पूर्णिमायां समाचरेदित्युच्यते। उत्सवान्ते महाहविर्निवेदनं विशेषतः कर्तव्यमित्युच्यते। एवमुत्सवविधिर्न्यरूपि। ततो नवकलशस्नपनविधिः संक्षेपेण प्रत्यपादि। एवम् **एकपञ्चाशपटलार्थसंग्रहः**।

**द्विपञ्चाशे पटले** सर्पशान्तिविधिः प्रतिपाद्यते। तत्रादौ सर्पशिशूनां तदण्डानां च हनने संभाव्य-मानदोषो निरूप्यते। तत्रैकमासिकसर्पशिशोरारभ्याष्टमासिकसर्पशिशूनां हनने तद्धन्तुरेकमासिकस्यै-काब्दमिति गणनेनाष्टमाब्दान्तं शिशुनाशः स्यादिति दोषगणनं दृश्यते। एवमेकाण्डनाशे कृते एक-गर्भनाश इति गणनेन द्विशतोर्ध्वचत्वारिंशत्सर्पाण्डनाशाज्जायमानो गर्भनाशदोष ऊह्य इति दोष-परिगणनं क्रियते। ततस्तद्दोषपरिहाराय शान्तिपूर्वकं सर्पाणां स्थापनं कर्तव्यमित्युक्त्वा तद्विधिः प्रति-पाद्यते। तत्राचार्यवरणपुण्याहवाचनपञ्चगव्यसंपादनानि कर्तव्यानीत्युच्यते। ततः पिष्टादिभिः पूर्वनिर्दि-ष्टसर्पशिशुसर्पाण्डानां तथा फणियुग्म-कालकूट-वृश्चिक-विषनक्र-स्थूलकूटाख्यानां च निर्माणप्रकारः प्रति-पाद्यते। ततः शाल्यादिभिः स्थण्डिलनिर्माणप्रकारो वर्ण्यते। ततः स्थण्डिलद्वये धान्यराशिं निक्षिप्य तदूर्ध्वे कमलं विलिख्य तत्र रुद्रकुम्भवासुदेवकुम्भयोः स्थापनप्रकारस्तत्पूजाविधिश्चाभिधीयते। तत्र रुद्रकुम्भवासुदेवकुम्भयोर्विषये जप्या मन्त्रा निर्दिश्यन्ते। ततो होमविधिः समन्त्रकं प्रतिपाद्यते। ततः पिष्टसर्पादीनां प्राणप्रतिष्ठाकरणप्रकारकथनपूर्वकं चितायां निक्षेपो, होमाग्निना दाहः, रुद्रकुम्भजले-नाभिषेकश्च कर्तव्यः। तद्भस्मनां महानद्यां प्रक्षेपः कार्य इत्यादिक्रियाकलापोऽभिहितः। ततः सपत्नी-कस्य यजमानस्य विष्णुकुम्भाभिषेचनप्रकारो निरूप्यते। तत आचार्यदक्षिणादानं कर्तव्यम्। ब्राह्मणेभ्यो दशदानं देयम्। ततो ब्राह्मणान्भोजयेदित्युच्यते। अन्ते च सर्पशान्त्याचरणमाहात्म्याज्जीवत्पुत्रलाभो भवेदिति फलप्रदर्शनं दृश्यते। एवं **द्विपञ्चाशपटलार्थसंग्रहः**।

**त्रिपञ्चाशे पटले** दिनशान्तिकल्पे वास्तुशान्तिशान्तिहोमदिशाहोममूर्तिहोमजपशान्तिविषयः प्रतिपाद्यत्वेन निर्दिश्यन्ते। तत्र जलसंप्रोक्षणे 'वास्तुहोमं कुर्यात्' 'वास्तुदेवान्पूजयेद्' इति वास्तुशान्तेर्निमित्तं सूचितम्। एवं नित्यपूजाकाले दोषसंभवे शीघ्रं शान्तिः कर्तव्या। तदर्थं 'जपशान्तिं होमशान्तिं वास्तुशान्तिं पृथक् पृथक् कारयेत्' इति पूर्वनिर्दिष्टानां सर्वविधीनां निमित्तं प्रोक्तम्। एवं निमित्तसूचनपूर्वकं क्रमेण वास्तुशान्त्यादिविधयो निरूप्यन्ते। तत्र प्रथमं वास्तुशान्तिविषये वास्तुबलिवास्तुपूजावास्तुहोमपर्यग्निकरणानि निरूपितानि। ततः शान्तिहोमदिशाहोममूर्तिहोमाः, जपशान्तिविधिश्च प्रतिपाद्यन्ते। अत्र निमित्तसूचनप्रस्तावे प्रोक्तहोमशान्तिपदेन शान्तिहोमदिशाहोममूर्तिहोमा लक्षिता इत्यभ्युपगन्तव्यम्। एवं **त्रिपञ्चाशपटलार्थसंग्रहः।**

**चतुःपञ्चाशे पटले** सर्वशान्तिरथवाद्भुतशान्तिविधिरभिधीयते। तत्र गर्भगेहार्धमण्डपद्वारबलिपीठपरिवारालयेषु, ध्वजस्तम्भपचनालयसभास्थानेषु, गोपुरे, शिखरे, मण्डपे, कूपतटाकतीरे, धामवृक्षे, शालासु, द्रव्यकोशे, वृषस्थाने, प्रासादभित्तिदेशे, उत्सवमण्टपे, सोपाने दीपदेशे च गोमायुभिः शैथिल्यसंभवे, वल्मीकमधुपञ्जरोत्पत्तौ, श्वारोहे तद्रोदने च संजाते, कृकलासकच्छपरक्तकन्याश्वेतकन्यामण्डूकश्वेतवायसगर्दभकुक्कुटसूकरैरन्यैर्वनचारिभिश्च प्राणिनां पीडासंभवे च तत्रैव शान्तिः कर्तव्येत्युच्यते। ततः पूर्वादिदशदिक्षु संभाव्यमानगोमायुशैथिल्यादिदुर्निमित्तविषये दोषप्रदर्शनं क्रियते। ततो दोषशमनार्थं कर्तव्याः शान्तिहोमादयो निरूप्यन्ते। एवं **चतुःपञ्चाशपटलार्थसंग्रहः॥**

**पञ्चपञ्चाशे पटले** जीर्णोद्धारविधिरुच्यते। तत्रादौ प्रतिमाविषये भ्रूरेखापक्ष्मरेखानासिकानां तथा सर्वाङ्गानां च क्षये सति तां विसर्जयेदित्युच्यते। लोहजप्रतिमाविषयेऽङ्गहीने तद्वदन्यदङ्गं कारयेत्। मुखहीने तु तद्वदन्यं न कारयेत्। नाभिमध्यमहीने नैव संधानं कुर्यादित्युच्यते। मृण्मयं वर्णहीनं चेत् पुनर्वर्णलेपं कृत्वा ग्राह्यम्। तथा छिन्नं भिन्नं च पुनर्नवीकृतं ग्राह्यम्। शूलहीने तु जीर्णोद्धारं कारयेदित्युच्यते। शैलजमङ्गहीनं ध्रुवबेरं समुद्रे प्रक्षिप्य पुनरन्यच्छिलामयं कृत्वा स्थापयेदित्युच्यते। मृण्मयदारुजलोहजशिलामयानि बेराणि जीर्णान्यङ्गहीनान्यग्निदग्धानि पुनर्न पूजयेत्। मोहात्पूजने राजराष्ट्रविनाशः स्यात्। तानि बेराणि जले स्थले वा प्रक्षिप्य पुनरन्यानि बेराणि तत्तद्द्रव्यैर्निर्माय स्थापयेदिति कथ्यते। एवं **पञ्चपञ्चाशपटलार्थसंग्रहः।**

**षट्पञ्चाशे पटले** प्रायश्चित्तविधिरभिधीयते। तत्र प्रथमं प्रायश्चित्तशब्दार्थविवरणं क्रियते। ततोऽन्तर्मण्डलादिपञ्चप्राकारेषु, अर्धमण्डपमहामण्डपयोर्व्यञ्जनमण्डपे, गर्भगेहे च चण्डालप्रवेशे विधेयः प्रायश्चित्तविधिर्निरूप्यते। ततो गर्भगेहव्यञ्जनमण्डपमहामण्डपपचनालयेषु सुरामांसरुधिरप्रवेशे श्वानकुक्कुटवानरखरसूकराणां तथान्येषां मृगाणां पक्षिणां च मृतिप्रसूत्योः संभवे संभाव्यमानदोषप्रदर्शनपूर्वकं तत्र कर्तव्यः प्रायश्चित्तविधिश्च प्रतिपाद्यते। एवं **षट्पञ्चाशपटलार्थसंग्रहः।**

**सप्तपञ्चाशे पटले** नागप्रतिष्ठाविधिः कथ्यते। तत्रादौ नागप्रतिष्ठायोग्यस्थानानि निगद्यन्ते। तत्र शिवालये, विष्णवालये, नदीतटाकतीरयोः, शुद्धभूमिषु तथाश्वत्थवृक्षसंन्निधौ वा नागप्रतिष्ठा कर्तव्येत्युच्यते। ततः प्रतिष्ठाकालो निर्दिश्यते। तत्रोत्तरायणे पुष्यफाल्गुनचैत्रवैशाखमासेषु, दक्षिणायने आश्विनमासे च नागप्रतिष्ठा कार्येत्युक्त्वा प्रतिष्ठार्हनक्षत्रतिथयो निर्दिष्टाः। ततः कार्त्तिकशुक्लचतुर्थ्यां च प्रतिष्ठा विधेयान्यकालं वर्जयेदिति चोक्तम्। ततो नागप्रतिमालक्षणमुच्यते। तत्र नागप्रतिमामानं निरूप्य प्रतिवक्त्रं फलप्रदर्शनपूर्वकमेकद्वित्रिपञ्चवक्त्रनागाः कर्तव्या इत्युच्यते। तत आचार्यऋत्विग्वरणं तथा वेदपारायणाय विप्रवरणं च प्रतिपाद्यते। तत्राचार्यलक्षणकथनपूर्वकमादिशैवकुलोत्पन्न एवाचार्यत्वेन वरणीयः। दीक्षिता अष्ट विप्रा ऋत्विक्त्वेन वरणीयाः। एवं वेदपारायणार्थं शास्त्रवित्तमा अष्ट विप्रा वरणीया इत्युच्यते। ततो देशिको विप्रैः सह पुण्याहवाचनं द्रव्यशुद्धिं च विधाय कर्तव्यान्यन्यानि सर्वाणि नित्यकर्माणि निर्वर्त्य, आगमोक्तप्रकारेण मृत्संग्रहणपूर्वकमङ्कुरार्पणं

वास्तुहोमं च कुर्यादित्युच्यते। ततो विष्णुक्रान्तिदलैर्बेरशुद्धिं विधाय नेत्रोन्मीलनं शिल्पिना कारयित्वा वस्त्रहेमाङ्गुलीयकैः शिल्पिनं संमान्य तं विसृज्य देशिकः समन्त्रकं नेत्रोन्मीलनकर्म कुर्यादिति नेत्रोन्मीलनविधिः प्रदर्शितः। ततो जलाधिवासक्षीराधिवासधान्यवस्त्राधिवासविधयः क्रमेण प्रतिपाद्यन्ते। तत्र त्रिरात्रमेकरात्रं वा यामं यामार्धं वेति जलाधिवासकालो निर्दिश्यते। तत्काले गङ्गादिनदीनां पूजनं तथाचार्यऋत्विग्वेदपारायणकर्तॄणां पूजनमाचार्यादिभिः जप्यानामुदकशान्त्यादिमन्त्राणां प्रदर्शनमित्येते विषया निरूपिताः। एवं जलाधिवासनिरूपणानन्तरं जलादुत्थाप्य बेरं ग्रामप्रदक्षिणं कारयित्वा बेरस्य समन्त्रकं क्षीराधिवासधान्याधिवासवस्त्राधिवासकरणप्रकाराः संक्षेपतः प्रतिपाद्यन्ते। ततो रक्षाबन्धनकर्म समन्त्रकं सूच्यते। ततो वेदिकोपवेदिकासहितं वितानध्वजभूषितं षोडशस्तम्भसंयुक्तं पूर्वभागे वृत्तकुण्डयुक्तं मण्डपं कारयेदिति मण्डपकरणविधिरुच्यते। ततो वेद्युपरि पञ्चशयनकल्पनं, तत्र प्रतिमायाः शयनाधिवासविधानं च समन्त्रकं प्रतिपाद्यते। ततः कुम्भलक्षणकथनेन कुम्भस्थापनं सूच्यते। ततः स्वर्णनागप्रतिमाकरणप्रकारो वर्ण्यते। ततो मण्टपपूजाविधिर्विस्तरेण प्रतिपाद्यते। तत्राचार्येण कृतनित्यकर्मणा तथाविधैर्ऋत्विग्भिः सार्धं संकल्प्य पुण्याहवाचनपूर्वकं कर्तव्यः सूर्यपूजादिगुरुपूजनान्तकर्मनिर्वर्तनप्रकारो निरूप्यते। अत्र द्वारदेवतादिपूजा विशिष्य कथ्यते। ततः कुम्भपूजाविधिरुच्यते। तत्र प्रधानकुम्भे नागेश्वरार्चनप्रकारः प्रथमं निरूप्यते। नागेश्वरविषये एकत्रिंशत्कलान्यासो विधेय इति सूच्यते। नागेश्वरध्यानप्रकारस्तथा नागेश्वरदक्षवामयोः श्रीदेवीभूमिदेव्यौ यजेदित्युक्त्वा तयोरपि ध्यानप्रकारो वर्ण्यते। तत ऐशान्यां वर्धनीं स्थापयित्वा तत्र नागेश्वरीं ध्यात्वा पूजयेदिति वर्धनीपूजाप्रकारः प्रतिपाद्यते। ततः प्रधानकुम्भे स्वर्णनागप्रतिमां निक्षिप्य पूजां कुर्यादित्युक्त्वा तत्पूजाप्रकारः समन्त्रकं संक्षेपेण प्रतिपाद्यते। स्वर्णनागप्रतिमानिर्माणप्रकारः कुम्भलक्षणानन्तरं पूर्वं सूचितः। ततः परिवारघटेष्वष्टस्वनन्ताद्यष्टनागाः पूजनीया इत्युक्त्वाष्टनागपूजाविधिर्विस्तरेण निरूप्यते। अत्राष्टनागानां रूपध्यानकथनपूर्वकं पूर्वाद्यष्टदिक्षु स्थापितेषु कुम्भेषु पूजनप्रकारः स्पष्टं प्रतिपादितः। एवं कुम्भपूजाविधिर्न्यरूपि।

ततो होमविधिः सद्रव्यं समन्त्रकं च सम्यक् प्रोच्यते। होमान्ते चाचार्यः पञ्चगव्यप्राशनं चरुप्राशनं दन्तधावनाचरणं च विधाय यजमानादिभिः सह रात्रौ जागरणं कुर्यादित्युच्यते।

ततः प्रातःकरणीयविधिरभिधीयते। तत्राचार्यः प्रातः स्नात्वा नित्यकर्मादिकं कृत्वा ऋत्विग्भिः सार्धं यागमण्डपं प्रविश्य पूर्वोक्तद्वारपूजादिकं कुर्यादित्युच्यते। ततो बिम्बशुद्धिप्रकारः, त्रिखण्डन्यासमूर्तिमूर्तीश्वरन्यासतत्त्वतत्त्वेश्वरन्यासप्रकाराश्च वर्ण्यन्ते। ततो होमविधिः प्रतिपाद्यते। ततः प्राणप्रतिष्ठाविधिः कुम्भाभिषेकप्रकारश्च कथ्यते। ततः सर्पराजपूजाविधिरभिधीयते। तत्र विशिष्याङ्गपूजाविधिर्विधीयते। तत आचार्यादिपूजा, ब्राह्मणेभ्यो दशदानभूरिदानप्रदानं, तेभ्यो भोजनप्रदानं, ब्रह्मचारिणां दम्पतीसुवासिनीनां पूजापूर्वकं भोजनदानं, नागराजप्रतिष्ठाफलप्रदर्शनमित्येते विषया निरूप्यन्ते। अन्ते च प्रतिवर्षमाश्विनशुक्लचतुर्थ्यां सर्पराजयजनप्रकारः फलप्रदर्शनपूर्वकं प्रतिपाद्यते। एवं **सप्तपञ्चाशपटलार्थसंग्रहः**।

**अष्टपञ्चाशे पटले** ज्ञानदीक्षाविधिः कथ्यते। तत्रादौ नदीतीरे, पर्वताग्रे, मठे, गुरुमन्दिरे, स्वगृहे वा शुचिस्थाने चतुर्द्वारचतुस्तोरणं सवेदिकं दुकूलचित्रपट्टैर्मुक्तादामपुष्पदामभिरलंकृतं मण्डपं कृत्वा तं गोमयेनालिप्य पञ्चगव्यैः संप्रोक्षयेदिति दीक्षायोग्यस्थानं निरूप्यते। ततोऽधिवासविधिः प्रतिपाद्यते। ततो ज्ञानदीक्षायां रात्रिकाल उत्तम इति हेतुप्रदर्शनपूर्वकं निरूप्यते। ततो गुरुपादाम्बुजपूजनप्रकारो वर्ण्यते। तत्र शिष्यो गुरुं दक्षिणामूर्तिरूपेण भावयेदित्युच्यते। ततो ज्ञानदीक्षाविधानप्रकारोऽध्वशोधनप्रकारश्च प्रतिपाद्यते। तत्र ज्ञानदृष्ट्या शिष्यनिरीक्षणं, शिष्यब्रह्मरन्ध्रे स्वहस्ततलनिवेशनं, शिष्यमूर्धादौ गुरोः पादद्वयविन्यासकरणमित्यादिविषया उच्यन्ते। ततो गुरुः शिष्याय पत्यादिपदार्थविचार-

बोधकं शिवज्ञानबोधकं शास्त्रं प्रदद्यादित्युच्यते। ततः शिष्येण गुरवे स्वात्मसमर्पणप्रकारो वर्ण्यते। स्वात्मसमर्पणानन्तरं शिष्येण कथं लोके स्थातव्यमिति च सूच्यते। ततो ज्ञानदीक्षा मोक्षप्रदेत्युक्त्वा तस्या महिमा बहुधा प्रशंस्यते। एवम् **अष्टपञ्चाशपटलार्थसंग्रहः**।

**एकोनषष्टितमे पटले** नित्यपूजाविधिर्निगद्यते। तत्रादौ शिवपूजाफलप्रदर्शनपूर्वकमात्मार्थपरार्थ-पूजनलक्षणमभिधीयते। दीक्षोत्तरकाले गुरुणा दत्ते लिङ्गे, मण्डले, प्रतिमायामथवा क्षणिकलिङ्गे, मानसे वा भक्त्या पूजनमात्मार्थम्, तथा सर्वजनरक्षार्थं ग्रामनगरपत्तनकुटिकखेटकराजधानीषु, मनोरभेऽन्यदेशे वा धाम निर्माय तत्र स्थापिते लिङ्गे पूजनं परार्थमिति पूजनद्वयलक्षणमभिहितम्। ततो दीक्षितैश्चतुर्वर्णोद्भवैस्तथाभूतैरनुलोमैश्चात्मार्थयजनमेव कर्तव्यं न तु परार्थयजनम्। आदिशैवेन शिव-ब्राह्मणेनैवात्मार्थपरार्थयजनद्वयमाचरणीयमित्युक्त्वा तस्य लक्षणमभिधीयते। आदिशैवेषु च भौतिक एव स्थापनार्चनादिकरणे श्रेष्ठः। तदभावे नैष्ठिकोऽपि योग्यो भवेत्। अर्चनाग्निकार्यनित्योत्सवमहोत्सवस्नपनबलिदानेषु नैष्ठिको योग्यो भवेदित्युच्यते। अत्र भौतिकः सपत्नीको नैष्ठिको विपत्नीक इति सूचितम्। एवमात्मार्थपरार्थपूजाधिकारिणोऽभिहिताः। ततो दीपान्तं हविष्यान्तमुत्सवान्तं नृत्तान्तमिति चतुर्विधपूजनानि तदीयफलप्रदर्शनपूर्वकं निर्दिश्यन्ते। ततः सार्धसप्तनाडिका एव यामः, स एव संधिरित्युच्यते। संध्यष्टकमहोरात्रं भवेत्। संध्यष्टकेऽपि यजनं श्रेष्ठमुदयमध्याह्नसंध्याकालार्धयामेषु पूजनं मध्यममुदयेऽस्तमये च पूजनमधममिति श्रेष्ठमध्यमाधमाख्यपूजनत्रयमभिधीयते। तत्र सार्धसप्तनाडिकासु कर्तव्यः पूजाक्रमो निरूप्यते। ततः पूजाङ्गानि दशविधानि भवन्ति। तानि सम्यङ्ज्ञात्वा पूजां समारभेतेत्युक्त्वा कायशुद्धिरात्मशुद्धिः पुष्पशुद्धिः स्थानशुद्धिर्द्रव्यशुद्धिर्मन्त्रशुद्धिर्लिङ्गशुद्धिः पीठशुद्धिरित्यष्टविधशुद्धय एव निर्दिश्यन्ते। अत्र शिवार्चनचन्द्रिकायामुक्तप्रकारेण देहात्मशुद्धिविषये प्रत्येकं द्विविधत्वाङ्गीकारेण समाधानं वक्तुं शक्यते। विषयोऽयं टिप्पण्यां सूचितः। ततो निर्दिष्टप्रकारेण दशविधशुद्धिरूपाण्यङ्गानि क्रमेण प्रतिपाद्यन्ते। तत्र कायशुद्धिकरणप्रकार आत्मशुद्धिसंपादनप्रकारश्च प्रथमं वर्ण्यते। तत्र शौचाचमनस्नानादिनिर्वर्तनप्रकारो, भूतशुद्धिः, सृष्टिस्थितिसंहाराख्यभेदत्रयविशिष्टकरन्यासाङ्गन्यासप्रकारा अन्तर्यागकरणप्रकारश्च प्रतिपाद्यन्ते। ततः पुष्पशुद्धिप्रकारो वर्ण्यते। तत्र सात्त्विकराजसतामसपुष्पाणि फलप्रदर्शनपूर्वकं निरूप्यन्ते। प्रसङ्गात्पूजार्हपत्राणि निगद्यन्ते। करवीरपुष्पहेमपुष्पयोर्निर्माल्यदोषो नेत्युच्यते। ततः शिवपूजायां वर्ज्यानि पुष्पाणि निर्दिश्यन्ते। प्रातर्मध्याह्नप्रदोषार्धयामकालेषु पूजार्हाणां पुष्पाणां निरूपणं, पूर्वनिर्दिष्टपत्राणां सर्वसंधिषु पूजार्हत्वकथनमित्येते विषयाः कथ्यन्ते। ततः स्वकीयारामोत्पन्नपुष्पाण्युत्तमानि। आरण्यकपुष्पाणि मध्यमानि। विक्रीतानि याचितानि च पुष्पाणि निष्फलानि। उग्रगन्धनिर्गन्धपत्रपुष्पाणि वर्ज्यानीति पुष्पशुद्धिप्रकारो न्यरूपि। अथ द्वारपूजाविधिरुच्यते। तत्र सामान्यविधिर्विशेषविधिरिति प्रकारद्वयं निरूप्यते। सामान्यविधौ द्वारविषये तथा कवाटविषये च पूजनीयानां विघ्नेशादीनां स्थाननिर्देशपूर्वकं पूजाप्रकारः सूच्यते। विशेषविधौ प्राग्द्वारदक्षिणद्वारपश्चिमद्वारोत्तरद्वारहर्म्येषु पूजनीयानां नन्दिकालादीनां द्वारपालानां लक्षणस्थाननिर्देशपूर्वकं पूजनं संक्षेपतः प्रतिपाद्यते। ततोऽग्रमण्टपप्रवेशो वास्तुदेवताविषये कर्तव्यो गन्धपुष्पबलिदानविधिश्च संक्षेपतो वर्ण्यते। तत्र महाघण्टां ताडयेदित्युक्त्वा महाघण्टाताडनकालो निर्दिश्यते। ततः स्थानशुद्धिविधिः संक्षेपेण प्रतिपाद्यते। अथ द्रव्यशुद्धिर्निरूप्यते। तत्र पाद्याचमनार्घ्यपात्राणां, शरावशङ्खभाण्डानां, यवदूर्वाकुशानां च शुद्धिप्रकारः समन्त्रकं प्रतिपाद्यते। पाद्याचमनार्घ्याणां साधनप्रकारो वर्ण्यते। तत्र प्रत्येकमुत्तमं मध्यमं कन्यसमिति भेदत्रयं सम्यक्प्रतिपाद्यते। एवं धूपसाधनप्रकारेऽप्युत्तमादित्रिविधभेदा निरूप्यन्ते। तत्रोत्तमधूपस्य शीतारिधूप इति नाम प्रदर्श्यते। अथ पूजायामर्घ्यगन्धपुष्पवारीणां विनियोगकालो निरूप्यते। क्षीरदधिघृतादीनां शिवाम्भःप्रोक्षणेन शुद्धिरित्युच्यते। एवं द्रव्यशुद्धिप्रकारो निरूपितः। अथ मन्त्रशुद्धिप्रकारः संक्षेपेण कथ्यते। ततः

पूजाविषये यवनिकाया आवश्यकतां सहेतुकं निरूप्य प्रच्छन्नपटकालः प्रदर्श्यते। ततो लिङ्गशुद्धिः पीठशुद्धिश्च समन्त्रकं निरूप्यते। एवं पूजाविषये पूर्वं निर्दिष्टानि दशविधान्यङ्गानि निरूपितानि। ततो गुरुपूजाविधिः संक्षेपतः प्रतिपाद्यते। तत आसनकल्पनप्रकारो वर्ण्यते। तत्र पूर्वं शक्तिरेवासनं भवति। ततोऽनन्तसिंहयोगपद्मविमलाख्यानि पञ्चासनानि क्रमेणोपर्युपरि कल्पयेदित्युक्त्वा तेषामासनानां रूपलक्षणादिकं निरूप्यते। आसनकल्पनप्रकारकथनान्ते पूर्वोक्तासनमध्ये परमकारणं शिवं ध्यात्वा बाह्यार्चनं कुर्यादित्युच्यते। अथ "दिवारात्रं परित्यज्य चन्द्रार्कनाशनकाले कथं पूजा कर्तव्या" इति नन्दिकेश्वरप्रश्नस्येश्वरोक्तसमाधानवर्णनरूपेण चन्द्रार्कनाशनकालस्वरूपविवरणपूर्वकं तत्र पूजाविधानप्रकारो लेशतः प्रतिपाद्यते। विषयोऽयं योगिनामन्तर्यजनविषये वक्तव्यः। पूजाप्रस्तावादत्र वर्णित इति भाति। ततो लिङ्गपूजाविधिः प्रतिपाद्यते। तत्रावाहनप्रभृति नैवेद्यदानपर्यन्तं कर्तव्यः क्रियाकलापस्ताम्बूलदानप्रकारश्च वर्ण्यते। अथ द्वारादिबलिपीठान्तं विधेयो बलिविधिर्नित्याग्निकार्यविधिश्चातीव संक्षेपेण कथ्यते। तत आवरणार्चनप्रकारो विस्तरेणाभिधीयते। तत्रावरणदेवाः स्वशक्तिसहिताः शिवमेव निरीक्ष्य वर्तन्त इति सूचयित्वा प्रत्यावरणं पूजनीया देवास्तेषां शक्तयश्च निरूप्यन्ते। तत्र गर्भावरणविद्येशावरणगणेशावरणलोकेशावरणास्त्रेशावरणाख्यानां पञ्चावरणानां पूजाक्रमो निरूप्यते। एवम् **एकोनषष्टितमपटलार्थसंग्रहः**।

**षष्टितमे पटले** मठप्रतिष्ठाविधिरुच्यते। तत्रादौ प्रतिष्ठादिनात्पूर्वदिनरात्रौ मठप्रवेशः कर्तव्य इति कालो निर्दिश्यते। अथ मठे मण्डपादीन्विधाय तं मठं सबाह्याभ्यन्तरं गोमयेन विलिप्य तोरणैर्भूषितं पुष्पस्रग्वस्त्रालंकारैश्च युक्तं कृत्वा यजमानो बन्धुभिः सह देशिकादीन्पुरस्कृत्य वस्त्रयुग्मावृतं शिवकुम्भं द्विजन्मनः स्कन्धेन वाहयित्वा वेदवाद्यघोषैः सह मठं प्रदक्षिणीकृत्य तदग्रे किंचित्कालं विलम्बं कृत्वा कृतमङ्गलशब्दः सुलग्ने तपस्विनं देशिकं प्रवेशयेत्। तत्राङ्गणे शिवकुम्भमुदगाननं धान्यनिर्मितस्थण्डिले स्थापयेदिति मठप्रवेशः शिवकुम्भस्थापनप्रकारश्चाभिधीयते। अत्र कुम्भस्थापनकथनाच्छिवकुम्भपूजा कर्तव्येति सूच्यते। ततो विप्रदैवज्ञशिल्पिभ्यो दक्षिणां दद्यादिति दक्षिणादानं विधीयते। अथ द्विहस्तपरिमिते मण्डले द्वारकुम्भपूजा वास्तुपूजा च कर्तव्येति सूच्यते। जगतीपादपीठजङ्घाकपोतच्छदनेषु मठावयवेषु पञ्चसु निवृत्त्यादिपञ्चकलान्यासः कर्तव्यः। ततः शक्तिपूजा कर्तव्या। वेद्यां द्वारपालानावाह्य ध्यानपूर्वकं पूजयेत्। अग्न्यागारमासाद्य वास्तुदेवताभ्यस्तथा निवृत्त्यादिकलाभ्यो द्वारपालेभ्यश्च स्वस्वमन्त्रैर्होमयेत्। ततो दिग्बलिं दत्त्वा समाचम्य सकलीकृत्य बीजपूराम्रबिल्वनारङ्गकपित्थबदर्यामलकदाडिमादिफलरसैः कुम्भतोयैश्च मठोपर्यभिषेचयेत्। विभूत्यर्थं संतानादिवृद्धयर्थं च मठं कर्तृनामाङ्कितं कुर्यादित्युच्यते। ततो यद्यत्प्रासादादिनिर्माणक्रियाविधिः क्रियते, तत्र सर्वत्र गर्भन्यासविधिः कर्तव्य इत्युक्त्वा प्रासादोचितगर्भन्यासविधिः प्रदर्श्यते। अत्र मठविषये वक्तव्यो गर्भन्यासप्रतिपादकग्रन्थो लुप्त इति भाति। एवं **षष्टितमपटलार्थसंग्रहः**।

**एकषष्टितमे पटले** अष्टबन्धनविधिरभिधीयते। तत्र प्रथमं लिङ्गपीठान्तरे पक्वमपक्वमिति द्विविधमष्टबन्धनं योज्यमित्युच्यते। ततोऽष्टबन्धनहीने राज्ञो राष्ट्रस्य च दोषो भवेदिति सामान्यतोऽभिधाय वह्निदिशमारभ्यैन्द्रदिक्पर्यन्तमष्टदिक्ष्वष्टबन्धनहीने संभाव्यमाना दोषाः पृथक् पृथक् प्रदर्श्यन्ते। किं चाष्टबन्धनहीनकाले क्रियमाणानि नित्यनैमित्तिकपूजनानि, बलिनित्योत्सवप्रदक्षिणस्नपनानि च निष्फलानि भवेयुः। एवं तत्काले क्रियमाणा उपचाराः सर्वेऽपि निरर्थका भवेयुरित्युच्यते। ततो ब्रह्मविष्णुभागयोः, कूर्मासने, नन्द्यावर्तशिलाभागे चाष्टबन्धनहीनतया निर्माल्यदर्शने संभाव्यमाना दोषा निरूप्यन्ते। अथाष्टबन्धनयोग्यानि लाक्षादीन्यष्टवस्तूनि निर्दिश्यन्ते। अष्टबन्धनं कृत्वा संप्रोक्षणं समाचरेदित्युच्यते। ततः स्वयम्भुदैविकमानुषलिङ्गविषयेऽष्टबन्धनहीने यदि षण्मासमध्येऽष्टबन्धनकर्म क्रियते, तदा सर्वमासेषु दिनवारमुहूर्तादिकमनपेक्ष्य विनाङ्कुरार्पणं तत्कर्तव्यम्। यदि षण्मासात्परं

तत्क्रियते, तदा मासपक्षनक्षत्रदिनवारमुहूर्तादिकं दृष्ट्वाङ्कुरार्पणपूर्वकं तत्कर्म समाचरेदित्युच्यते। ततो वेदिकाकुण्डसहितयागमण्डपविधिर्वर्ण्यते। तत्र कुण्डानि स्थण्डिलानि वा कल्पयेदिति बहुवचननिर्देशात्पञ्च नव वा कुण्डानि भवेयुरिति भाति। ततो यागद्रव्यसंपादनं बहुधा कर्तव्यमित्यभिधीयते। ततो वेदि-मध्ये स्थण्डिलकल्पनप्रकारस्तत्र कुम्भस्थापनप्रकारः कुम्भाधिदेवानां निरूपणं च दृश्यन्ते। अत्र मध्य-कुम्भे सदाशिवं वर्धन्यां मनोन्मनीं परितोऽष्टकुम्भेषु विद्येशांश्च पूजयेदित्युच्यते। ततो होमविधिः समन्त्रकं सद्रव्यकं च प्रतिपाद्यते। ततः कुम्भाभिषेकविधिरभिधीयते। ततोऽभिषेकानन्तरं कर्तव्य-पूजाप्रकारः संक्षेपतो निरूप्यते। ततः स्नपनविधिरपि संग्रहेण प्रतिपाद्यते। अथाचार्यपूजा विस्तरेण वर्ण्यते। एवम् **एकषष्टितमपटलार्थसंग्रहः।**

**द्विषष्टितमे पटले** कृत्तिकादीपनिर्णयविधिः कथ्यते। कार्त्तिकमासे कृत्तिकानक्षत्रयुक्तपूर्णिमायां दीपो-त्सवे कृते राजराष्ट्रविवर्धनं भवेत्। एकमासे कृत्तिकानक्षत्रद्वये सत्यपरनक्षत्रे दीपोत्सवः कार्यः। पर्वयुक्तकृत्तिकानक्षत्रे यदि चन्द्रः केतुग्रस्तो भवेत्तदा दीपोत्सवो न कर्तव्यः। अन्यस्मिन्नक्षत्रे दीपोत्स-वमाचरेत्। भरणीसंयुक्तकृत्तिकायां दीपोत्सवं न कारयेत्। रात्रौ कृत्तिकानक्षत्रयोगे सति तदा दीपो-त्सवं समाचरेत्। अन्यथाकृते राजराष्ट्रस्य दोषो भवेत्। भरण्या रोहिण्या वा यदि कृत्तिका संयुक्ता तदा रात्रौ कृत्तिकानक्षत्रयोगे सति तद्रात्रौ दीपोत्सवमाचरेत्। कार्त्तिकमासे यद्यार्द्रान्तोत्सवः प्रचलति, तदा पूर्वेऽन्त्ये च कृत्तिकायोगो यत्रास्ति तस्मिन्नेव दिने दीपोत्सवमाचरेदित्युच्यते। एव **द्विषष्टि-तमपटलार्थसंग्रहः।**

**त्रिषष्टितमे पटले** शैवोत्पत्तिविधिरभिधीयते। तत्र प्रथमं सर्वसंहारकालः कल्पकोटिशतमित्युच्यते। ततः पुनःसृष्टिकाले परमेश्वरः सकलो भूत्वा सदाशिवमूर्तिमास्थाय जीवात्मनां रक्षार्थं स्वकीये-च्छाज्ञानक्रियातिरोधानशक्तीर्मनोन्मन्याख्यां शक्तिं चोद्बोधयंस्ताभिः सृष्टिमकार्षीत्। तदा प्रथममा-विर्भूतायाः पराशक्तेर्नादः, नादाद्बिन्दुः, बिन्दोः सदाशिवस्तस्मादीश्वरः, ईश्वराद्रुद्रः, रुद्राद्विष्णुः, विष्णो-र्ब्रह्मा, ब्रह्मणो जङ्गमस्थावराख्यमिदं सर्वं जगदुत्पन्नमिति सृष्टिक्रमो न्यरूपि। सृष्टिस्थितिसंहार-तिरोभावानुग्रहाख्यपञ्चकृत्यस्य कारणं परमेश्वर इत्युच्यते। अथ शुद्धशैवं संक्रान्तिशैवं समावेशशैवं समुत्पत्तिशैवमभिव्यक्तिशैवमुपशैवमनादिशैवमिति सप्तविधशैवानि शैवमार्गे वर्तन्त इत्युच्यते। ततः कामिकादिसहस्रान्ता अष्टागमा ईशानमुखोद्भवाः। ब्रह्मर्षिः कौशिक ऊर्ध्ववक्त्रेण दीक्षितः। अंशु-मदादिवीरान्ता सप्तागमास्तत्पुरुषवक्त्रोद्भवाः। क्षत्रियर्षिः काश्यपस्तत्पुरुषवक्त्रेण दीक्षितः। रौरवा-दिचन्द्रज्ञानान्ताश्चत्वार आगमा अघोरवक्त्रोद्भवाः। नन्दिकः (नन्दी) वैश्यकुलोद्भवः शुद्धशैवमार्गेणा-घोरवक्त्रेण दीक्षितः। मुखबिम्बादिसन्तानान्ताः पञ्चागमा वामवक्त्रोद्भवाः। ब्राह्मणर्षिरगस्त्यो वाम-देवमुखेन दीक्षितः। शर्वोक्तादिवातुलान्ताश्चत्वार आगमाः सद्योजातमुखोद्भवाः। भारद्वाजर्षिः शूद्र-मार्गेण सचिन्त्य सद्योजातमुखेन दीक्षित इत्यष्टाविंशत्यागमानां पञ्चमुखोद्भवत्वं तथा कौशिकादि-पञ्चर्षीणां पञ्चमुखदीक्षितत्वं च प्रतिपाद्यते। ततः संक्रान्तिशैवं काश्यपमतम्। समावेशशैवं कौशि-कमतम्। समुत्पत्तिशैवं भारद्वाजमतम्। शुद्धशैवं नन्दिमतम्। अभिव्यक्तिशैवमगस्त्यमतम्। अनादिशैवं पारमेश्वरम्। एवं षण्णां शैवभेदानां स्वरूपं सूचितम्। पूर्वं प्रतिज्ञातमुपशैवमतस्वरूपं प्रति न किम-प्युच्यते। तत्र शिवद्विजेन भरद्वाजमार्गेण दीक्षितौ कुण्डगोलावुपशैवावित्येतावन्मात्रमुच्यते। तदनन्तरं मातृकायां दृश्यमानो ग्रन्थोऽसंगतो भवतीति टिप्पण्यां सूचितम्। तत आचार्यसंकरः, तन्त्रसंकरः, उच्छिष्टसंकर इत्येते संकरा यदि संभवेयुस्तदा वास्तुनो राजराष्ट्रस्य च विनाशः स्यात्। अर्च-नाग्निकार्यनित्योत्सवमहोत्सवस्नपनबलिदानादिकर्माणि निष्फलानि भवेयुरित्युच्यते। ततः शिवसं-स्कारसंबन्धाद् भस्मरुद्राक्षधारणाच्छिखायज्ञोपवीतधारणाद्दीक्षितो भवति। शास्त्रस्य संप्रदानेन शास्त्र-दीक्षा भवति। महेश्वरपदाविष्टं स्थानं संपदां पदं भवेदित्यादिविषया निगद्यन्ते। अन्ते च 'ब्राह्मणो

वा चण्डालो वा भवतु। तथा सुगुणो दुर्गुणो वा भवतु। यदि भस्मरुद्राक्षधारी स्यात्तदा स शिव एव भवेन्न संशय इति भस्मरुद्राक्षधारिणः प्रशंसा प्रतिपाद्यते। एवं **त्रिषष्टितमपटलार्थसंग्रहः।**

**चतुष्षष्टितमे पटले** फलपक्वादिसमर्पणकालविधिरुच्यते। तत्रादौ पुष्पाणां मालानां गन्धवस्त्राभरणानां च समर्पणं कस्मिन्काले कथं कर्तव्यमिति रुरोः प्रश्नः। तदीयप्रश्नस्येश्वरोक्तोत्तरकथनप्रकारो वर्ण्यते। तत्र कृतनित्यक्रियो देशिक उद्वर्तनकर्माचरणकालं प्राणप्रतिष्ठाकालं नैवेद्योत्पादनकालं च वर्जयित्वान्यस्मिन्काले भक्तैर्मदर्पणार्थमानीतं तोयगन्धपुष्पादिकं पुष्पमालावस्त्राभरणादिकं च स्वयमेव भक्तेभ्यः स्वीकृत्य तद्द्रव्याणां शुद्धिं कृत्वा तानि यथाविधि मह्यं समर्पयेदित्युच्यते। तत्र समर्पणप्रकारः समन्त्रकं सम्यक् प्रतिपाद्यते। ततो देशिको भक्तेनाहृतं फलपक्वादि नैवेद्यं मह्यं समर्प्य तोषयित्वा नीराजनं कृत्वाभ्यर्च्य तस्मै भक्ताय तीर्थं पुष्पं च दद्यादित्युच्यते। ततः पुष्पमालाफलपक्वादिकं चेद् भक्तस्तच्चतुर्धा विभज्यैकभागमाचार्याय प्रदद्यात्। द्वितीयभागं स्वयं स्वीकृत्यावशिष्टं भागद्वयं विप्रेभ्यो मत्प्रीत्यर्थं देयमित्युच्यते। ततो वस्त्राभरणादिकं चेद्धनागारे मदर्चकः संरक्ष्य नित्यं यथायोग्यं पूर्वोक्तविधिना मह्यं समर्पयेदित्युच्यते। ततो भक्त्या त्वद्दर्शनार्थमायातैरन्यग्रामवासिभिर्यद्यकस्मादालयद्वारं पिहितं चेत्तदा तैः कथं त्वद्दर्शनं कर्तव्यमिति रुरोः प्रश्नः। तत्रेश्वरोक्तोत्तरदानप्रकारो वर्ण्यते। ये दैवकार्यादथवा राजकार्याच्छीघ्रगामिनस्ते फलपक्वादिकं द्वारपालद्वारा द्वारस्थाने शिवं स्मृत्वा निवेद्य साष्टाङ्गं प्रणम्य देवांशं तत्र निक्षिप्य शिष्टं स्वयं स्वीकृत्य धामप्रदक्षिणं कृत्वा गच्छेयुः। अन्यैस्तु द्वारोद्घाटनपर्यन्तं स्थित्वा देवदर्शनं विधिवत्कृत्वा फलपक्वादिकं भगवत आचार्यद्वारा पूर्वोक्तविधिना समर्प्य यथेष्टं गन्तव्यम्। एवं कृते तेऽभीष्टं सद्य आप्नुयुरित्युच्यते। एवं **चतुष्षष्टितमपटलार्थसंग्रहः।**

**पञ्चषष्टितमे पटले** कामकोष्ठलक्षणमभिधीयत इति प्रतिज्ञां कृत्वा योगभोगवीराख्यशक्तित्रयलक्षणमेव प्रतिपाद्यते। तत्र प्रथमं योगशक्तिः पीठाकृतिरुमाभाग एवेत्युक्त्वा पीठलक्षणं वर्ण्यते। ततः पीठावयवानामुपानजगतीकुमुदकम्पकण्ठकम्पपट्टीघृतवार्याख्यानामष्टानां क्रमेण पादजङ्घाकुक्षिबाहुयुग्मकण्ठाधरमुखशिरस्त्वेन निरूपणं क्रियते। ततो भोगशक्तिलक्षणं प्रतिपाद्यते। भोगशक्तिः स्थानका आसीना वा भवेदित्युक्त्वादौ स्थानकभोगशक्तिलक्षणं कथ्यते। स्थानका भोगशक्तिर्द्विभुजा द्विनेत्रा भवेत्। दक्षिणपादो यदि सुस्थितस्तदा वामपादः कुञ्चितो भवेत्। यदि वामपादः सुस्थितस्तदा दक्षिणपादः कुञ्चितो भवेत्। वामहस्तः प्रसारितः स्यात्। दक्षिणहस्ते चोत्पलं भवेत्। भोगशक्तिमूर्तिर्मध्यमदशतालमानेन कर्तव्या। नतमानमाभङ्गसमभङ्गमतिभङ्गमिति त्रिविधं भवेदित्युक्त्वा त्रयाणामपि लक्षणं कथ्यते। एवं स्थानकभोगशक्तिलक्षणमभिहितम्। अथ आसीनभोगशक्तिलक्षणं वर्ण्यते। आसीनायां भोगशक्तौ वामहस्तो वेद्यूर्ध्वे संस्थापितोऽथवा वरदमुद्रान्वितो भवेदित्युच्यते। दक्षिणहस्ते कटकमुद्रा स्यात्। अथवा दक्षिणहस्तेऽभयमुद्रा वामहस्ते वरदमुद्रा च भवेदिति विकल्पोऽभिधीयते। सव्यपादोर्ध्वजानुनि वामपादो लम्बितः स्यात्। करण्डमकुटोपेता केशबन्धसहिता वा भवेत्। प्रसन्नवदनोपेता सा भोगशक्तिः सर्वकामार्थसिद्धिदा भवेदित्यासीनभोगशक्तिलक्षणं कथितम्। अथ वीरशक्तेर्लक्षणं तदीयमानं च वर्ण्यते। तत्र वीरशक्तिश्चतुर्भुजा त्रिनेत्रा जटामकुटमण्डिता भवेदित्युच्यते। द्विनेत्रा द्विभुजा स्थानका, आसीना वा भवेदिति विकल्पश्च सूच्यते। वीरशक्तिः परिवारसमोपेतेति कथ्यते। परिवारास्त्वत्र न निर्दिश्यन्ते। ततो वीरशक्तेर्विषये मानप्रतिपादनं विशेषतो दृश्यते। तत्र मध्यमध्यं पुरोमध्यं पृष्ठमध्यं पार्श्वकं पद्ममध्यं बाहुद्वयसूत्रमिति सप्तविधसूत्राणि प्रतिज्ञातानि। तत्र मध्यमध्य – पुरोमध्य – पृष्ठमध्यसूत्राणां त्रयाणामेव स्वरूपं निर्दिष्टम्। पार्श्वसूत्रस्य प्रस्तावो दृश्यते। पद्ममध्यबाहुद्वयसूत्राणां स्वरूपलक्षणप्रतिपादकग्रन्थो न स्पष्टमवगन्तुं शक्यते। ततो वीरशक्तेश्चतुर्भुजायाः स्वरूपं वर्ण्यते। तत्र पूर्वहस्तद्वये सव्यहस्तेऽभयमुद्रा भवेत्। अथवा तत्र

सिंहकर्णमुद्रा वा स्यादिति विकल्पोक्तिर्दृश्यते। वामहस्ते वरदमुद्रा भवेत्। परहस्तद्वये कटकमुद्रा वा कर्तरीमुद्रा वा भवेत्। तत्र दक्षिणहस्तेऽक्षमाला, वामहस्ते पद्मं वा उत्पलं वा भवेत्। अथवा दक्षिण-हस्ते बीजपूरकं वामहस्ते पद्ममथवा दक्षिणे चक्रं वामे शङ्खं वा स्यादिति विकल्पोक्तिर्दृश्यते। ततो मनोन्मनीस्वरूपवर्णनं क्रियते। अन्ते पूर्वोक्तयोगभोगवीराख्यशक्तित्रयस्य स्थापनयोग्यस्थानं निरूप्यते। एवं **पञ्चषष्टितमपटलार्थसंग्रहः।**

**अनुबन्धे** रौरवागमीयशौचाचमनस्नानादिमन्त्रोद्धारार्चनाविधीनां च संग्रहोऽत्र प्रतिपाद्यत इति प्रतिज्ञाय १४५ श्लोका लिखिता दृश्यन्ते। तत्रादौ शौचदन्तधावनविषयकाः श्लोकाः प्रदर्श्यन्ते। तत्र दन्तधावनयोग्यकाष्ठप्रमाणं तत्काष्ठयोग्यवृक्षाश्च निर्दिश्यन्ते। भुक्तिकामिनां द्वादशाङ्गुलदीर्घं कनि-ष्ठाङ्गुलिनाहकं काष्ठं भवेत्। मुक्तिकामिभिरष्टाङ्गुलप्रमाणं काष्ठमुपयोक्तव्यमित्युच्यते। आस्य-शुद्धिर्द्वादशधा स्यादिति कथ्यते। तत आचमनविधिः प्रदर्श्यते। तत्र गोकर्णाकृतिहस्तेन माषमग्नजलं गृहीत्वा पिबेत्। तन्न्यूनाधिकजलपानं सुरापानसममिति निषिध्यते। ततः कौपीनधारणं प्राङ्मुखो वाप्युदङ्मुखो वा कुर्यात्। कौपीनं षट्त्रिंशदङ्गुलायामं तदर्धविस्तारं च भवेदित्युच्यते। ततो वारुण-स्नाने विधिस्नानप्रकारो वर्ण्यते। तत्र शिवतीर्थकल्पनप्रकारः कथ्यते। ततो भस्मस्नानार्थं भस्मो-त्पादनविषये गोमयग्रहणप्रकारकथनावसरे पञ्चवर्णगवामुत्पत्तिस्तासां गवामङ्गेषु ब्रह्मविष्णुरुद्रादिदेवा निवसन्तीति च प्रतिपाद्यते। भस्मोत्पादने गोमयदाहो देवालयाग्निना कर्तव्यः। प्रमादाद्दर्भप्रज्वा-लनेन गोमयदाहे कृते तन्निष्फलं भवेदिति कथ्यते। ततः सर्वतीर्थेषु स्नानात्सर्वयज्ञाचरणाच्च यत्पुण्य-फलं संभवेत्तत्कोटिगुणितं पुण्यफलं दिने दिने भस्मस्नानाद्भवेदिति भस्मस्नानप्रशंसा वर्ण्यते। भस्म-स्नानकरणप्रकारश्च निरूप्यते। अथ संध्योपासनविषये प्राणायामविधिः कथ्यते। तत्र पूरककुम्भकरे-चकाख्यानां त्रयाणामपि प्राणायामानां विधिरभिधीयते। सदाशिवप्रीत्यै पूरकमीश्वरप्रीत्यै कुम्भकं केशवप्रीतये रेचकं च कुर्यादिति निगद्यते। अथ मार्जनविधिरघमर्षणविधिश्च प्रतिपाद्यते। ततः सूर्यायार्घ्यदानविधिरुच्यते। सूर्यायार्घ्यदानं सर्वपापहरं शिवप्रीतिकरं च भवेदिति प्रशंस्यते। सूर्या-यार्घ्यदानाकरणे महापातकाचरणे संभाव्यमाननरकप्राप्तिः स्यादित्युच्यते। ततो देवर्षिपितृतर्पणविधिः प्रतिपाद्यते। ततः प्रदक्षिणविधिरभिधीयते। प्रसङ्गान्नमस्कारविधिश्च सूच्यते। तत्र पशुः स्तोत्रं नृत्तं च कुर्वन्प्रदक्षिणं कृत्वा पशुपतेरग्रे दण्डवत्पतित्वा नमस्कुर्यादित्युक्त्वैकप्रदक्षिणादारभ्य दशप्रदक्षिणपर्य-न्तं संभाव्यमानं फलं क्रमेण प्रदर्श्यते। तत्रैकप्रदक्षिणं पित्रोः, प्रदक्षिणद्वयं शास्तुः, प्रदक्षिणत्रयं विघ्ने-शस्य, प्रदक्षिणचतुष्टयं सूर्यस्य, प्रदक्षिणपञ्चकं शिवयोः, प्रदक्षिणषट्कं गुहस्य, प्रदक्षिणसप्तकं केशवस्य च प्रीतिकरं भवेत्। प्रदक्षिणाष्टकं रुद्रलोकप्राप्तिं, प्रदक्षिणनवकं सदाशिवपदप्राप्तिं, प्रदक्षिणदशकं सालोक्यप्राप्तिं च जनयेत्। सव्यापसव्यप्रदक्षिणं शिवप्रीतिकरं भवेत्। अङ्गप्रदक्षिणाचरणात् सायु-ज्यपदवी संभवेदिति प्रदक्षिणफलवर्णनं दृश्यते। ततः प्रसङ्गाद्देवताविषये एकदण्डनमस्कारस्तथै-कहस्तनमस्कारश्च पुरातनपुण्यं हन्ति। एवमेकप्रदक्षिणं च प्राक्तनपुण्यनाशकं भवेदित्युच्यते। ततः शम्भोः सोमसूत्रलङ्घनं विना सव्यापसव्यमार्गेण प्रदक्षिणमाचरेदित्युच्यते। ततो वृषभसंनिधौ स्थित्वा तदीयशृङ्गमध्यतः शिवं दृष्ट्वा प्रणतिकरणप्रकारः सूच्यते। ततः पुष्पाञ्जलिकरणाय पुष्पसंपादन-प्रकारोऽभिधीयते। तत्र स्वार्जितपुष्पमुत्तमं वनपुष्पं मध्यमं देवालयस्थपुष्पमधममित्युच्यते। एवं द्रव्यसंपादितं पुष्पमपि नोत्तममिति च सूच्यते। एवं शौचाचमनस्नानादिविधिषु संगृहीतश्लोकविषयाणां संग्रहः प्रतिपादितः। ततो मन्त्रोद्धारविषये पञ्चब्रह्मषडङ्गमन्त्रा बीजमुख्यक्षुरिकास्त्राष्टाक्षरमन्त्राश्च निरूप्यन्ते। दशाक्षरमन्त्रो नामतो निर्दिष्टः। एवं मन्त्रोद्धारविषये संगृहीतश्लोकविषयसंग्रहः प्रदर्शितः। ततोऽर्चनाविधौ संगृहीतश्लोकविषयाणां संग्रहः प्रतिपाद्यते। तत्र प्रथममादिशैवलक्षणं प्रतिपाद्यादिशैवः शिवब्राह्मण एव स्यात्। शिवद्विजेषु भौतिक एव संस्थापनमर्चनादिकं सर्वं कर्तुमधिकारी भवेत्।

अर्चनाग्निकार्यनित्योत्सवमहोत्सवस्नपनबलिदानेषु नैष्ठिकोऽधिकारी स्यात्। शैवपाञ्चरात्रबौद्धार्हतादिमतभेदा गोवद्बहुविधा भवेयुः। तत्र क्षीरवच्छिव एक एव स्यादित्युच्यते। ततः करन्यासाङ्गन्यासप्रकारौ वर्ण्येते। ततोऽन्तर्यागप्रकारो निरूप्यते। अथ पूजार्हपत्रपुष्पविषये पत्रजातिषु बिल्वपत्रं विशिष्यते। तथा पुष्पजातिषु करवीरपुष्पं विशिष्यते। करवीरं हेमपुष्पं च सर्वदा पूजार्हे भवतः। तयोर्विषये निर्माल्यदोषो न विद्यत इति शास्त्रनिर्णय इत्युच्यते। एवमुत्तमं स्वार्जितं पुष्पं मध्यमं वनपुष्पं विक्रीतमधमं पुष्पं याचितं पुष्पं निष्फलमित्युच्यते। ततः स्नानारम्भे तदन्तेऽर्चनान्ते निवेदनकाले होमान्ते चोत्सवान्ते नृत्तान्ते च घण्टां घोषयेत्। घण्टाध्वनिश्रवणेन राक्षसा विनश्यन्तीत्युच्यते। ततः पाद्याचमनार्घ्यविषये द्रव्यालाभे तोयचन्दनकुशैः सह पाद्यादित्रयं तत्तत्पात्रेषु साधयेदित्युच्यते। तत आवाहनान्ते पूजान्ते विसर्जने चार्घ्यं दद्यादित्युच्यते। अर्घ्ये विलेपने स्नाने च गन्धं योजयेत्। आवाहनार्घ्यपाद्येषु स्नाने धूपकाले चोत्सवे नैवेद्ये विसर्जने चाष्टसु कालेषु पुष्पं योजयेत्। आवाहनकालं विना पूर्वोक्तसप्तविषयेषु वारि विनियोजयेत्। एवमर्घ्यगन्धपुष्पवारीणां विनियोगकालो निरूपितः। ततः पूजायामुपांशुप्रकारेण, होमकर्मणि वाचिकप्रकारेण, अन्तर्यागकाले मानसप्रकारेण मन्त्रप्रयोगः कर्तव्यः। धूपदीपनैवेद्येषु होमकाले च स्वाहान्ततया मन्त्रप्रयोगः कार्यः। अभिषेके नमोऽन्तं मन्त्रप्रयोगः करणीय इति मन्त्रप्रयोगविषये विशेषो निरूप्यते। विषयोऽयमेकोनषष्टितमे नित्यपूजापटले नोक्त इत्यवगन्तव्यम्। ततो लिङ्गशुद्धिः पीठशुद्धिश्च समन्त्रकं प्रतिपाद्येते। ततो गुरुपूजाविधिरुच्यते। अथासनकल्पनविषये अनन्तासनसिंहासनयोगासनपद्मासनविमलासनाख्यानां पञ्चानामुपर्युपरि कल्पनप्रकारो वर्ण्यते। ततोऽस्मिन्नासनमध्ये परमकारणं शिवं ध्यात्वावाह्याभ्यर्चनं कुर्यादित्युक्त्वा लिङ्गपूजाकरणप्रकारो निरूप्यते। तत आवरणार्चनविषये न रुद्रः शक्तिहीनः स्यात्। शक्तयोऽपि रुद्रहीना न भवेयुः। स्वशक्तिसहिता देवाः शिवमेव निरीक्ष्य तमावृत्य तिष्ठन्ति। तस्मात्तानपि पूजयेदित्युच्यते। इत्यर्चनाविधौ संगृहीतश्लोकविषयाणां संग्रहः प्रत्यपादि। एवमनुबन्धस्थश्लोकविषयकसंग्रहः समाप्तः।

## कृतज्ञतानिवेदनम्

एतद्ग्रन्थसंपादनाय मातृका दत्त्वोपकृतवतां तिरुवाडुदुरै शिवश्री-स्वामिनाथशिवाचार्याणां तथा मद्रपुरीराजकीयप्राच्यतालपत्रकोशागाराध्यक्षमहाशयानां तथैतत्पुस्तकसंपादनार्थं सर्वात्मना सर्वास्ववस्थासूपकृतवतां श्रीरामानुजय्यङ्गार्-श्रीसंबन्धशिवाचार्य – श्रीसुब्रह्मण्यशास्त्रिणां तथा ग्रन्थं सुष्ठु मुद्रितवताम् आल् इण्डियामुद्रणालयाध्यक्षाणां च हार्दिकीं कृतज्ञतां निवेदयामः।

सद्विद्यागुरुणा भवेन रुरवे प्रोक्तं स्वयं पावनं
तेन श्रीरुरुणा हिताय जगतां भूयो यदध्यापितम्।
तच्छिष्टं परिशोध्य संप्रति विदां निर्वर्णनायाहितं
सर्वैरत्र विलोक्यतां प्रतिपदं श्रीरौरवं गौरवम्॥

## एतद्ग्रन्थसंपादनोपयुक्तमातृकासूची

अ. अस्मद्ग्रन्थालये विद्यमाना पत्रात्मकहस्तलिखितमातृका। अङ्कः आर्० इ० २९३५८ अस्यां मातृकायां ४७-४९ पटला विद्यन्ते।

आ. मद्रपुरीराजकीयप्राच्यतालपत्रकोशागारे विद्यमाना पत्रात्मकहस्तलिखितमातृका। अङ्कः आर्० १६८४० अस्यां मातृकायां ४७-४९ पटला विद्यन्ते।

इ. मद्रपुरीराजकीयप्राच्यतालपत्रकोशागारे विद्यमाना तालपत्रात्मिका मातृका। अङ्कः आर्० ११३६२ अस्यां मातृकाया ४७-४९ पटला विद्यन्ते।

ई. अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० ३४८ अस्यां मातृकायां ५० तमः पटलो विद्यते।

उ. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० १९०२९ (टि० ७७६) अस्यां मातृकायां ५१ तमः पटलो विद्यते।

ऊ. अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० १३५ अस्यां मातृकायां ५१ तमः पटलो विद्यते।

ऋ. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० २६३१३ अस्यां मातृकायां ५१ तमः पटलो विद्यते।

ॠ. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० २६३९९ (टि० १०२४) अस्यां मातृकायां ५१ तमः पटलो विद्यते।

ऌ. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० १९९८८ (टि० १०९७) अस्यां मातृकायां ५२ तमः पटलो विद्यते।

ए. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० २००२६ अस्यां मातृकायां ५२ तमः पटलो विद्यते।

ऐ. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० २५१९८ (टि० ५५६) अस्यां मातृकायां ५३, ५४ तमौ पटलौ विद्येते।

ओ. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० २००५२ (टि० १०७४) अस्यां मातृकायां ५५ तमः पटलो विद्यते।

औ. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० २००५८ (टि० ७६६) अस्यां मातृकायां ५५ तमः पटलो विद्यते।

क. अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० १८१ अस्यां मातृकायां ५६ तमः पटलो विद्यते।

ख. अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० १२० (ए) अस्यां मातृकायां ५७ तमः पटलो विद्यते।

ग. अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० १२० (बि) अस्यां मातृकायां ५७ तमः पटलो विद्यते।

घ. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० ३०८४१। (टि० १२०) अस्यां मातृकायां ५७ तमः पटलो विद्यते।

ङ. ज्ञानावरणविळक्कमुं मापाडियमुम्। धरुमैयाधीनप्रकाशितम्, (भागद्वयात्मकम्) धरुमपुरम्, १९५७, १९५९ अस्मिन् पुस्तके ५८ तमः पटलो विद्यते।

च. क्रियादीपिका। विद्यानुपालनयन्त्रशालायां मुद्रिता, मद्रपुरी, १९२९; अस्मिन् पुस्तके ५८ तमः पटलो विद्यते।

छ. शैवसंन्यासपद्धतिः। कोमलाम्बामुद्राक्षरशालायां मुद्रिता, कुम्भघोणम् १९३२; अस्मिन् पुस्तके ५८ तमः पटलो विद्यते।

ज. नित्यपूजाविधिः। कुडुमियामलै साम्बशिवशिवाचार्येण ब्रह्मानन्दमुद्रागारे मुद्रितम्। तिरुवैयारु, १९१०; अस्मिन् पुस्तके ५९ तमः पटलो विद्यते।

झ. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० ३२५१९ अस्यां मातृकायां ६० तमः पटलो विद्यते।

ञ. अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० ४५९ अस्यां मातृकायां ६१ तमः पटलो विद्यते।

ट. अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० ५१६ अस्यां मातृकायां ६१ तमः पटलो विद्यते।

ठ. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० ३९७६४ (टि० ९८०) अस्यां मातृकायां ६१ तमः पटलो विद्यते।

ड. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० ४३४२७ (टि० १००९) अस्यां मातृकायां ६१ तमः पटलो विद्यते।

ढ. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० ३९७९५ (टि० ९६०) अस्यां मातृकायां ६२ तमः पटलो विद्यते।

ण. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० २५१८७ (टि० ५५२) अस्यां मातृकायां ६३ तमः पटलो विद्यते।

त. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० ४००५२ अस्यां मातृकायां ६३ तमः पटलो विद्यते।

थ. अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० ९८४ अस्यां मातृकायां ६४ तमः पटलो विद्यते।

द. अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० १०५५ अस्यां मातृकायां ६५ तमः पटलो विद्यते।

ध. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्क आर्० इ० १८६७० अस्यां मातृकायां ६५ तमः पटलो विद्यते।

न. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० ३९७७२ अस्यां मातृकायां ६६ तमः पटलो विद्यते।

प. अस्मद्ग्रन्थालये विद्यमाना तालपत्रमातृका। अङ्कः आर्० इ० ३६९६७ अस्यां मातृकायां ६१ तमः पटलो विद्यते।

## सङ्केतसूची

| | | |
|---|---|---|
| अनु० | — | अनुबन्धः |
| उ० | — | उत्तरार्धम् |
| उपो० | — | उपोद्घातपटलः |
| क्रि, क्रिया० | — | क्रियापादः |
| चर्या० | — | चर्यापादः |
| टि० | — | ट्रान्स्क्रिप्ट् |
| तै० आरण्यकम् | — | तैत्तिरीयारण्यकम् |
| तै० ब्राह्मणम् | — | तैत्तिरीयब्राह्मणम् |
| तै० संहिता | — | तैत्तिरीयसंहिता |
| पा० सू० | — | पाणिनीयाष्टाध्यायीसूत्रम् |
| पू० | — | पूर्वार्धम् |
| पृ० | — | पृष्ठम् |
| वि० | — | विद्यापादः |

# रौरवागमः

## क्रियापादः

### सप्तचत्वारिंशः पटलः

### [1] निर्वाणदीक्षाविधिः

[2] [दीक्षा]

**[3] सपाशत्रयविश्लेषं शिवत्वं व्यज्यते यया।**
**क्रिया सा कथ्यते दीक्षा भक्तिवैराग्यलक्षणा ॥१॥**
**तस्माज्ज्ञानं च भक्तिश्च वैराग्यमिति चात्मनः।**
**दीक्षितस्येह चिह्नानि पशोस्त्वेतानि नाञ्जसा ॥२॥**

[4] [पशुलक्षणम्]

**किंचिज्ज्ञो मलिनो भिन्नः कर्ता भोक्ता स्वकर्मणाम्।**
**शरीरस्थो विभुर्नित्यः संस्कार्यः सेश्वरः पशुः ॥३॥**

---

[1] निर्वाणदीक्षाविषये उत्तरकामिके २३; **किरणे** क्रियापादे १०; **मतङ्गपारमेश्वरे** क्रियापादे ७, ८, ९; **मृगेन्द्रे** क्रियापादे ८; **सार्धत्रिशतिकालोत्तरे** ८; **सुप्रभेदे** चर्यापादे ४ पटलाः; **सूक्ष्मे** (टि. १७, पृ० ३५४, ३५५, ३६४–३६८) षडध्वलक्षणपटलश्च द्रष्टव्याः।

[2] 'दानं नाम परा काष्ठा मन्त्रप्रध्वस्तकर्मणाम्।
पशोर्या व्यक्तिमायाति प्रक्षीणकलुषस्य च ॥
अनयोः शासने सिद्धा दीक्षा क्षपणदानयोः।
(**मतङ्गपारमेश्वरे** क्रियापादे २.१, ३ पू०);
'दीयते तच्छिवत्वं हि क्षीयते पापपञ्जरम्।
क्षयदानविशेषत्वाद् दीक्षा चेत्यभिधीयते ॥'
(**सुप्रभेदे** चर्यापादे ४.१ उ०–२ पू०);
'पाशच्छेदं विधिस्तस्य मन्त्रैश्च विधिचोदितैः।
एवं पाशत्रयस्यापि विश्लेषो दीक्षयोच्यते ॥'
(**स्वच्छन्दे** ४.१३१);
'वक्ष्ये दीक्षां शिवेनोक्तां संक्षेपाद्भोगमोक्षदाम्।
विक्षिप्तपाशसंक्षोभां भक्तिवैराग्यलक्षणाम्।
विशिष्टं दीयते ज्ञानं क्षीयते पाशसंचयः।
मायाकर्ममलोद्भूतो यथा दीक्षेति सा स्मृता।
शिवो विज्ञायते येन तज्ज्ञानं परमं मतम्।'
(**सिद्धान्तशेखरे** २.२.१–३ पू०);
'मलमायादिपाशानां विश्लेषः क्रियते यया।
ज्ञानं च जन्यते शिष्ये सा दीक्षेत्यभिधीयते ॥'
(**सोमशंभुपद्धतौ** समयदीक्षाविधौ २.)

[3] अतत्याः १–९० श्लोका उपलब्धासु रौरवमातृकासु शिथिलप्रायाः। अस्मिन्पटलेऽन्तिमभागे विद्यमानानां ९१–१०२ श्लोकानां वरुणपद्धतिस्थदीक्षाविधावन्तिमभागे विद्यमानानां षडध्वसमुद्देशविषयकश्लोकानां चानुपूर्वीसादृश्यात्तत्रत्यानां श्लोकानां साहाय्येनात्र ते समीकृताः।

[4] 'केवलः सकलः शुद्धः त्र्यवस्थः पुरुषः स्मृतः।
मलिनत्वाच्चितेर्मोक्षः प्राप्यते निर्मलाच्छिवात् ॥
पशुरेवंविधः प्रोक्तः'
(**किरणे** विद्यापादे १.२३, २४ पू०);
'पशुरात्मा समुद्दिष्टः क्षेत्री क्षेत्रज्ञ एव च।
शरीरी चेति रुद्धात्मा भोक्ता च परिभाष्यते।'
(**मतङ्गपारमेश्वरे** विद्यापादे ६.४ उ०-५ पू०)

[1][पाशाः]

पाशा अपि त्रयो ज्ञेया मलं माया च कर्म च।
मलं चाशुद्धिरज्ञानं तच्चैतन्यनिरोधकम् ॥४॥
माया कलादिपृथ्व्यन्ता तद्भवा तत्त्वसंहतिः।
धर्माधर्मात्मकं कर्मेत्येतैः पाशैर्युतः पशुः ॥५॥
पशोरज्ञतया मायायोगो भोगाय कर्मणाम्।
समायातीश्वरेच्छातो मुक्तिर्नास्यान्यथा यतः ॥६॥
ततः सुखादिकं कृत्स्नं भोगं भुङ्क्ते स्वकर्मतः।
संसारी स पशुर्बद्धो मुक्तः पाशत्रयोज्झितः ॥७॥

[2][सकलादित्रयस्वरूपम्]

त्रिधा सोऽयमनुग्राह्यः सकलः प्रलयाकलः।
विज्ञानाकल इत्येषां स्वरूपमधुनोच्यते ॥८॥
मायाकर्ममलच्छन्नः सकलः सोऽभिधीयते।
मलकर्मावृतो यस्तु स भवेत्प्रलयाकलः ॥९॥
मलैकबन्धसंबद्धो विज्ञानाकल उच्यते।

---

[1] 'अथात्मा विमलः शुद्धो मायया बध्यते सदा।
सहजमलसंबन्धात्पशुरित्युच्यते बुधैः' ॥
'आणवं सहजं प्रोक्तं तुषकम्बुकवत्क्रमात्।
मोहो मदश्च रागश्च विषादश्चैव शोषितम् ॥
हर्षकोऽपि च वैचित्र्यं सप्तैते सहजा मलाः'
'सहजं मलमित्युक्तमागन्तुकमलं शृणु।
मायेयं कर्मजं चैव द्विविधं शिवशासने ॥'
'त्रिमलैर्बध्यते चात्मा सकलः परिवारतः।'
(**सुप्रभेदे** ज्ञानपादे २.३, ५उ०–६, ७उ०, ८पू०, ११पू०);
'सति मायात्मके पुंसः संनिकृष्टे मलेऽपरे।
स्थूलः प्राधानिको बन्धः स च कर्मवशात्स्थितः ॥
मोहो मदश्च रागश्च विषादः शोष एव च।
वैचित्र्यं चैव हर्षाख्यः सप्तैते सहजा मलाः ॥
सत्स्वेतेष्वपि ये पाशा मायातः क्षुरिताः कलाः।
तदुद्दलितवीर्योऽणुर्भुङ्क्ते प्रकृतिजान्गुणान् ॥'
(**मतङ्गपारमेश्वरे** विद्यापादे ६.१०२उ०–१०४);
'कलास्थलान्ततत्त्वौघं माता मायेति सा मता।
धर्माधर्मात्मकं सर्वं यत्तत्कर्मेति कीर्तितम् ॥
संरुद्धं येन चैतन्यं तदज्ञानं मलं मतम्।
मायाकर्ममलस्तोमैरेतैर्युक्तस्ततः पशुः ॥'
(**सिद्धान्तशेखरे** २.२.३उ०–५पू०)

[2] 'पशवस्त्रिविधा ज्ञेयाः सकलः प्रलयाकलः।
विज्ञानाकल इत्येषां शृणुध्वं लक्षणं क्रमात् ॥
मलोपरुद्धदृक्शक्तिस्तत्प्रसूत्यै कलादिमान्।
भोगाय कर्मसंबन्धः सकलः परिपठ्यते ॥
प्राग्वन्निरुद्धदृक्शक्तिः कर्मपाकात्कलोज्झितः।
कर्मणैष्यत्कलायोग्यो यः स च प्रलयाकलः।
मलोपरुद्धशक्तित्वाच्छून्यकल्पस्वदृक्क्रियः ॥
तृतीयः पठ्यते तन्त्रे नाम्ना विज्ञानकेवलः।'
(**पौष्करे** ४.२उ०–६पू०)

[1] [दीक्षाभेदः]

निराधारोऽथ साधारः शिवस्यानुग्रहो द्विधा ॥१०॥
निराधारो द्वयोस्तेषां साधारः सकलस्य तु।
आचार्यनिरपेक्षेण क्रियते शम्भुनैव या ॥११॥
तीव्रशक्तिनिपातेन निराधाराथ सा स्मृता।
शिवोऽनपेक्षिताचार्यो द्विधा शक्तिनिपातनात् ॥१२॥
स्वयमेवानुगृह्णाति विज्ञानप्रलयाकलान्।
आचार्यमूर्तिमास्थाय चतुर्धा शक्तिपाततः ॥१३॥
भगवाननुगृह्णाति स एव सकलानपि।
[2] शिवस्यानुग्रहाद्दीक्षा जायते कृतकर्मणाम् ॥१४॥
सा चानेकविधा प्रोक्ता तत्प्रपञ्चोऽयमुच्यते।
चाक्षुषी स्पर्शदीक्षा च वाचिकी मानसी तथा ॥१५॥
शास्त्री च योगदीक्षा च हौत्रीत्यादिरनेकधा।

[3] [चाक्षुषी दीक्षा]

चक्षुरुन्मील्य यत्तत्त्वं ध्यात्वा शिष्यः समीक्ष्यते ॥१६॥
पाशबन्धविमोक्षाय दीक्षेयं चाक्षुषी भवेत्।

---

[1] 'साधारा च निराधारा साधारा सकलस्य तु।
निराधारा ह्यथान्येषामेवं दीक्षा मयोदिता॥
आचार्यनिरपेक्षेण तीव्रशक्त्या तु शम्भुना।
या क्रिया क्रियते सा तु निराधारेति कीर्तिता॥
गुरुमूर्तिं समास्थाय मन्दतीव्रादिभेदतः।
कुरुते सकलस्येशः साधारां तामिमां विदुः॥'
(**अचिन्त्यविश्वसादाख्ये** ८.२०–२२);
'अथैतेषां शिवो दीक्षां त्रयाणां देहभेदतः।
कुरुते शक्तिपातेन मन्दतीव्रादिभेदतः॥
सेयं दीक्षा द्विधा भिन्ना साधाराधारवर्जिता।
आचार्यमन्तरेणैव क्रियते शंकरेण या॥
विज्ञानाकलनाम्नश्च प्रलयाकलकस्य च।
तीव्रशक्तिनिपातेन दीक्षा साधारवर्जिता॥
गुरुमूर्तिं समाश्रित्य मन्दशक्तिनिपाततः।
कुरुते सकलस्येशः साधारां तामिमां विदुः॥
इयं चतुर्विधा दीक्षा साधारा शिवशासने।'
(**सिद्धान्तशेखरे** २.२.१२–१६ पू०)

[2] 'साधारणा तु सा दीक्षा नानाभेदाद्भवेत्पुनः।
चाक्षुषी स्पर्शदीक्षा च मन्त्रदीक्षा च वाचिकी॥
शास्त्री च योगदीक्षा च हौत्रीत्यादिरनेकधा।
(**सिद्धान्तशेखरे** २.२.३० उ०, ३१);
चाक्षुष्यादिदीक्षाणां प्रस्ताव उत्तरकामिके —
'चाक्षुष्याद्यास्तु याः स्मृताः।
दीक्षास्ताभिः समायुक्ताः परिचारकनामकाः।
न तु लिङ्गार्चने योग्याः किमु दीक्षादिकर्मणि॥'
(**उत्तरकामिके** २४.५४ उ०, ५५)

[3] 'गुरोर्निरीक्षणादेव सर्वपापात्प्रमुच्यते।'
(**अचिन्त्यविश्वसादाख्ये** ८.५ उ०);
'ध्यायञ्शिवात्मा समवेक्ष्य शिष्यं
तस्मिन्नियम्याध्वगणं दृशैव।

[1] [स्पर्शदीक्षा]

**निधाय दक्षिणे हस्ते शिवं ब्रह्माङ्गसंयुतम् ॥१७॥**
**संस्पृशेच्छिष्यमूर्धादि स्पर्शदीक्षा भवेदियम् ।**

[2] [वाचिकी दीक्षा]

**तत्त्वे चित्तं समाधाय बृंहितान्तरतेजसा ॥१८॥**
**उच्चरेत्संहितामन्त्रान्वाग्दीक्षेयं प्रकीर्तिता ।**

[3] [मानसी दीक्षा]

**मानसं विधिमाश्रित्य मानसीत्यभिधीयते ॥१९॥**

---

छित्वा तु पाशांश्च शिवत्वमस्मिन्
संपादयेद् या खलु चाक्षुषी स्यात् ॥'
(**ईशानशिवगुरुदेवपद्धतौ** तृतीयभागे पृ॰ १३८);
'चक्षुरुन्मील्य यत्तत्त्वं ध्यात्वा शिष्यं समीक्षते ।
पाशबन्धविमोक्षाय दीक्षेयं चाक्षुषी मता ॥'
(**सिद्धान्तशेखरे** २.२.३२);
'उन्मील्य दृष्टी हि गुरुः शिवोऽहं
संचिन्त्य शिष्यं दययेक्षते चेत् ।
मन्त्रीव दष्टं फणिना तथैवं
दीक्षाक्रिया या खलु चाक्षुषी सा ॥'
(**शैवभूषणे** १८०)

[1] 'गुरुः स्पृशति हस्तेन यद्यत्पश्यति चक्षुषा ।
शिवं भवति तत्सर्वं शिवादेव प्रसादतः ॥
न लिप्यते मलेनैव पद्मपत्रमिवाम्भसा ।
(**अचिन्त्यविश्वसादाख्ये** ८.६, ७ पृ॰);
'रुद्रः स्वयं मन्त्रतनुः स्वहस्ते
पद्मे समूर्त्यङ्गयुते समूले ।
स्मृत्वा शिवं यत् स्पृशतीह तेन
सा स्पर्शदीक्षा च्युतपाशबन्धा ॥'
(**ईशानशिवगुरुदेवपद्धतौ** तृतीयभागे पृ॰ १३८);
'निधाय दक्षिणे हस्ते शम्भुं ब्रह्माङ्गसंयुतम् ।
निदध्याच्छिष्यशिरसि स्पर्शदीक्षा भवेदियम् ॥'
(**सिद्धान्तशेखरे** २.२.३३)

[2] 'विश्वाध्वसंयुक्तसदाशिवात्मा
मन्त्रान्स्ववक्त्रे विनिधाय सर्वान् ।
छित्वास्य पाशान्वचसा क्रमेण
संदीक्षयेद्यत्र तु वाचिकी स्यात् ॥
(**ईशानशिवगुरुदेवपद्धतौ** तृतीयभागे पृ॰ १३८);
'उच्चरेद्वचसा मन्त्रान् सा दीक्षा वाचिकी स्मृता ।
(**सिद्धान्तशेखरे** २.२.३३)

[3] 'मनसा गृह्यते देवि युज्यते मनसा पशुः ।
एकेन्द्रियप्रमाणैस्तु मनःसर्वेषु सुन्दरि ॥
मनसा गृह्यते यस्मात्तस्मादेव मनात्मिका ।
तत्स्थानं मनसा सर्वं तन्मनोबुद्धिसंयुतम् ॥
सर्वैः करणयोगैश्च उपलब्धुं महेश्वरि ।
आत्मविद्याशिवं चैव सृष्टिसंहारकल्पनात् ॥
एवं तत्त्वानि विन्यस्य शिवं ह्युपरि विन्यसेत् ।
एवं तु मनसा ध्यात्वा कर्तव्यानुग्रहेच्छया ॥'
(**निश्वासकारिकायां** ३६.४५–४८);
'स्वयं शिवात्मा निखिलाध्वयुक्तः
स्वहृत्सरोजे सकलं समन्त्रम् ।
स्मरञ्शिवं मानसदीक्षयामुं
नियोजयेज्ज्ञानवशाच्छिवत्वे ॥'
(**ईशानशिवगुरुदेवपद्धतौ** तृतीयभागे पृ॰ १३८)

[1][शास्त्री दीक्षा]

**शास्त्रस्य संप्रदानेन शास्त्रदीक्षा समीरिता।**

[2][योगदीक्षा]

**योगेन योगदीक्षा स्याच्छिवत्वे सा व्यवस्थिता ॥२०॥**

[3][हौत्री दीक्षा]

**रजःकुण्डवती हौत्री सा द्विभेदा किलोदिता।**
**[4]समासाच्च द्विधा चेयं दीक्षा तज्ज्ञैरिहोच्यते ॥२१॥**
**ज्ञानवती भवत्येका क्रियावत्यपरा स्मृता।**
**विनेज्यानलकर्मादि मनोव्यापारमात्रतः ॥२२॥**
**दीक्षा ज्ञानवती प्रोक्ता सम्यक् तत्त्वावबोधजा।**
**इज्यानलवती या तु क्रियाकौशलसंभवा ॥२३॥**
**क्रियावत्यथ सानेका निर्बीजाथ सबीजका।**

[5][निर्बीजा सबीजा च]

**तत्र निर्बीजिका या सा समयिन्यथ पुत्रके ॥२४॥**

---

[1] 'शिवशास्त्रप्रदानेन शास्त्रदीक्षा समाहृता'
(**सिद्धान्तशेखरे** २.२.३५ उ०);
'शास्त्री तु शैवागमपाठशिक्षा'
(**शैवभूषणे** १८२ उ०)

[2] 'तत्त्वद्योतकयोगस्य प्रदानाद्योगजा भवेत्।'
(**सिद्धान्तशेखरे** २.२.३६ पू०);
'योगी षडाधारसुदर्शिनी स्यात्।'
(**शैवभूषणे** १८२ उ०)

[3] 'अग्निकार्यमयी हौत्रीत्येवं दीक्षा निरूपिता।'
(**सिद्धान्तशेखरे** २.२.३६ उ०);
'हौत्री चात्र तु कुण्डमण्डलवती साचार्यहस्तक्रिया
सामान्यादिषडध्वशुद्धिसहिता निर्वाणदीक्षा हि सा।'
'हौत्री सद्गुरुणा कृता च कलया शुद्धिं च संदर्शिनी
शैवी संचितपापराशिहरिणी सौभाग्यदात्री च सा।
दीक्षा षड्गुणदायिनी निरुपमा साष्टाङ्गसिद्धि-प्रदा
पुण्यानामियमेव मूर्ध्नि निहिता दीक्षैव मोक्ष-प्रदा॥'
(**शैवभूषणे** १८३ पू०; १८४)

[4] 'सा च क्रियावती पूर्वा ज्ञानवत्यपरा स्मृता।
या मण्डपरजःकुण्डपाशच्छेदाध्वशोधनैः॥
द्रव्यहोमादिसंयुक्ता दीक्षा सोक्ता क्रियावती।
विना मण्डपकुण्डाद्यैर्मनोव्यापारमात्रतः॥
सम्यग्ज्ञानावबोधान्ता दीक्षा ज्ञानवती स्मृता।'
(**ईशानशिवगुरुदेवपद्धतौ** तृतीयभागे पृ० १३८)
'भेदोपभेदसंयुक्ता सा पुनर्द्विविधा भवेत्।
आद्या क्रियावती तत्र कुण्डमण्डलपूर्विका॥
मनोव्यापारमात्रोत्था यः सा ज्ञानवती परा।'
(**सिद्धान्तशेखरे** २.२.२९, ३० पू०)

[5] 'चतुर्विधा क्रियादीक्षा सबीजा बीजवर्जिता।
अधिकारेण संयुक्ताप्यन्या निरधिकारिणी॥

सबीजा तु भवेद्दीक्षा साधकाचार्ययोरपि ।
अथ निर्बीजिका दीक्षा प्रोक्ता सा द्विप्रकारिका ॥२५॥
एका निर्वाणदा सद्यो द्वितीया देहपाततः ।
चाक्षुषादिविभेदेन या दीक्षा समयी स्मृता ॥२६॥
निराधारेण गुरुणा सद्यो निर्वाणदा कृता ।
साधारेण कृता सा चेन्मुक्तिदा देहपाततः ॥२७॥
बालबालिशवृद्धस्त्रीभोगभुग्व्यथितात्मनाम् ।
भवेन्निर्बीजिका दीक्षा समयाचारशुद्धिदा ॥२८॥
विदुषां च समर्थानां सबीजा परिकीर्तिता ।

[1][शिवधर्मिणी लोकधर्मिणी च]

सबीजा च द्विधा भिन्ना प्रथमा शिवधर्मिणी ॥२९॥
साधकाचार्ययोः सोक्ता देशकालादिभेदतः ।
धर्माधर्मात्मकं कर्म प्रागागामि विचित्रकम् ॥३०॥
संचिन्त्य शोध्यते यत्र सैवोक्ता शिवधर्मिणी ।
अधर्ममात्रसंशुद्धौ द्वितीया लोकधर्मिणी ॥३१॥

---

सबीजा समयाचारसंयुक्तानां नृणां भवेत् ।
विधिहीना त्वशक्तादिस्त्रीबालेषु विधीयते ॥
साधकाचार्ययोग्या या साधिकारा तु सा भवेत् ।
नित्ये नैमित्तिके काम्ये योग्यतास्ति विशेषतः ॥
नित्यमात्राधिकारा वा निर्बीजान्येति' ।
(**अचिन्त्यविश्वसादाख्ये** ८.१२–१५पू०) ;
'सबीजा समयोपेता समयाचारसंयुता ।
पाशच्छेदादिसंयुक्ता विदुषामेव सा स्मृता ।
निर्बीजा तु पुनर्दीक्षा राज्ञां बालाबलास्वपि ॥
अतिवृद्धातिरुग्णानां बालिशानां च शस्यते ।
साधकाचार्ययोर्नित्यक्रियानैमित्तिकादिषु ॥
स्वपरार्थाधिकारित्वात्सबीजैव विधीयते ।
(**ईशानशिवगुरुदेवपद्धतौ** तृतीयभागे पृ० १३८)
'सबीजा प्रथमा दीक्षा द्वितीया बीजवर्जिता ।
साधिकारा तृतीया स्यात्तुर्या निरधिकारिका ॥
समयाचारसंयुक्ता सबीजा सुधियां भवेत् ।'
'अथ निर्बीजदीक्षायां द्विधा भेदो निगद्यते ।
सद्यो निर्वाणदा त्वाद्या चिरान्निर्वाणदापरा ॥
प्रारब्धसंचितागामिकर्मजालं विशोध्यते ।
ययात्यन्तविरक्तानां सद्यो निर्वाणदा तु सा ॥
प्रारब्धकर्मणां भोगाद्यया मुक्तिं निरन्तराम् ।
यान्ति बालादयः सेयं चिरान्निर्वाणदा भवेत् ॥'
(**सिद्धान्तशेखरे** २.२.१६ उ०, १७; २२ उ०–२५ पू०)

[1]'सबीजा द्विविधा प्रोक्ता प्रथमा शिवधर्मिणी ।
धर्माधर्मात्मकं सर्वं संचितागामिचित्रकम् ॥
संमृद्य साध्यते यस्मात्सा दीक्षा शिवधर्मिणी ।
अधर्मसंचितं सर्वं कर्माङ्गमिव शोध्यते ॥
धर्मावशेषितो यत्र सा दीक्षा लोकधर्मिणी ।
तत्राद्या सशिखाच्छेदा न शिखाच्छेदनापरा ॥
भौतिकी नैष्ठिकी चेति द्विधा सा शिवधर्मिणी ।
व्रतमोक्षसमायुक्ता भौतिकीति निगद्यते ॥
शरीरपातपर्यन्ता यदा सा नैष्ठिकी मता ।'
(**सिद्धान्तशेखरे** २.२.१८–२२पू०)

[1][साधिकारा निरधिकारा च]

**नित्यमात्राधिकारित्वात्समयिन्यथ पुत्रके ।**
**दीक्षा निरधिकारैव नैमित्तानधिकारिणी ॥३२॥**
**साधकाचार्ययोर्नित्यनैमित्तकाम्यकर्मसु ।**
**सर्वत्रैवाधिकारत्वात्साधिकारैव सा तयोः ॥३३॥**

[2][समयदीक्षादीनां भेदः]

**यत्र रुद्रपदे योगो योगो यत्रैश्वरे पदे ।**
**शिखाच्छेदो न यत्रास्ति दीक्षा सा समयी द्विधा ॥३४॥**
**यत्र पाशशिखाच्छेदो योगः शिवपदे भवेत् ।**
**निर्वाणाख्या तु सा सैव पुत्रके नाभिषेकतः ॥३५॥**

---

[1] 'अथातः साधिकारायाः स्वरूपं परिभाष्यते ।
नित्ये नैमित्तिके काम्ये कर्मकाण्डे यतो भवेत् ॥
अधिकारः समर्थानां साधिकारेति सा स्मृता ।
अधिकारविहीनत्वात्काम्ये नैमित्तिकेऽपि च ॥
नित्याधिकारिणोः पुत्रसमयिन्योर्यतस्तयोः ।
ततः सेयं समाख्याता दीक्षा निरधिकारिका ॥'
(**सिद्धान्तशेखरे** २.२.२५ उ०–२८ पू०)

[2] 'गन्धाधिवासितं कृत्वा स्वसव्यकरपल्लवम् ।
सासनेन सदेहेन शिवेन समधिष्ठितम् ॥
शिवहस्तमिति ध्यात्वा सापेक्षनिरपेक्षकम् ।
हृद्देशाद् भ्रूप्रदेशान्तं नीत्वा वै चूलिकान्तकम् ॥
सह प्रासादोच्चारेण समस्तग्रन्थिभेदिना ।
रुद्रेश्वरपदावाप्तिदायकं शिरसि न्यसेत् ॥'
'अयं रुद्रो भवत्वात्मा भगवंस्त्वत्प्रसादतः ।
इत्येवं प्रार्थनां कृत्वा कुर्यात्प्रोक्षणताडने' ॥
(**उत्तरकामिके** २०.६६–६८; ८३)
'अध्वशुद्धिः शिखाच्छेदस्त्वत्प्रसादान्मया कृतः ।
यात्वयं परमं धाम भगवन्परमेश्वर ॥'
'संभाव्य मन्त्रमुच्चार्य कारणत्यागयोगतः ।
शिवे संयोजयेच्छिष्यं पूर्णया कुम्भकेन तु ॥'
(**उत्तरकामिके** २३.२०१, २१२ उ०; २१३ पू०);
'शिखाच्छेदं ततो होमं मूलेनैव तु योजयेत् ।
संयोज्य परमे तत्त्वे संस्थानं तत्र कारयेत् ॥
अधिकारार्थमाचार्ये परापरपदे स्थिते ।
शिवत्वे साधकानां तु विद्यादीक्षां सदाशिवे ॥
पुत्रके परमे तत्त्वे समयिन्यैश्वरे तथा ।
एवमुद्देशतो दीक्षा कथिता विस्तरोऽन्यतः ।'
(**नेत्रतन्त्रे** ४.७ उ०–१० पू०);
'परमशिवयोजनानन्तरमाचार्याणामपरशिवयोजना कार्या, साधकानां तु शिवयोजनानन्तरं सदाशिवयोजना कार्या, पुत्रकाणां परतत्त्व एव, समयिनामीश्वरतत्त्वे इति विभागः ।'
(क्षेमराजरचित-**नेत्रतन्त्रव्याख्यायाम्** ९);
'क्रियावत्यपि समयदीक्षा निर्वाणदीक्षा साधकदीक्षा चेति बहुविधा । यत्र मलशोधनमात्रेण क्रियया संस्कृत्य शिष्यं समये प्रवेश्य रुद्रात्मतां चापादयेत् सा समयदीक्षा ।
षड्यत्र शुध्यन्त्यध्वानः क्रियावाप्तिश्च पुष्कला ॥
तत्तु पाशशिखाच्छेदो योगः शिवपदे तथा ।
निर्वाणदीक्षा सा प्रोक्ता विशेषेणाधिकारिणाम् ॥
यस्यां तु पाशविश्लेषान्निवृत्त्यादिषु शोध्यते ।
अणिमादिगुणावाप्तिर्योगश्चैवेश्वरे पदे ॥
अधिकारश्च तत्रादौ दीक्षा सा साधकाह्वया ।'
(**ईशानशिवगुरुदेवपद्धतौ** तृतीयभागे पृ० १३८, १३९)

साध्यमन्त्राभिषेकाच्च साधके सा प्रकीर्तिता।
सर्वविद्याभिषेकेण भवेत्साचार्यगोचरे ॥३६॥

[अध्वसंशुद्धिः]

शिवसंस्कारयुक्तस्य यच्छिवत्वसमर्पणम्।
क्रियया वाथ शक्त्या वा दीक्षा सा सर्वतो मता ॥३७॥
दीक्षया मुच्यते देही त्रिविधाद्भवबन्धनात्।
सा दीक्षा चाध्वसंशुद्धिः स चाध्वा षड्विधः स्मृतः ॥३८॥

[1][षड्विधोऽध्वा]

मन्त्राध्वा च पदाध्वा च वर्णाध्वा भुवनात्मकः।
तत्त्वाध्वा च कलाध्वा च विशत्येकं पदं शिवम् ॥३९॥

[2][षडध्वनां व्याप्यव्यापकभावः]

मन्त्राः पदानि वर्णाश्च व्याप्तानीह समन्ततः।
वर्णास्तु भुवनैर्व्याप्तास्तत्त्वैर्व्याप्तानि तानि च ॥४०॥
कलाभिस्तानि तत्त्वानि व्याप्तानीह कलाः क्रमात्।
शोधनीया विभाव्यैवं पञ्च पञ्चाध्वगर्भिताः ॥४१॥
[3]निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च नाभसी।
कला हृत्कण्ठतालुभ्रूब्रह्मरन्ध्रावधि क्रमात् ॥४२॥

---

[1] 'तत्त्वाध्वा च पदाध्वा च वर्णाध्वा भुवनात्मकः।
मन्त्राध्वा च कलाध्वा च विशन्त्येकं परं शिवम् ॥
अप्रमेयमनिर्देश्यम्'
(स्वायम्भुवे ३६.२, ३ पू०)

[2] 'शान्त्यतीतां चतुर्थ्यन्तां नमस्कारसमन्विताम्।
उच्चार्य योजयेत्सूत्रे भ्रूमध्यान्तोपलक्षिते ॥
अनेनैव क्रमेणाथ भूतशुद्धयुक्तमार्गतः।
कलाचतुष्टये कुर्यात्ताडनग्रहयोजनम् ॥
गलश्वभ्रान्तनाभ्यन्तजान्वन्ताङ्गुष्ठकान्तिकम्।
व्याप्यव्यापकभावं च कुर्यात्तत्र विचक्षणः ॥
मन्त्राः पदानि वर्णाश्च तत्त्वानि भुवनानि च।
व्याप्यानि व्यापकाः कर्ममलमायेयबन्धनाः ॥
व्याप्या मलादयश्चापि व्यापकास्तु कलाः स्मृताः।
तासां च संग्रहे तस्मात्सर्वे स्युः स्वीकृतास्त्विह ॥
स्थापिताभिश्च शुद्धाभिरिहोपस्थापिता अपि।
शुद्धा भवन्ति सर्वे स्युस्तस्मात्तच्छुद्धिरिष्यते ॥'
(उत्तरकामिके २३.३०–३५)

[3] निवृत्तिर्जानुपर्यन्तं प्रतिष्ठा नाभिसीमका।
विद्या कण्ठान्तमेवं हि मुखान्तं शान्तिरेव तु।
शान्त्यतीता तदूर्ध्वे तु परापरशिवान्तका ॥
(सुप्रभेदे चर्यापादे ४.४२ उ०; ४३)

[1][निवृत्तिकलायां योजनीयाः]

**निवृत्तौ पार्थिवं तत्त्वं चिन्त्यमेकं क्षमक्षरम्।**
**कालाग्निप्रभृतीनां च पुरमष्टोत्तरं शतम्॥४३॥**
**अन्त्यपदान्महादेवपदावधि विलोमतः।**
**व्योमव्यापिपदान्यष्टाविंशतिः परिसंख्यया॥४४॥**
**सद्योजातश्च हृदयं द्वौ मन्त्रौ परिकीर्तितौ।**
**गुणा गन्धादिशब्दान्ताः पञ्च ब्रह्मा च कारणम्॥४५॥**

[2][प्रतिष्ठाकलायां योजनीयाः]

**प्रतिष्ठायामबादीनि त्रयोविंशतिसंख्यया।**
**प्रकृत्यन्तानि तत्त्वानि ज्ञातव्यानि स्वभावतः॥४६॥**
**त्रयोविंशतिवर्णाश्च हादिटान्ता विलोमतः।**
**ज्ञातव्यान्यमरेशादि षट्पञ्चाशत्पुराणि तु॥४७॥**
**महेश्वरादरूप्यन्ता पदानामेकविंशतिः।**

---

[1] 'निवृत्तिं विन्यसेच्छक्तौ कलातत्त्वादिसंयुताम्।
पृथ्वीतत्त्वं क्षकारश्च मन्त्रौ हृदयसद्यकौ॥'
'भुवनानां शतं चाष्टाधिकमेवं तु विन्यसेत्।
एकाशीतिपदेष्वन्त्यप्रणवादि विलोमतः॥
नमोद्वयं च प्रणवं षडक्षरमतः परम्।
सर्वदश्च ततः शर्वशिवसूक्ष्मद्वयं तथा॥
शब्दद्वयं तथा ज्ञानद्वयं पिङ्गद्वयं तथा।
पतङ्गं च द्विरभ्यस्तं तुरुयुग्मपदं भवेत्॥
साक्षियुग्मपदं पश्चात्पूर्वस्थितमतः परम्।
अस्तुतास्तुत इत्येवं ततश्चार्नचितार्नचित॥
ब्रह्मविष्णुरुद्रपर सर्वसान्निध्यकारक।
सर्वभूतसुखप्रद भवोद्भवपदं ततः॥
भवयुग्मं तथा शर्वयुग्मं च प्रथमद्वयम्।
मुञ्चमुञ्चपदं योगाधिपते च पदं भवेत्॥
महातेजःपदं सद्भावेश्वरं चेति कीर्तितम्॥
महादेवपदं पश्चात्पदान्यष्टौ च विंशतिः॥
निवृत्या व्याप्तमध्वानं तत्त्वाद्यं कलया न्यसेत्'।
'ओं ब्रह्मणे नमश्चेत्यावाह्य संपूज्य तर्पयेत्।
शब्दस्पर्शौ गृहाणात्र ब्रह्मन्स्वाहेति मन्त्रतः॥
आहुतीनां त्रयं दत्त्वा शिवाज्ञां श्रावयेत् ततः।
कारणेश त्वया नास्य यातुः पदमनामयम्॥
प्रतिबन्धो विधातव्यस्त्वाज्ञैषा पारमेश्वरी।
ब्रह्माणं संविसर्ज्याथ'
(**उत्तरकामिके** २३.६८; ८३ उ०–९०; १२२–१२४)

[2] 'अथ सूत्रे प्रतिष्ठायां शुद्धचर्यमवलोकयेत्।
त्रयोविंशतितत्त्वानि चापस्तेजो मरुद्वियत्॥
गन्धो रसो रूपस्पर्शौ शब्दोपस्थौ च पायु च।
पादौ पाणी च वाङ् नासा जिह्वाचक्षुस्त्वचः श्रुतिः॥
मनोऽहंकारबुद्धी च प्रकृतिः स्यात्ततः परम्।
तत्त्वानि कथितान्येवं ळादि टान्ता द्विजोत्तमाः॥
चतुर्विंशतिवर्णाः स्युः शिरो वामस्तथैव च।
अघोर इति मन्त्राः स्युः षट्पञ्चाशत् पुराणि तु॥'
'महेश्वराद्यरूप्यन्ता पदानामेकविंशतिः।'
'प्रतिष्ठाकलया चैतत्सर्वं व्याप्तं तु भावयेत्।
इत्युक्तसंख्यतत्त्वार्णपदमन्त्रैस्त्रिविष्टपैः।
गर्भितां तामनुस्मृत्य संदधीतोपभुक्तया'
'हरेः शुल्कं रसं दत्त्वा'
(**उत्तरकामिके** २३.१२९–१३२; १४१ पू०; १४८, १४९ पू०; १५३ पू०)

शिरो वामश्च मन्त्रौ द्वौ चत्वारस्तु गुणा मताः ॥४८॥
रसादिशब्दपर्यन्ता विष्णुरत्र च कारणम् ।

[1][विद्याकलायां योजनीयाः]

विद्यायां सप्ततत्त्वानि पुरुषादीन्यनुक्रमात् ॥४९॥
वामादिभुवनानां च विज्ञेया सप्तविंशतिः ।
ध्यानाहारायपर्यन्ता व्यापिन्निति पदादितः ॥५०॥
पदानां विंशतिर्मन्त्रौ शिखाघोरव्यवस्थितौ ।
ञकारादिधकारान्ता वर्णाः सप्त विलोमतः ॥५१॥
रूपस्पर्शौ च शब्दश्च गुणा रुद्रस्तु कारणम् ।

[2][शान्तिकलायां योजनीयाः]

शान्तौ तु त्रीणि तत्त्वानि विद्येश्वरसदाशिवाः ॥५२॥
गकाराच्च त्रयो वर्णा मन्त्रौ वक्त्रतनुच्छदौ ।
वामामुख्यपुराण्यष्टादशैव परिसंख्यया ॥५३॥

[1] 'कलया विद्यया व्याप्तः पुरुषश्चादिमो भवेत् ।
रागो नियतिविद्ये च कलाकालौ च मोहिनी ॥
ञकारादिधकारान्ता वर्णाः सप्त विलोमतः ।
मन्त्रः शिखा पुराणीह सप्तविंशतिसंख्यया ॥'
'पदानि विंशतिर्व्यापिन् व्यापिन्निति पदं भवेत् ।
व्योमिन् व्योमिन् पदं पश्चाद्वीप्सितं स्यादचेतनम् ।
परमेश्वरपरायेति पदं चैव पुनर्भवेत् ।
ज्योतीरूपायसंज्ञं च सर्वयोगाद्यमेव च ॥
पदं चानिधनायेति पदं गोप्त्रे प्रकीर्तितम् ।
गुह्याय चातिगुह्याय पदं स्यादों नमो नमः ॥
पदं ब्रह्माणि पश्चात्र सद्यादीनि क्रमेण तु ।
शिवायेति पदं सर्वप्रभवेति पदं ततः ।
शिवायेति पदं पश्चादों नमः पदमन्ततः ॥
ध्यानाहारायसंज्ञं च कीर्तितानि पदानि च ।'
'रूपगन्धौ गृहाणेति रुद्रे शुल्कं समर्पयेत् ।'
(**उत्तरकामिके** २३.१५३ उ०–१५५ पू०;
१५९ उ०–१६४ पू०; १६५ उ०)

[2] 'विलोक्य मनसा शान्तिं तस्यामन्तर्गतानि च ।
तत्त्वानि त्रीणि विद्येशसादाख्यानि द्विजोत्तमाः ॥
वर्णास्तु गखकाः प्रोक्ता मन्त्रौ वक्त्रतनुच्छदौ ।
वामा ज्येष्ठा च रौद्री च काली कलविकरणी ॥
बलविकरणी चैव बलप्रमथनीत्यपि ।
सर्वभूतदमन्येवं मनोन्मन्यपरा भवेत् ॥
पुराणि नव विद्यायामनन्तः सूक्ष्मसंज्ञकः ।
शिवोत्तमैकनेत्रौ चाप्येकरुद्रस्त्रिमूर्तिकः ॥
श्रीकण्ठश्च शिखण्डी चेत्येवमीशे पुराष्टकम् ।
सादाख्यभुवनं स्वस्मिन्पुराण्यष्टादशैव तु ॥
एकादशपदन्यासो नित्यं योगिन इत्यपि ।
योगपीठाद्यमन्यत्स्याच्छाश्वताय पदं पुनः ॥
ध्रुवायेतिपदं चैवानाश्रिताय पदं ततः ।
अनाथाय पदं प्रोक्तमनन्ताय पदं पुनः ॥
शिवायेति पदं सर्वव्यापिने च पदं ततः ।
व्योमादि व्योमरूपाय पदं व्योमाद्यमेव च ॥
निष्कृतौ शतहोमं तु कवचेन समाचरेत् ।
सर्वं पूर्ववदुद्दिष्टं शुल्कार्थं बुद्ध्यहंकृती ॥
ईश्वरः कारणेशः स्यात् प्राग्वत्सर्वमतः परम्' ।
(**उत्तरकामिके** २३.१६८ उ०–१७७)

नित्यं योगिन इत्यादीन्येकादश पदानि च।
व्योमव्यापिन इत्यन्तान्युक्तानीह विलोमतः ॥५४॥
गुणौ स्पर्शश्च शब्दश्च द्वावीश्वरस्तत्र कारणम्।

[1][शान्त्यतीतकलायां योजनीयाः]

शान्त्यतीतकलायां तु शिवतत्त्वं व्यवस्थितम् ॥५५॥
निवृत्त्यादिपुराण्यत्र भवन्ति दश पञ्च च।
ओमित्येकाक्षरं मन्त्राश्चास्त्रेशानशिवास्त्रयः ॥५६॥
विसर्गाद्या अकारान्ता वर्णाः षोडश कीर्तिताः।
भवत्येको गुणः शब्दः कारणं तु सदाशिवः ॥५७॥
इत्यध्वानं विचिन्त्याथ षडध्वव्यापिनीं पराम्।
ध्यात्वा शक्तिं तदूर्ध्वं च भावयेत्परमं पदम् ॥५८॥

[षडध्वसमुद्देशः]

अथ दीक्षोपयुक्तानां क्रमेणैव षडध्वनाम्।
इयत्तया समुद्देशः कथ्यतेऽत्र विभागशः ॥५९॥

[2][मन्त्राध्वा]

सद्यो वामस्तथाघोरः पुरुषेशानहृच्छिरः।
शिखावर्मास्त्रमूलं च मन्त्राध्वा समुदाहृतः ॥६०॥

[3][पदाध्वा]

एकाशीतिपदैरेवं पदाध्वा परिकीर्तितः।

---

[1] 'शान्त्यतीतकलायां तु शिवतत्त्वं व्यवस्थितम्।
बीजं षोडशकं मन्त्राश्चास्त्रेशानशिवास्त्रयः॥
ओमित्येकं पदं ज्ञेयं पुराणि दश पञ्च च।'
ततो निर्बीजदीक्षायां पूर्णान्ते कारयेदिदम्।
समग्रं समयाचारं शक्तौ पाशात्मकं न्यसेत्॥
समयं समयाचारपाशशुद्धिं महेश्वर।
शिष्यस्य कुरु कुर्वत्रेत्युक्त्वा शुल्कं समर्पयेत्॥
शिवबीजं समुच्चार्य सदाशिवपदं ततः।
मनो गृहाण स्वाहेति चाहुतित्रयमाचरेत्॥
(उत्तरकामिके २३.१७८, १७९ पू०; १८६–१८८)

[2] 'सद्योवाममघोरश्च पुरुषेशानकौ तथा।
हृच्छिरःशिखया वर्मनेत्रास्त्रेण समन्वितम्॥
मू[लमन्त्र]समायुक्तं मन्त्राध्वा चेति कीर्तितः।'
(सूक्ष्मे टि. ९७. पृ० ३६५, ३६६)

[3] 'एकाशीतिपदान्येतैर्मन्त्रैः संपूज्यते हरः।
पदाध्वा च समाख्यातः'
(सूक्ष्मे टि ९७. पृ० ३६५)

[1] [वर्णाध्वा]

अकारादिक्षकारान्तो वर्णाध्वा समुदाहृतः ।।६१।।

[भुवनाध्वा]

[2] [तत्र निवृत्तिकलायां संयोज्यानि भुवनानि]

कालाग्निरथ कूश्माण्डं हाटकं ब्राह्मवैष्णवम् ।
रौद्रं च भुवनान्यन्तर्ब्रह्माण्डस्य स्थितानि षट् ।।६२।।
कपालीशस्त्वजो बुद्धो वज्रदेहः प्रमर्दनः ।
विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः ।।६३।।
अग्निरुद्रो हुताशश्च पिङ्गलः खादको हरः ।
ज्वलनो दहनो बभ्रुर्भस्मान्तकक्षयान्तकौ ।।६४।।
याम्यो मृत्युर्हरो धाता विधाता च तथा परः ।
कर्ता योक्ता वियोक्ता च धर्मो धर्मपतिस्तथा ।।६५।।
निर्ऋतिर्मारणो हन्ता क्रूरदृष्टिर्भयानकः ।
ऊर्ध्वशेफो विरूपाक्षो धूम्रलोहितदंष्ट्रिणः ।।६६।।
बलश्चातिबलश्चैव पाशहस्तो महाबलः ।
श्वेतोऽथ जयभद्रश्च दीर्घबाहुर्जलान्तकः ।।६७।।
मेघनादः सुनादश्च दशमः परिकीर्तितः ।

---

[1] 'अकारादिक्षकारान्तो वर्णाध्वा चेति कीर्तितः ।'
(सूक्ष्मे टि. ९७. पृ० ३६६)

[2] 'कालाग्निरथ कूश्माण्डं हाटकं ब्राह्मवैष्णवौ ।
रौद्रं च भुवनान्यन्तर्ब्रह्माण्डस्य स्थितानि षट् ।।
कपालीशो ह्यजो बुद्धो वज्रदेहः प्रमर्दनः ।
विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः ।।
अग्निरुद्रो हुताशश्च पिङ्गलः खादको हरः ।
ज्वलनो दहनो बभ्रुर्भस्मान्तकः क्षयान्तकः ।।
याम्यो मृत्युर्हरो धाता विधाता कर्तृसंज्ञकः ।
संयोक्ता च वियोक्ता च धर्मो धर्मपतिस्तथा ।।
निर्ऋतिर्मारणो हन्ता क्रूरदृष्टिर्भयानकः ।
ऊर्ध्वकेशो विरूपाक्षो धूम्रलोहितदंष्ट्रिणः ।।
बलो ह्यतिबलश्चैव पाशहस्तो महाबलः ।
श्वेतोऽथ जयभद्रश्च दीर्घबाहुर्जलान्तकः ।।
मेघनादः सुनादश्च दशमः परिकीर्तितः ।
शीघ्रो लघुर्वायुवेगस्तीक्ष्णः सूक्ष्मः क्षयान्तकः ।।
पञ्चान्तकः पञ्चशिखः कपर्दी मेघवाहनः ।
निधीशो रूपवान्धन्यः सौम्यदेहो जटाधरः ।।
लक्ष्मीधृग्रत्नधृक्छ्रीधृक् प्रसादश्च प्रकामदः ।
विद्याधिपेशौ सर्वज्ञो ज्ञानभुग्वेदपारगः ।।
सुरेशः शर्वो ज्येष्ठश्च भूतपालो बलिप्रियः ।
वृषो वृषधरोऽनन्तः क्रोधनो मारुताशनः ।।
ग्रसनोदुम्बरेशौ च फणीन्द्रो वज्रदंष्ट्रिणौ ।
शंभुर्विभुर्गणाध्यक्षस्त्रियक्षस्त्रिदशेश्वरः ।।
संवाहश्च विवाहश्च नभो लिप्सुस्त्रिलोचनः ।
वीरभद्रो भद्रकाली सर्वोर्ध्वे भुवनद्वयम् ।।'
(**उत्तरकामिके** २३.६९–८०)

**शीघ्रो लघुर्वायुवेगः सूक्ष्मस्तीक्ष्णः क्षयान्तकः ॥६८॥**
**पञ्चान्तकः पञ्चशिखः कपर्दी मेघवाहनः ।**
**निधीशो रूपवान्धन्यः सौम्यदेहो जटाधरः ॥६९॥**
**लक्ष्मीधृग् रत्नधृक् श्रीधृक् प्रसादश्च प्रकामदः ।**
**विद्याधिपेशौ सर्वज्ञो ज्ञानभुग्वेदपारगः ॥७०॥**
**सुरेशः शर्वो ज्येष्ठश्च भूतपालो बलिप्रियः ।**
**वृषो वृषधरोऽनन्तः क्रोधनो मारुताशनः ॥७१॥**
**ग्रसनोदुम्बरेशौ च फणीन्द्रो वज्रदंष्ट्रिणौ ।**
**शंभुर्विभुर्गणाध्यक्षस्त्र्यक्षश्च त्रिदशेश्वरः ॥७२॥**
**संवाहश्च विवाहश्च नभो लिप्सुस्त्रिलोचनः ।**
**वीरभद्रो भद्रकाली सर्वोर्ध्वे भुवनद्वयम् ॥७३॥**
[1] कपालीशादयः प्राच्यामग्निरुद्रादयोऽनले ।
**याम्याद्या दक्षिणे भागे निर्ऋत्याद्याश्च नैर्ऋते ॥७४॥**
**बलाद्या वारुणे भागे शीघ्राद्या वायुगोचरे ।**
**उत्तरे च निधीशाद्या ईशे विद्याधिपादयः ॥७५॥**
**वृषादयस्त्वधोभागे शंभुमुख्यास्तदूर्ध्वतः ।**
**ब्रह्माण्डस्य बहिर्देशे दशदिक्षु व्यवस्थिताः ॥७६॥**
**एवं कालाग्निमुख्यानां पुराणां परिसंख्यया ।**
**निवृत्त्याख्यकलायां तु ज्ञेयमष्टोत्तरं शतम् ॥७७॥**

[2] [प्रतिष्ठाकलायां संयोज्यानि भुवनानि]

**अमरेशः प्रभासश्च नैमिशः पुष्करौषधी ।**
**डिण्डिमुण्डिस्तथा भारभूतिश्च लकुलीश्वरः ॥७८॥**

---

[1] 'कपालीशादयः प्राच्यामग्निरुद्रादयोऽनले ।
याम्याद्या दक्षिणे भागे निर्ऋत्याद्याश्च नैर्ऋते ॥
बलाद्या वारुणे भागे शीघ्राद्या वायुगोचरे ।
उत्तरे तु निधीशाद्या ईशे विद्याधिपादयः ॥
वृषादयस्त्वधो भागे शंभुमुख्या नभोगताः ।
भुवनानां शतं चाष्टाधिकमेवं तु विन्यसेत् ॥'
(**उत्तरकामिके** २३.८१–८३)

[2] 'अमरेशः प्रभासश्च नैमिशः पुष्करौषधी ।
डिण्डिमुण्डिस्तथा भारभूतिश्च लकुलीश्वरः ॥
हरिश्चन्द्रश्च श्रीशैलो जल्पेशाम्रातकेश्वरौ ।
मध्यमेशो महाकालः केदारो भैरवस्तथा ॥
गया चैव कुरुक्षेत्रं नाखलो नखलस्तथा ।
विमलेशोऽट्टहासश्च महेन्द्रो भीमसंज्ञकः ॥
वस्त्रापदो रुद्रकोटिरविमुक्तो महालयः ।
गोकर्णो भद्रकर्णश्च स्वर्णाक्षः स्थाणुरित्यपि ॥
छगलण्डो द्विरण्डश्च माकोटो मण्डलेश्वरः ।
कालञ्जरः शङ्कुकर्णः स्थूलेश्वरः स्थलेश्वरः ॥
पैशाचं राक्षसं याक्षं गान्धर्वं चैन्द्रमेव च ।
सौम्यं चैव तथा ज्ञेयं प्राजेशं ब्राह्ममेव च ॥
अकृतश्च कृतश्चैव भैरवो ब्राह्मवैष्णवौ ।
कौमारमौमं श्रैकण्ठमष्टसप्त भवन्ति हि ॥
अमरेशादि चाप्तत्त्वे हरिश्चन्द्रादि तेजसि ।

हरिश्चन्द्रोऽथ श्रीशैलो जल्पेशाम्रातकेश्वरौ।
मध्यमेशो महाकालः केदारो भैरवस्तथा ॥७९॥
गया चैव कुरुक्षेत्रं नाखलो नखलस्तथा।
विमलेशोऽट्टहासश्च महेशो भीमकेश्वरः ॥८०॥
वस्त्रापदं रुद्रकोटिरविमुक्तो महालयः।
गोकर्णो भद्रकर्णश्च स्वर्णाक्षः स्थाणुरित्यपि ॥८१॥
छगलण्डो द्विरण्डश्च माकोटो मण्डलेश्वरः।
कालञ्जरः शङ्कुकर्णः स्थूलेश्वरस्थलेश्वरौ ॥८२॥
पैशाचं राक्षसं याक्षं गान्धर्वं चैन्द्रमेव च।
सौम्यं चैव तथा ज्ञेयं प्राजेशं ब्राह्ममष्टमम् ॥८३॥
अकृतं च कृतं चैव भैरवं ब्राह्मवैष्णवौ।
कौमारं च तथा चौमं श्रीकण्ठं चाष्टमं तथा ॥८४॥
अमरेशादि चाप्तत्त्वे हरिश्चन्द्रादि तेजसि।
गयादि वायुतत्त्वे च व्योम्नि वस्त्रापदादि च ॥८५॥
छगलण्डाद्यहंकारे पैशाचाद्यं मतौ स्थितम्।
प्रकृतावकृताद्येवं षट्पञ्चाशत्पुराणि च ॥८६॥
ज्ञातव्यानि प्रतिष्ठायाममरेशादिनामभिः।

[1][विद्याकलायां संयोज्यानि भुवनानि]

वामो भीमस्तथोग्रश्च भवेशानैकवीरकाः ॥८७॥
प्रचण्डोमापती चाजोऽनन्तैकशिव[2] एव च।
क्रोधश्चण्डेश्वरो ज्योतिः संवर्तः शूरकस्तथा ॥८८॥
पञ्चान्तकैकवीरौ च शिखेदश्च महाद्युतिः।
[3]वामदेवोद्भवश्चैव भवश्चाप्येकपिङ्गलः ॥८९॥

---

गयादि वायुतत्त्वे च व्योम्नि वस्त्रापदादि च ॥
छगलण्डाद्यहंकारे पैशाचाद्यं मतौ स्थितम्।
प्रकृतावकृताद्येवं षट्पञ्चाशत्पुराणि तु ॥'
(उत्तरकामिके २३.१३३–१४१)

[1] 'वामो भीमस्तथोग्रश्च भवेशानैकवीरकाः।
प्रचण्डोमापती चाजोऽनन्तैकशिवसंज्ञकौ।
क्रोधेशश्चैव संवर्तो ज्योतिः पिङ्गश्च शूरकः ॥
पञ्चान्तकैकवीरौ च शिखेदश्च महाद्युतिः।
वामदेवो भवश्चैवोद्भवश्चाप्येकपिङ्गलः ॥
एकेक्षणस्तथैशानस्तथैवाङ्गुष्ठमात्रकः।
षट्कं च पञ्चकं चैवं युग्मं युग्मं द्वयं द्वयम् ॥
अष्टकं पुरुषादौ च मायान्ते तु पुराणि हि।'
(उत्तरकामिके २३.१५५ उ०–१५९ पू०)

[2] अनन्तः+एकशिवः– अनन्त एकशिवः; ततो वृद्धिरार्षः।

[3] वामदेवः+उद्भवः–वामदेव उद्भवः; ततो गुण आर्षः।

एकेक्षणस्तथैशानस्तथैवाङ्गुष्ठमात्रकः।
वामादि पुरुषे रागे प्रचण्डादि तु पञ्चकम् ॥९०॥
[1]नियत्यादिषु क्रोधादि [2]महाद्युत्यादि मायिके।
वामादीनां [3]पुराणां तु विद्यायां सप्तविंशतिः ॥९१॥

[4][शान्तिकलायां संयोज्यानि भुवनानि]

[5]वामा ज्येष्ठा च रौद्री च काली कलविकरणी।
तथा बलविकरणी बलप्रमथिनीत्यपि ॥९२॥
सर्वभूतदमन्येव[6] [7]मनोन्मनीत्यनन्तकः।
सूक्ष्मः शिवोत्तम[8]श्चैकाक्षैकरुद्रत्रिमूर्तयः ॥९३॥
[9]श्रीकण्ठश्च [10]शिखण्डी च [11]तथैवान्यः सदाशिवः।
[12]वामादीनीह [13]विद्येशसदेशेष्वाश्रितानि च ॥९४॥
[14]शान्तौ वामामुखान्यष्टा[15]दशैव भुवनानि तु।

[16][शान्त्यतीतकलायां संयोज्यानि भुवनानि]

निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ॥९५॥

---

[1] निर्वाणादिषु — अ, आ, इ.
[2] महसीत्याधिमाधिके — अ; महसीत्यादिमधिके — आ, इ.
[3] सुराणां — अ, आ, इ.
[4] 'वामा ज्येष्ठा च रौद्री च काली कलविकरणी।
बलविकरणी चैव बलप्रमथनीत्यपि ॥
सर्वभूतदमन्येव मनोन्मन्यपरा भवेत्।
पुराणि नव विद्यायामनन्तः सूक्ष्मसंज्ञकः ॥
शिवोत्तमैकनेत्रौ चाप्येकरुद्रस्त्रिमूर्तिकः।
श्रीकण्ठश्च शिखण्डी चेत्येवमीशे पुराष्टकम् ॥
सादाख्यभुवनं स्वस्मिन् पुराण्यष्टादशैव तु।)
(उत्तरकामिके २३.१७० – १७३ पू०)
[5] वामे — आ, इ.
[6] दमन्येच — अ.
[7] मनोन्मनीत्यनकं परम् — अ, इ; मनोन्मनी परं परम् — आ.
[8] श्चैव एकरुद्रस्त्रिमूर्तया — अ, इ; श्चैव एकरुद्रस्त्रिमूर्तयः — आ.
[9] श्रीखण्डी च — अ; श्रीखण्डश्च — आ, इ.
[10] शिखण्डचश्च — आ, इ.
[11] तथा वाक्या सदा० – अ; तथा वात्या सदा० — आ, इ.
[12] वामादीनि च — अ; इदमर्धं 'आ' मातृकायां न दृश्यते।
[13] सद्येन्त — अ; सद्येश सदेशेषु श्रिता० — इ.
[14] यौ बीजौ वा मुखान्येषा – अ, आ; यौ बीजौ वा मुखान्येषु — इ.
[15] दशैव युवराणि तु – अ, आ; दवै भुव वराणि तु — इ.
[16] ......................'पुराणि दश पञ्च च।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च नाभसी ॥
पुराणि बैन्दवानीह पञ्च प्रोक्तान्यतः परम्।
इन्धिका दीपिका चैव रोचिका मोचिका तथा ॥
तथोर्ध्वगामिनी चेति नादोत्थभुवनानि तु।

शान्त्यतीतेन्धिका चैव[1] दीपिका रोचिका[2] तथा।
मोचिका [3]चोर्ध्वगा चैव [4]व्यापिनी व्योमरूपिणी ॥९६॥
अनन्ता[5]च ह्यनाथा चानाश्रिता च तथा परा।
[6]निवृत्त्यादीन्यतीतायां [7]पुराणि दश पञ्च च ॥९७॥
एवं पञ्च[8]कलावर्तिभुवनानां शतद्वयम्।
चतुर्विंशोत्तरं यत्तद्भुवनाध्वनि [9]र्वणितम् ॥९८॥

[10][तत्त्वाध्वा]

अथ [11]तत्त्वानि षट्त्रिंशत्पृथ्व्यप्तेजो [12]मरुद्वियत्।
गन्धो [13]रूपं रसः स्पर्शः शब्दोपस्थौ [14]च [15]पायु च ॥९९॥
पादौ [16]पाणी च वाङ् नासा [17]जिह्वाचक्षुस्त्वचः श्रुतिः।
मनोऽहंकार[18]बुद्धी च प्रकृतिः पुरुषस्तथा ॥१००॥
रागो नियतिविद्ये च कला [19]कालश्च मोहिनी।
विद्या चेश्वरसादाख्ये[20] शक्तिः शिव इति स्मृतः ॥१०१॥

---

व्यापिनी व्योमरूपा चाप्यनन्ता च ततः परम् ॥
अनाथा च तथा प्रोक्ताऽनाश्रिता पञ्चमीरिता।
भुवनानि तु शाक्तानि पञ्चैव कथितानि तु ॥
(उत्तरकामिके २३.१७९-१८२)

[1] ०तेण्डिकाश्चैव — अ; ०तेन्धिकाद्यैश्च — आ, इ.

[2] रोपिका — अ; रोपिकं — आ, इ.

[3] योद्धचकाश्चैव — अ, इ; योद्धचका चैव — आ.

[4] व्योमनी — अ, इ; व्यामनी — आ.

[5] ०प्यन्यथाप्यर्थानाश्रिता — अ, इ; ०प्यन्यथाप्य-र्थनाश्रिता — आ.

[6] प्रेत्यादीन्यत्वदीयां — अ; प्रेत्यादीन्यत्वतीयां — आ; प्रेत्यादीनि त्वतीतायां — इ.

[7] पुराणी — अ, आ, इ.

[8] ०शिलावृत्तिर्भु० — अ, इ; ०शिलावृत्तिभुव० — आ.

[9] वर्णकम् — अ, आ, इ.

[10] 'अथ तत्त्वानि षट्त्रिशपृथिव्यप्तेजोमरुद्विधः (यत्?)।
रसो (गन्धो?) रूपरसं स्पर्शः शब्दोपस्थौ च वा (पा?) यु च ॥
पादौ पाणी च वाङ्नासा जिह्वाचक्षुस्त्वचः श्रुतिः।
मनोऽहंकारबुद्धि(द्धी) च प्रकृतिः पुरुषस्तथा ॥
रागो नियतिविद्या(द्ये)च कला कालश्च मोहि(नी)।
(विद्या चेश्वरसा)दाख्यो(ख्ये) शक्तिः शिव इति स्मृतः ॥'
(सूक्ष्मे टि ९७. पृ० ३५५)

[11] चत्वारि — अ, आ, इ.

[12] मतिद्वयम् — अ, आ, इ.

[13] रूपीरसस्पर्शश्शब्दौ — अ, आ; रूपरसं चैव स्पर्शश्शब्दौ — इ.

[14] 'इ' मातृकायां चकारो न दृश्यते।

[15] वाय्व च - अ; पार्य च - आ; पायुशब्दो वृत्तार्थ क्लीबे प्रयुक्त इति भाति।

[16] पाणि च पाद्या नासा — आ, इ.

[17] द्विधा च श्रवसो द्वयम् — अ; विधा च श्रुव श्रुतिः — आ, इ.

[18] ०विद्याश्च — अ; विद्या च — आ, इ.

[19] कामा च — अ, इ; काञ्च मोहं हिनी — आ.

[20] विद्या चैव परस्यादौ — अ, आ; विद्या चोपरि सादापौ — इ.

[1][कलाध्वा]

निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।
[2]अतीतेति कला विद्धि समुद्देशः षडध्वनाम् ॥१०२॥

इति श्रीमद्रौरवतन्त्रे क्रियापादे निर्वाणदीक्षा[3]विधिर्नाम

[4]सप्तचत्वारिंशः पटलः ॥

# अष्टचत्वारिंशः पटलः

## [1]आचार्याभिषेकविधिः

### [दीक्षाविधिक्रमः]

**अथ वक्ष्ये विशेषेण दीक्षायास्तु[2] विधिक्रमम् ।**
**समयं विशेषनिर्वाण[3]माचार्यं तु तथोच्यते ॥१॥**
**समयं सर्वजननं[4] साधकस्याभिषेकवत्[5] ।**
**तस्माद्दीक्षाविधिं [6]कृत्वा पूर्ववत्कर्म एव वा[7] ॥२॥**
**[8]तेनाचार्याभिषेकेषु शृणु [9]चैवं यथाक्रमम्[10] ।**

### [11][मण्डपस्तत्र वेदिकादिकल्पनं पूजा च]

**[12]देवालये मण्टपं वा[13] प्रपां वापि विशेषतः ॥३॥**

[1] आचार्याभिषेकविषये **अचिन्त्यविश्वसादाख्ये** ३८; **उत्तरकामिके** २४; **किरणे** क्रियापादे १५; **मतङ्गपारमेश्वरे** क्रियापादे १०; **मृगेन्द्रे** क्रियापादे ८; **वीरे** १०; **सार्धत्रिशतिकालोत्तरे** ९; **सुप्रभेदे** चर्यापादे ४; **स्वायम्भुवे** २४ पटला द्रष्टव्याः।; **दीक्षादर्शे** आचार्याभिषेकप्रकरणे (टि० ७६. पृ० ३११–३४८) एतत्पटलस्था बहवः श्लोका निर्दिष्टाः। ते च यथासंभवं तत्र-तत्र सूचिताः।

[2] दीक्षयित्वा — अ, इ; दीक्षा . . . . . . — आ.

[3] ०माचार्या तु — आ, इ; आचार्यस्येदमाचार्यम् 'अर्श आदिभ्यो अच्' इति अच्प्रत्ययः पा० सू० ५.२.१२७ आचार्यत्वसंपादकं कर्मेत्यर्थः।

[4] समयिसर्वजननं — आ; समयं सर्वजनं कृत्य — आ; 'सर्वजनकम्' इत्यर्थे 'सर्वजननम्' इति प्रयोगः। समयदीक्षाविशेषदीक्षादिसर्वकर्मोत्पादकमित्यर्थः।

[5] ०षेकवान् — आ, इ.

[6] किं वा पूर्ववत्कर्ममेव वा — अ, आ, इ.

[7] 'कर्तव्यम्' इत्यध्याहारः।

[8] ते चार्थाभिषेकेण – अ; ते चार्याभिषेकेण – आ; तेन चार्याभिषेकेण — इ.

[9] देवी — अ, इ.

[10] 'त्रिपदार्थां चतुष्पादां भुक्तिमुक्तिफलोदयाम् ।
संहितां यो विजानाति शिष्योऽसौ सेकमर्हति ॥'
'यागं कृत्वा तु पूर्वोक्तदीक्षा निर्वर्त्य मन्त्रवित् ।
ततोऽभिषेचयेत्तं तु युक्तायुक्तविचारकम् ॥
'ततोऽन्यत्र दीक्षितस्य च शिष्यस्य दीक्षानन्तरमाचारवैकल्ययुक्तस्य च पुनः सद्योऽधिवासेन समयादिनिर्वाणदीक्षान्तं कृत्वा आचार्याभिषेकं कुर्यात्।' (**क्रियादीपिका** पृ० २३०)

[11] 'अभिषेकं ततः कुर्यादङ्कुरार्पणपूर्वकम् ।
पूर्वस्यां वाथ वैशान्यां पश्चिमायां च दिश्यथ ॥
मण्डपे सौम्यवक्त्रे तु वितानेनोपशोभिते ।
अर्धहस्तोच्छ्रयं तद्वद्युगाश्रं वेदिकाद्वयम् ॥
चतुर्हस्तप्रविस्तारं दक्षिणोत्तरदिग्गतम् ।
स्वस्तिकेन चतुर्दिक्षु रञ्जितं दीपराजितम् ॥
भुवः परिग्रहं कृत्वा मण्डपेऽग्नौ शिवं यजेत् ।'
(**उत्तरकामिके** २४.२८ उ०–३१);
'सुमुहूर्ते सुलग्ने च योगे च करणान्विते ।
देवाग्रे मण्डपं कुर्यात्पूर्वोक्तविधिना सह ॥'
(**वीरे** १०.२ उ०, ३ पू०);

मध्यमे [१]वेदिकां कुण्डं पूर्वोक्तं तु यथाक्रमम् ।
[२]नवाग्निं [३]सप्तपञ्चाग्निमेकाग्निं वा विशेषतः ॥४॥

[४][अष्टमङ्गलम्]

वारणं [५]पूर्णकुम्भं च पद्मयुग्मं तु चामरम् ।
शङ्खं दर्पणदीपं च [६]श्रीदेवी चाष्टमङ्गलम् ॥५॥
[७]चतुस्तोरणसंयुक्तं चतुर्द्वारकपूर्वकम् ।
पञ्चलिङ्गादिवर्णांश्च[८] पूर्वोक्तविधिनाचरेत्[९] ॥६॥
[१०]तत्तद्वर्णाधिदेवादीन्[११]सर्वदेवांस्तथा बुधः ।[१२]
दिक्षु वै तत्तद्देवेभ्यः [१३]स्वस्वमन्त्रैस्तु दापयेत् ॥७॥
चन्दनं कुङ्कुमं पुष्पमर्घ्यपाद्याचमं ददेत् ।[१४]
धूपदीपं तथारभ्य नैवेद्यं दापयेत्क्रमात् ॥८॥
ताम्बूलं मुखवासं च पुष्पाञ्जलिनमस्कृती ।[१५]

---

'सर्वालंकारसंयुक्तं मण्डपे समलंकृते ॥
शिवाग्निं पूर्ववत्कृत्वा अभिषेकं समाचरेत् ।
हस्तादि पञ्चहस्तान्तं यथावित्तानुसारतः ॥'
(**सुप्रभेदे** चर्यापादे ४.४८ उ०, ४९)

[१२] '३ उ०, ४ पू०' इदमर्धद्वयं दीक्षादर्शे 'रौरवे' इति निर्दिश्योद्धृतम् ।

[१३] मण्टपं चैव — आ, इ.

[१] वेदिकं — अ, आ, इ.

[२] निर्वाग्निं — अ, आ, इ.

[३] प्रायेणागमेषु नवपञ्चैककुण्डानामेव प्रसिद्धत्वात् सप्तकुण्डपक्षोऽत्रागमे विशेष इव भाति ।

[४] 'पताकाः स्वस्तिकाः शङ्खाः पूर्णकुम्भं सपद्मकम् ।
छत्रलक्ष्मीप्रदीपाश्च द्विजानामष्टमङ्गलम् ॥
पताका पूर्णकुम्भं च शङ्खं चक्रं च सृचङ्कुशौ ।
छत्रं चैव प्रदीपश्च भूभुजामष्टमङ्गलम् ॥
पूर्णकुम्भं प्रदीपश्च पादुकं छत्रभेरिके ।
श्रीनन्दिकौ महाशङ्खो वैश्यानामष्टमङ्गलम् ॥
दर्पणं पूर्णकुम्भं च हलं शफरयुग्मकम् ।
श्रीदीपछत्रभेर्यश्च शूद्राणामष्टमङ्गलम् ॥
(**पूर्वकामिके** ५५.८९–९२);
अत्र विषये पुनः **रौरवे** क्रियापादे १८.७८ उ०, ७९ पू० श्लोकस्तदीयटिप्पणी, **रौरवोत्तरे** ५.८ पू०, ८.५ पू० टिप्पण्यौ, १६.६१ श्लोकस्तदीयटिप्पणी च द्रष्टव्याः ।

[५] पूरणं कुम्भं च — आ.

[६] श्रीदेव्या अष्टमङ्गलम् — अ, इ; श्रीदेव्याष्टमङ्गलम् — आ.

[७] 'चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ।
दर्भमालाभिरावेष्टय मुक्तास्रग्दामभूषितम् ॥
'द्वारपार्श्वद्वये चैव लिङ्गं चैव चतुर्दिशि ।
मध्ये श्वेतमयं पद्मं श्यामवर्णं विधिक्रमात् ॥
द्वारे द्वारे तु विन्यस्य नानावर्णविचित्रकम् ।
हेमकृष्णसुरक्तं च सितवर्णमयं तथा ॥
लिङ्गवर्णं प्रकुर्वीत विचित्रेण समालिखेत् ।'
(**पूर्वकारणे** १४५.१२, १६ उ०–१८)

[८] ०लिङ्गादवर्णाय — अ, आ, इ.

[९] ०विधिमाचरेत् — अ, आ, इ.

[१०] तत्तद्वर्णादिदेवानां — अ, आ, इ.

[११] सर्वदेवं तथा — अ, आ.

[१२] 'इ' मातृकायां '७' श्लोकस्य द्वितीयतृतीयपादौ न स्तः ।

[१३] समन्त्रांस्तु — अ; ससमन्त्रां तु — आ; सर्वमानं तु — इ.

[१४] ०पाद्याचमो भवेत् — अ, आ, इ.

[१५] नमस्कृतम् — अ, आ, इ.

## [1] [अङ्कुरार्पणम्]

[2] पूर्वे दिनेऽङ्कुरं चैवमैशान्ये [3] चोत्तरेऽपि वा ॥९॥
[4] प्रोक्षयेदस्त्रमन्त्रेण स्थण्डिलं शालिभिः क्रमात् ।
दशद्रोणमुत्तमं विद्यादष्टद्रोणैश्च मध्यमम् ॥१०॥
अधमं पञ्चभिः [5] प्रोक्तमथ शालिं यथाविधि ।[6]
मध्यमे [7] पालीं विन्यस्य[8] अष्टपालिकमष्टदिक्[9] ॥११॥
शिवं तु[10] मध्यमे न्यस्य [11] तथैवाष्टाधिदैवतम्[12] ।

## [13] [शिष्यस्वापविधिः]

[14] शिवस्य मूलमन्त्रेण शतं हुत्वा[15] गुरुर्भुवम्[16] ॥१२॥

---

[1] 'अथाङ्कुरार्पणं कुर्याल्लक्षणेन समन्वितम् ।
पालिका घटिका चैव शरावं च त्रिधा भवेत् ॥
नीवारं यवशाली च तिलं वैणवमेव च ।
श्वेतशाली महाशाली मुद्गमाषकुलुत्थकम् ॥'
'निष्पावं च प्रियङ्गुं च ग्राह्येल्लक्षणान्वितम् ।
पयसा क्षालयेद्विप्र प्राच्यादिषु तु वापयेत् ॥
सोमकुम्भं तु विप्रेन्द्र स्थापयेन्मध्यमे तु च ।
सवस्त्रं सहिरण्यं च सकूर्चं सापिधानकम् ॥
आचार्यश्च शुचिर्भूत्वा सोष्णीषः सोत्तरीयकः ।
बीजानि वापयेत्तत्र ताम्बूलं दापयेत्ततः ॥)
(**वीरे** १०.३ उ०–५ पू०, ६–८)

[2] इदमर्धं दीक्षादर्शे 'रौरवे' इति निर्दिश्योद्धृतम् ।; पूर्वादीनांकुरञ्चैवम् — अ, आ, इ.

[3] चोत्तरापि वा — आ.

[4] 'इ' मातृकायां १० श्लोकः ११ पूर्वार्धं च न दृश्यते ।

[5] प्रोक्तस्त्वथ शालि — अ, आ.

[6] अत्र निक्षिपेदिति शेषः ।

[7] पादं — अ, इ; पाद — आ.

[8] विन्यस्यम् — आ.

[9] अत्र 'मध्ये पाली तु विन्यस्य चाष्टदिक्ष्वष्टपालिकाः' इति पाठः सुष्ठु ।

[10] शिवानां — अ, आ, इ.

[11] तथो वाष्टस्य देवतम् — आ.

[12] १२ पूर्वार्धानन्तरम् ग्रन्थानुस्यूतेरभावाद् ग्रन्थपातः स्यादिति भाति ।

[13] 'स्वप्नाधिगमनेनैव सरक्षान्स्वापयेन्निशि ।
सद्यो गोमयसंस्पृष्टभूतलस्पर्शनीषु च ॥
पूर्वयाम्योत्तमाङ्गासु शय्यासु कुशभस्मना ।
परस्परमलग्नासु सोपधानासु पार्श्वतः ॥
चतुर्दण्डिकयास्त्रेण गुप्तासु वितमस्सु च ।
अस्त्राभिरक्षितास्वस्त्रजप्तासु शतसंख्यया ॥
हृदारोप्य शिखाबद्धशिखान्वर्माभिमन्त्रितैः ।
वस्त्रैराच्छादिताञ्शिष्यांस्तिलसर्षपभूतिभिः ॥
अस्त्राभिमन्त्रितैस्तिस्रो रेखाः संकल्प्य बाह्यतः ।
स्वप्नमाणवकं मन्त्रमनुज्ञाय च तानथ ॥
दत्त्वा बाह्यबलिं दिक्षु दिक्पतिभ्यो यथाक्रमात् ।
चरुं दन्तधवादिष्टप्रतिकूलोपशान्तये ॥
विषमार्चिषमादीप्य हुत्वा चैकैकतः शतम् ।
प्रायश्चित्तं ततो हुत्वा मूलेनाष्टोत्तरं शतम् ॥
प्रक्षालिताङ्घ्रिहस्तस्तु स्वाचान्तः स्नानमम्भसा ।
निर्वर्त्य भस्मना वापि परिवर्त्य सितांशुके ।
शिवीकृततनुर्ध्यात्वा समस्ताध्वतनुं शिवम् ॥
चरुकं पञ्चगव्यं च प्राशयेद्दन्तधावनम् ।
पूर्ववत्प्रयतो भूत्वा शुद्धः स्वयमपि स्वपेत् ॥
अथ प्रातर्द्वितीयेऽह्नि कृतनित्यक्रियो गुरुः ।
शिष्यान्पृष्ट्वा निशास्वप्नान्दुःस्वप्ने शान्तिमाचरेत् ॥

पूर्वादीशानपर्यन्तं [1]लेपयेत्तु विचक्षणः।
शिष्याणां [2]स्थानमेकं तु कुर्याच्छुद्धोपवीतिनाम् ॥१३॥
[3]शिवस्य मूलमन्त्रेण प्रतिशिष्यं तु [4]बन्धयेत्।
[5]दर्भाग्रैः शयनं चैव [6]नववस्त्रेण वेष्टयेत् ॥१४॥
शिवमन्त्रं शतं जप्त्वा [7]निद्रां चैवात्र कारयेत्।

[दुःस्वप्नशान्तिः]

दुःस्वप्नं च तथा चैव [8]सुस्वप्नं च [9]परीक्षयेत् ॥१५॥
तद्दोषशमनार्थाय होममष्टशतं कुरु।

[शिष्याणां चौलादिकरणम्]

उषःकाले दिने चैव नित्यकर्म समाचरेत्[10] ॥१६॥
सुमुहूर्ते सुलग्ने तु चौलोक्तविधिमाचरेत्।
स्नानशुद्धिं च वस्त्रेण [11]चोपवीतं यथाक्रमम् ॥१७॥

[12][कुम्भस्थापनम्]

सौम्ये वा दक्षिणे चैव कुम्भस्थापनपूर्वकम्।
नवतीर्थं [13]नवकुम्भे विन्यसेत्तु विचक्षणः ॥१८॥

---

घृतदूर्वामधुक्षीरैः शतहोमं च कापिलैः।
शुभे तु पूर्ववच्छिष्यप्रवेशादिकमाचरेत् ॥
(उत्तरकामिके २३.५४ उ०–६५);
एतस्मिन्विषये पुनः **मृगेन्द्रे** क्रियापादे ७. ९२–१०३; ८.९, १० पू० श्लोकास्तदीयवृत्तिः, **मतङ्गपारमेश्वरे** क्रियापादे ५.१२८ पू०—१३८ श्लोकास्तदीयवृत्तिः, ६.६५ उ०, ६६ श्लोकाश्च द्रष्टव्याः।

[14] शिवानां — अ, आ, इ.

[15] शतन्तु त्वा — आ.

[16] गुरुर्भवेत् — अ, आ, इ.

[1] वेपयेत्तु — आ.

[2] स्नानमेकं — अ, आ, इ.

[3] १४, १५, १६ श्लोकाः दीक्षादर्शे 'रौरवे इति निर्दिश्योद्धृताः।; शिवानां — अ, आ, इ; 'शिवेन' इति पाठः दीक्षादर्शे दृश्यते।

[4] 'बन्धयेत्' इत्यस्य प्रतिसरबन्धनं कुर्यात् इति दीक्षादर्शे ३२९ पृष्ठे व्याख्यानं दृश्यते।

[5] दर्भाग्रे — अ, आ, इ.

[6] नववस्त्रं ततो भवेत् — अ, आ, इ; दीक्षादर्शोद्धृतः पाठोऽत्र साधितः।

[7] निद्रांश्चैव विशेषतः — अ, आ, इ; अत्र पाठो दीक्षादर्शपाठमनुसृत्य साधितः।

[8] दुःखप्नं तु — अ, आ, इ.

[9] परिक्षयेत् — अ.

[10] समारभेत् — आ, इ.

[11] उपवीतं — अ, आ, इ.

[12] 'नवधा पञ्चधा वापि सर्वधान्योपरि स्थितान्।

[होमः]

[1]अग्निं प्रतिष्ठयेत्कृत्वा त्वग्निमुखादि होमयेत्।
इन्द्राग्नियम[2]निर्ऋतिवरुणवायुसोमदिक्[3] ॥१९॥
[4]इन्द्रादीशान्तमन्त्रैश्च[5] होमयेत्तु विचक्षणः।
ईशानादीनि सद्यान्तं हृदयाद्यस्त्रकान्तकम्[6] ॥२०॥
शिवमन्त्रं शतं जप्त्वा हुत्वा [7]व्याहृतिभिः क्रमात्।
यवैस्तण्डुल[8]लाजैश्चापूपनिष्पावसर्षपैः ॥२१॥
अन्येषामाहुतिः [9]प्रोक्ता [10]पूर्ववदाहुतिक्रमात्।

---

घटान्वा कलशान्वाथ सकूर्चान्सापिधानकान् ॥
ससूत्रान्सोदकान्गन्धरत्नस्वर्णवरान्वितान्।
चूताश्वत्थपलाशास्यान् बीजपूरफलावहान् ॥
सदेशानेन विद्येशैर्नव पञ्च पवित्रकैः।
पञ्चपक्षे निवृत्त्यादिकलाभिस्त्वभिमन्त्रयेत् ॥
शिवेन शतधालब्धान्पूजितान्स्नपनोचितान्।
अथवा कलशानेकघटं वा शिवसंयुतम् ॥
दक्षवेद्यां तु संस्थाप्य' ..................।
(**उत्तरकामिके** २४.३४–३८ पू०);
'घटाष्टकेन सेकः स्यात्कुम्भेनैकेन वा भवेत्'
(**किरणे** क्रियापादे १५.४ उ०);
'स्नपनस्य विधानेन स्थापयेत्कलशानि वै।'
(**सुप्रभेदे**, चर्यापादे ४.५० पू०);
एतद्विषये पुनः **मृगेन्द्रे** क्रियापादे ८.१८८ उ० श्लोकस्तदीयवृत्तिः; **मतङ्गपारमेश्वरे** क्रियापादे १०.१२ उ०–१५ पू० श्लोकास्तदीयवृत्तिः; **सार्धत्रिशतिकालोत्तरे** ९.२, ३ पू० श्लोकास्तदीयवृत्तिश्च द्रष्टव्याः।
[1]नवकुम्भेषु नवसमुद्रतीर्थन्यासः—
'शुद्धतोयेन संपूर्णाश्चूतपल्लवशोभितान्।
तेषु क्षारोदधिक्षीरदध्योदघृतसागरान्।
इक्षुसौराम्बुशुद्धाम्बुगर्भोदानष्टसागरान्।
'मध्ये च शिवकुम्भं च शिवाम्भोधिं तथैव च।'
(**अचिन्त्यविश्वसादाख्ये** टि ७. पृ० ७३१–७३४);
'अथ भुक्त्यै मध्ये पूर्वदक्षिणोत्तरपश्चिमकुम्भेषु शान्त्यतीतकलादिना मुक्त्यै पश्चिमोत्तरदक्षिणपूर्वमध्यकुम्भेषु निवृत्त्यादिकलादिनाभिमन्त्र्य, भुक्त्यै सृष्ट्या शिवसागरादिसागराननन्तादिविद्येशानप्यावाह्याभ्यर्च्य, मुक्त्यै क्षारसागराद्यष्टसागरान् कुम्भेष्वावाह्य संपूज्य मध्यकुम्भे शिवसागरमावाह्य संपूज्य विद्येशानपि कुम्भेष्वावाह्य संपूज्य मध्यकुम्भे साङ्गं सावरणं शिवं नित्यवत्पूजयेत्।' (**क्रियादीपिका** पृ० २३२)
[1]अग्निमुखादि कृत्वा तु अग्निं प्रतिष्ठयेत्। ततो होमयेत्' इत्यन्वयः। 'प्रतिष्ठयेत्' इति नामधातुः।
[2]निर्ऋतिश्च वरुणं — आ; नैर्ऋतिश्च वरुणं — इ.
[3]०सोमदिक् — अ, आ, इ; 'दिक्षु' इत्यर्थे दिक्शब्दप्रयोगः आर्षः छन्दोभङ्गपरिहाराय।
[4]२०, २१ श्लोकौ **दीक्षादर्शे** 'रौरवे' इति निर्दिश्योद्धृतौ।
[5]कंसादीनि पर्यन्तं — अ, इ; ईशानां दि नि पर्यन्तं — आ; दीक्षादर्शोद्धृतः पाठोऽत्र साधितः।
[6]हृदयादिसमन्त्रकम् — अ, आ; हृदयादिमस्तकान्तकम् — इ.
[7]व्याहृतिमाहुतिः — अ, आ.
[8]लाजांश्च पावं न्ति सर्षपम् — अ, आ, इ.
[9]प्रोक्तं — आ, इ.
[10]पूर्ववदाहुति — अ; पूर्व वदाहुति — आ; पूर्ववदाहुतिः — इ.

[1] [अभिषेकार्थं वेदिकाकल्पनम्, तत्र शिष्ययोजनम्]

**प्रभाते पूर्वदिग्भागे [2]वेदिकां तु सलक्षणाम्[3] ॥२२॥**
**[4]उत्सेधं चतुरङ्गुल्यं[5] [6]द्विहस्तायामकं भवेत् ।**
**गोमयालेपनं कृत्वा पिष्टचूर्णैः सलक्षणम् ॥२३॥**
**ततः सिंहासनं चैवमूर्ध्वपद्मासनं तथा ।**
**आसनं पूजयेत्तत्र योजयेच्छिष्यमेव च ॥२४॥**

[शिष्यदेहशुद्धिः]

**[7]पूर्वाशाभिमुखं स्थाप्य [8]संप्रोक्ष्य चाभिमन्त्रितम् ।**
**अर्घ्यं शिरसि विन्यस्य पुष्पं शिरसि [9]चैव हि ॥२५॥**
**[10]पञ्चमृत्पञ्चगव्यं तु[11] पूर्वादि स्थापयेत्क्रमात् ।**
**[12]ईशानादि तु सद्यान्तं [मन्त्रं तत्र च विन्यसेत्] ॥२६॥**

---

[1] 'सौम्यायां तु शिशुं न्यसेत् ।
भद्रपीठे शिवेनैव साङ्गेनाधिष्ठितं यथा ॥
स्वासनेन तथा सम्यगर्चितं विभवेन वा ।
वर्णभक्तशरावैस्तु निर्मृज्य वा जलेऽथवा ॥
शुद्धोदकेन संस्नाप्य तस्माद्देशान्तरे पुनः ।
परिवर्तितसूत्राद्यं सोत्तरीयं समालकम् ॥
सितचन्दनदिग्धाङ्गं भस्मोद्धूलितमेव च ।
आनीय दक्षवेदिस्थे भद्रपीठे निवेशयेत् ॥
पूर्वास्यं गन्धपुष्पाद्यैः पूजयित्वा प्रवर्तयेत् ।
आरात्रिकं ज्वलद्दीपैः सद्वर्त्या प्रतिबोधितैः ॥'
(**उत्तरकामिके** २४.३८–४२);
'पश्चात्तद्दक्षिणे स्थाप्य मन्त्रपीठासने पुनः ।
सालङ्कारं च सोष्णीषं सच्छत्रं चामरान्वितम् ॥
स्रग्गन्धैस्तस्य भूषा स्यात्कुशैर्वा सर्वतो भवेत् ।'
(**किरणे** क्रियापादे १५.८, ९);
एतद्विषये पुनः **मतङ्गपारमेश्वरे** क्रियापादे १०.१५–२२ श्लोकास्तदीयवृत्तिश्च द्रष्टव्याः ।

[2] वेदिकानां तु लक्षणम् — अ, आ, इ.

[3] अत्र कल्पयेदिति शेषः ।

[4] २३ पूर्वार्धं २४ श्लोकः २५ पूर्वार्धं च **दीक्षादर्शे** 'रौरवे' इति निर्दिश्योद्धृतानि ।

[5] ०रङ्गुल्य — इ.

[6] द्विहस्तं तद्विशेषतः — अ, आ; द्विहस्ता तद्विशेषतः — इ; दीक्षादर्शोद्धृतः पाठोऽत्र साधितः ।

[7] पूर्वस्याऽभिमुखं — अ; पूर्वास्याभिमुख — आ, पूर्वासाभि मुख — इ.

[8] प्रोक्षणमभिमन्त्रवत् — अ; प्रोक्षणाभिमन्त्रवत् — आ; प्रोक्षणाभिमन्त्रवित् — इ; संप्रोक्ष्य स्थाप्य मन्त्रितम् — दीक्षादर्शपाठः ।

[9] मेवहि — अ; मेव च — आ, इ.

[10] पञ्चमृदः —
'वृषशृङ्गे हस्तिदन्ते दर्भमूले जलान्तरे ।
नद्यास्तीरे च पञ्चैता मध्ये दिक्षु मृदो न्यसेत् ॥'
(**पूर्वकामिके** ३१.३६ उ०, ३७ पू०);
'मृदश्च पञ्चात्र भवन्ति शैले सिन्धौ तटाके वृषभस्य शृङ्गे ।
क्षेत्रे तु शैवे कुशमूलतो वाप्याचार्यसेकार्थमिमे पदार्थाः ॥'
(**शैवभूषणे** श्लो० २३५)

[11] ०गव्यैस्तु — अ, आ, इ;
पञ्चगव्यम् — **अजिते** २२.६–१४ श्लोकास्तदीयटिप्पण्यश्च द्रष्टव्याः ।;

[12] 'आ' मातृकायां २६ श्लोकस्य तृतीयपादो न दृश्यते ।

[1]पञ्चामृतं तथा चैव [2]पञ्चलेपनं स्थापयेत् ।
पूर्वतस्तन्तुवेष्टादौ[3] पूर्वमन्त्रं तु दापयेत् ।।२७।।

[अङ्गशुद्धचै लेपनम्]

[4]ईशानाद्यैस्तु सद्यान्तैः [5]पञ्चमृल्लेपनं तथा ।
[6]पिष्टचूर्णैस्तथा लेपं तिन्त्रिणीलेपनं तथा ।।२८।।
आम्ल[7]पिण्डैस्तथारिष्टैरङ्गशुद्धिविलेपनम् ।
पञ्चगव्याभिषेकं तु[8] पञ्चामृतं तु धारयेत् ।।२९।।
[9]पञ्चौषधं तथा चैव [10]पञ्चाक्षरेण[11] धारयेत् ।
पुष्पमर्घ्यं तु विन्यस्य धूपदीपं तु दापयेत् ।।३०।।
नवकुम्भं तु विन्यस्य धारयेत्तु पुरोक्तवत् ।

[12][समयदीक्षया जन्मशुद्धिः]

कृत्वा दीक्षां विशेषेण ब्रह्म[13]क्षत्रविशां तथा ।।३१।।

---

[1] पञ्चामृतम् — एतद्विषये **अजिते** २२.१५—१८ श्लोकास्तदीयटिप्पण्यश्च द्रष्टव्याः ।
'पञ्चामृतं क्षीरदधिप्रसर्पिमध्विक्षुसाराश्च ततः सितं वा ।
(**शैवभूषणे** श्लो० ९८ उ०)

[2] गन्धाश्च पञ्चागरुचन्दने द्वे
काश्मीरबिल्वं हरिचन्दनं च ।
लेपाश्च गन्धा बहवो भवन्ति
कर्पूरमुख्या मृगनाभिना च ।।'
(**शैवभूषणे** १०७);
'चन्दनागरुकर्पूरकुष्ठकुङ्कममुत्तमम् ।
विलेपनार्थमुद्दिष्टम्'
(**अजिते** २२.२९ उ०, ३० पू०)

[3] ०वे . . . .ोनां — अ; इ; पूर्वतन्त . . . . — आ

[4] ईशानादीनि सद्यान्तं — अ, आ, इ.

[5] २६ पू० टिप्पणी पश्यत ।

[6] पिष्टचूर्ण तथा — अ, आ, इ.

[7] ०पिण्ड तथारिष्टमङ्ग० — अ, आ, इ.

[8] ०भिषेके तु — अ, आ, इ.

[9] पञ्चौषधम् —
'सहदेव्येकपत्र तु भद्रं वैकङ्कतं तथा ।
विष्णुक्रान्तिश्च पञ्चैते पञ्चौषधमथापि वा ।।'
(**अचिन्त्यविश्वसादाख्ये** ३८.११)

[10] पञ्चाक्षरं तु — अ, आ, इ.

[11] पञ्चाक्षरम् —
'नमः शिवाय पञ्चार्णमेतत्पञ्चाक्षरं स्मृतम् ।'
'प्रणवेन समायुक्तं जपकाले तथोच्यते ।
तदा षडक्षरं प्रोक्तं स्त्रीशूद्राद्यैस्तु वर्जितम् ।।'
(**सुप्रभेदे योगपादे** ३. २४ उ०, ३०)

[12] "'एवं समाप्यते दीक्षा जननादिविवर्जिता ।' इति । तथा एष संस्कारः उक्तः इति प्रथम इत्यर्थः । यदुक्तं श्रीमत्त्रयोदशशतिके —
'एषा तु प्रथमा दीक्षा भूताख्या परिकीर्तिता ।' इति ।
अनया भूतसंबन्धिनोऽस्य शरीरस्य शुक्लशोणितादिरूपत्वेनाशुद्धात्मनां शुद्धमन्त्रसंस्काराच्चात्राज्ञत्वलक्षणं बन्धत्वं सद्योजाताद्यभिव्यक्तिस्थानशुद्धविद्याकलाधिष्ठानेन निवर्त्यते ।"
(**सार्धत्रिशतिकालोत्तरे** ८. १ पू० वृत्तिः)

[13] ०क्षत्रियविट् तथा — अ; ०क्षत्रियषट् तथा — आ, इ.

[1]शूद्राणां च विशेषेण समयाद्द्विगुणावधिम्[2] ।
समयाज्जन्मशुद्धिस्तु देहशुद्धिरतः[3] परम् ॥३२॥
[4]अश्वत्थवटबिल्वं च कुशमूल[5]मृदां गृहेत् ।
[6]गोमूत्रेण तु संमिश्रं लेपयेत्सद्यमन्त्रतः[7] ॥३३॥
[8]संस्काराणां तु सर्वेषां शेषं कुर्याद् यथाविधि ।
देहशुद्धि[9]रिति प्रोक्ता; [10]मन्त्रशुद्धिमतः परम् ॥३४॥
दीक्षात्रयं तु कर्तव्यं मन्त्रशुद्धेरनन्तरम्[11] ।
[12]आचार्याय [13]कलाशुद्धिः [14]प्रासादपञ्चदर्शनम् ॥३५॥

---

[1] रुद्राणां — अ, आ, इ.

[2] ०गुणावतम् — आ; ०गुणावतः — इ.

[3] ०शुद्धिमतः — अ, आ, इ.

[4] अयं श्लोकः **दीक्षादर्शे** 'रौरवे' इति निर्दिश्योद्धृतः ।; अश्वत्थं — आ.

[5] ०मिमान् गृहेत् — अ, इ; ०मिमा ग्रहेत् — आ; दीक्षादर्शोद्धृतः पाठोऽत्र साधितः । 'मृदा' इति 'वाचा, निशा' इतिवदाकारान्तशब्दवदत्र प्रयोगः ।

[6] गोमूत्रं तु समं मिश्रं — अ, आ, इ; दीक्षादर्शोद्धृतः पाठोऽत्र साधितः ।

[7] ०मन्त्रकम् — अ, आ, इ.

[8] संस्काराणि तु सर्वाणि विशेषं कृत्वा यथाविधि — अ, आ, इ.

[9] ०कृतं प्रोक्तं — अ, इ; ०कदं प्रोक्तं — आ.

[10] अत्र 'कुर्यात्' इत्यध्याहारः ।;
"मन्त्रशुद्धिरतः परम् ।
'ओंकारादियुता मन्त्रा नमस्कारान्तयोजिताः ।
पूर्वं शिवं समुच्चार्य ततो ब्रह्माङ्गकाद्युभौ ॥
विद्याङ्गं बीजमुख्यं च क्षुरिकां च समुच्चरन् ।
तत्तद्रूपान्वितान्ध्यात्वा पूर्ववन्मन्त्रशुद्धये ॥
क्रियाकाले प्रयोक्तव्याः स्वाहान्तं हवने स्मृताः ।'
(**सुप्रभेदे** क्रियापादे ८. ७१ उ०—७३);
एतद्विषये पुनः **अजिते** २०.११८ श्लोकस्तदीयटिप्पणी; **रौरवे** क्रियापादे १०.११, १२ पू० श्लोकाश्च द्रष्टव्याः ।

[11] ०शुद्धिरनन्तरम् — अ, आ, इ.

[12] 'आचार्याय' आचार्यत्वसंपादनायेत्यर्थः । अत्र '१ उ०' टिप्पणी द्रष्टव्या ।

[13] कला शुद्धिप्रासादं — आ, इ;
'ततः कुण्डसन्निधिं प्राप्य देशिकः ।
निवृत्त्यादिकलानां तु पृथगेवाहुतिं नयेत् ॥
स्वस्वमन्त्रैस्ततः पूर्णां कृत्वा तद्दक्षिणे करे ।
दर्भोल्मुकेन पञ्चाङ्गैः कनिष्ठादिषु लाञ्छयेत् ॥
हरहस्तं च संकल्प्य'
(**उत्तरकामिके** २४.४७ उ० — ४९)

[14] प्रासादं पञ्च० — अ, आ, इ; अत्र 'प्रासादपञ्चकदर्शनम्' इति भवितव्यम् । वृत्तार्थं 'प्रासादपञ्चदर्शनम्' इति प्रयुक्तमिति भाति ।;
पञ्चप्रासादमन्त्राः —
'प्रासादः पञ्चधा ज्ञेयस्तद्भेदो वक्ष्यतेऽधुना ।
शुद्धो मूलं तथा तत्त्वमादिरात्मेति पञ्चधा ॥
प्रासादा उदितास्तेषां शुद्धप्रासाद उच्यते ।
शुद्धः शिव इति प्रोक्तस्तस्माच्छुद्धः प्रकीर्तितः ॥
नादाख्यं यत्परं बीजमादिस्वरसमन्वितम् ।
तच्छुद्धमिति विज्ञेयं सर्वभूतव्यवस्थितम् ॥
(**वातुलशुद्धे** ५.१६–१९ पू०);
[नादाख्यं नादाभिधानं हकारमेव तदुक्तमत्रैव —
"नादं गुह्यं परं जीवं देहीभूतं च पञ्चमम् ।
सान्तं भूतान्ततत्त्वान्तं शिवार्णं शून्यमव्ययम् ।
एव पर्यायनामयुक्त सर्वभूते व्यवस्थितं यत्परं बीजं शुद्धप्रासादमिति ज्ञायते ।]
(**वातुलशुद्धव्याख्याने** पृ० ६६);
मुक्तिदं परमं गुह्यं सर्वसिद्धिप्रदायकम् ।
तद्विदित्वा महासेन देशिकः पाशभिद्भवेत् ।
शुद्धप्रासाद इत्युक्तो मूलप्रासाद उच्यते ।
सर्वेषामेव तत्त्वानां मूलं शिव इति स्मृतः ॥
तस्मान्मूलमिति ज्ञेयं मूलमन्त्रस्तदुच्यते ।

पञ्चगव्याख्यपञ्चानां [1]लेपनं ब्रह्मपञ्चकैः ।
गव्यपञ्चकमित्युक्तं [2]सिञ्चेदापो विशेषतः ॥३६॥

[पूर्ववद्धोमादिकरणम्; मण्डपाद्बहिः स्थण्डिलकल्पनं च]

[3]पूर्वहोमादि [4]मध्याह्ने शोषयेद्रविसंनिधौ ।

---

षष्ठं त्रयोदशान्तं च पञ्चमे विनियोजयेत् ।
शिवशक्तिसमायुक्तं शिवमन्त्रमिति स्मृतम् ॥'
(वातुलशुद्धे ५.१९ उ०–२२);
[शिवशक्तिसमायुक्तं तद् ह्रौकारं बिन्दुवृत्तेन युक्तं चेद् ह्रौमिति मन्त्रो भवेत् । एतद् ह्रौमिति कथितमूलप्रासादमन्त्रोऽस्मिस्तन्त्रे शिवमन्त्रमुच्यते ।]
(वातुलशुद्धव्याख्याने पृ० ६७);
'मूलप्रासाद इत्युक्तस्तत्त्वप्रासाद उच्यते ।
तत्त्वं हि शिवभावत्वाच्छिवमन्त्रमिति स्मृतम् ॥
तत्त्वं चैवादिबीजं च तत्त्वान्ते विनियोजयेत् ।
कार्यकारणसंयुक्तं सर्वतत्त्वात्मकं विदुः ॥'
(वातुलशुद्धे ५.३८–३९);
[तत्त्वं चेति — तत्त्वान्ते तत्त्वाभिधानव्यञ्जनरूपभूतहकारे आदिबीजं च विनियोजयेद् आदिबीजमिति प्रशस्तमकाराख्यं योजयेत् । तदानीं प्रातिपदिकरूपव्यञ्जनेन प्रत्ययरूपस्याकारस्य संयोगाद् हकारो भवति । कार्यकारणसंयुक्तं हकारे बिन्दुसंयुतं चेद् हमित्युद्धृतं स्यात् । एतद्धमित्यक्षरमेव तत्त्वप्रासादं भवेत् ।]
(वातुलशुद्धव्याख्याने पृ० ७१);
'तत्त्वप्रासाद इत्युक्त आदिप्रासाद उच्यते ।
आदिस्तु पूर्वभावित्वादादिरित्यभिधीयते ॥
प्रथमं चतुर्दशं चैव जीवान्ते विनियोजयेत् ।
आधाराधेयसंयुक्तमादिबीजमिहोच्यते ॥'
(वातुलशुद्धे ५.४०, ४१);
[अकारयुक्तहकारेण औकारयोजना कृता चेद् हौ इत्युद्धृतं स्यात् । आधाराधेयसंयुक्त तदुद्धृतवर्णो बिन्दुनादसंयुक्तश्चेद् हौम् इति स्यात् । इहास्मिञ्शुद्धाख्यतन्त्रे हौमिति तान्त्रिकप्रासादमिति बीजमुच्यते आदिप्रासादबीजमित्युच्यते ।]
(वातुलशुद्धव्याख्याने पृ० ७२);
'आदिप्रासाद इत्युक्त आत्मप्रासाद उच्यते ।'
'भूतान्तं तु समुद्धृत्य आदिप्रकृतिसंयुतम् ।
प्रथमं तु समुद्धृत्य षोडशस्वरसंयुतम् ॥
तयोर्मध्यगता शक्तिरात्मबीजमिति स्मृतम् ।
(वातुलशुद्धे ५. ४४ पू०, ४५ उ०, ४६);
['भूतान्तमिति — भूतान्ताभिधानप्रातिपदिकरूपहकारेणादिप्रकृतिसंयुतः प्रकृत्यक्षराणां सप्ताक्षराणाम् आदिभूताकाराक्षराभिधानप्रत्ययो योजितश्चेद्हकाराख्यो भवति । प्रथमं तु समुद्धृत्य सात्त्विकवर्गस्य पूर्वदिग्दलगतप्रातिपदिकरूपसकारोद्धारणं कृत्वा आदिप्रकृतिसंयुक्तं प्रत्ययरूपभूताकारेण योजितं चेत्सकारो भवति । तयोर्मध्यगता शक्तिस्तयोरकारसकारयोर्मध्ये अन्तराले बिन्दुवृत्तयोजनेन हंस इति मन्त्रो जायते । आत्मबीजमिति स्मृतमेतद्धंस इति द्वयाक्षरमात्मप्रासादमिति चिन्त्यते ।]'
(वातुलशुद्धव्याख्याने पृ० ७२);
'हृत्सरोरुहमध्ये च संस्थितं सर्वकारणम् ।
आत्मप्रासादमेवोक्तं जीवप्रासाद उच्यते ॥
एते वै शिवबीजत्वाच्छिवमन्त्रा इति स्मृताः ।
शुद्धादि चात्मपर्यन्तं स्थितिमार्गेण चोद्धृताः ॥
शिवमन्त्रमयं प्रोक्तम्'
(वातुलशुद्धे ५.४७–४९ पू०)

[1] लेपयेद् ब्रह्मपञ्चकः — अ; लेपयेद्ब्रह्मपञ्चकम् — आ, इ.

[2] बिम्बेदापो — अ, आ, इ.

[3] पूर्वा होमादि — आ, इ; अत्र 'कृत्वा' इत्यध्याहृत्य पूर्ववद् होमादि कृत्वा इति व्याख्येयमिति भाति ।

[4] मध्याह्नं — अ, आ, इ.

[1]क्षेत्रादिसन्मृदं ग्राह्य नदीमृत्सिकतं तु वा ॥३७॥
स्थण्डिलं कारयेद्विद्वान्मण्टपस्य [2]बहिस्तु ताः।
द्विहस्तस्थण्डिलं कृत्वा हस्तविस्तारवत्क्रमात्[3] ॥३८॥
[4]प्रादेशार्धं तदुत्सेधं दर्पणोदरसंनिभम्।

[स्थण्डिले लिङ्गस्य दशायुधानां च विन्यासः]

गोधूलिं विन्यसेत्पश्चाल्लिङ्गं[5] वज्रं च दण्डकम् ॥३९॥
[6]शङ्खं चक्रं च पद्मं च [7]गदां त्रिशूलखड्गकम्।
पाशं शक्तिं लिखेत्कार्या[8] [9]बाह्य ऊर्ध्वं च विन्यसेत् ॥४०॥
अधस्तात्पद्मयोगः स्यात्;[10] शय्यां कृत्वा यथाविधि।
[11]सूर्यध्यानं ततः कृत्वा दर्भासनमथापि वा ॥४१॥

---

[1] क्षत्रारिसंपदं — अ; क्षेत्रारि संप्रदं — आ, इ.
[2] बहिः कृतम् — अ, आ, इ.
[3] ०विस्तार च क्रमम् — अ, आ; ०विस्तार-वत्क्रमम् — इ.
[4] प्रादेशार्धन्तमुत्सेधं — अ, आ, इ.
[5] ०ल्लिङ्गे — अ, आ, इ.
[6] शंखचक्रं च पद्मं च — आ, इ; दशायुधानां मध्ये शङ्खस्य प्रस्तावो शैवागमान्तरेषु न दृश्यते।
[7] गदात्रिशूल — आ, इ.
[8] ०त्कार्य – अ, आ, इ; अत्र दशायुधानां मूर्तिः कार्या–शिल्पिना, लेखनं कारयेदित्यर्थः।;
'अस्त्राणि चित्ररूपाणि कर्तव्यानि यथार्थतः'॥
'न्यस्त्वा वज्रं न्यसेच्छक्तिं दण्डं खड्गं च बन्धनम्।
ध्वजं गदां त्रिशूलं च पद्मं चक्रं च विन्यसेत्॥
विचित्ररूपाः कार्या ये लोकेशा नियता यथा।
लक्षणोक्तेन यत्नेन विलिख्यास्त्राणि पूजयेत्॥
(**किरणे** क्रियापादे ८.२३ उ०, ३६, ३७);
'वज्रं शक्तिं च दण्डं च खड्गं पाशं तथाङ्कुशम्।
ध्वजं वाथ गदां शूलं पद्मं चक्रं च कारयेत्॥
ध्वजाङ्कुशौ वा कर्तव्यौ दण्डं हित्वा द्विजोत्तमाः।
लोहैर्वा याज्ञिकैर्वृक्षैर्लोहश्चेद् बेरमानतः॥
देवान् कृत्वा तु हस्ताभ्यां कृताञ्जलिपुटान्वितान्।
जाये शक्तिगदे ज्ञेये शेषाः पुरुषलक्षणाः॥
नवतालप्रमाणेन तेषां लक्षणमुच्यते।
तन्मूर्ध्नि मकुटोर्ध्वे वा हस्ते वज्रादिकान्न्यसेत्॥
देहलब्धेन तेषां तु प्रमाणं प्रविधीयते।
षट्त्रिंशदङ्गुलायाममष्टाङ्गुलसुविस्तरम्॥
तिथ्यङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्।
मात्रैरेकोनपञ्चाशत्पर्यन्तैर्दीर्घमुच्यते॥
लोहजं यदि दारूत्थं नयेन्मात्राङ्गुलेन तु।
इष्टमानेन चैतेषां विस्तार इह कथ्यते॥'
(**उत्तरकामिके** ७२.४०–४६)
[9] बाह्यमूर्ध्वं — अ, आ, इ.
[10] ०योगि स्यात् — अ, आ, इ; ४१ श्लोकस्य प्रथम-पादानन्तरं परस्परं विषयाणामनन्वितत्वान्मध्ये मध्ये ग्रन्थपातः स्यादिति भाति।
[11] सूर्यध्वानं — आ, इ;
"अधस्तात्पद्मयोगः स्यादेनं कृत्वा यथाविधि।
सिंहासनं ततः कृत्वा दर्भासनमथापि वा॥"
इति पूर्वकारणे दृश्यते। तथात्रैव पटले २४ तमश्लोकेऽप्येवमेव दृश्यते। अतोऽत्र श्लोकेऽपि 'सूर्यध्यानं' इत्यस्य स्थाने 'सिंहासनं' इति पाठः सुष्ठु स्यादिति भाति।

[शङ्खाभिषेकः]

[1]वैश्यक्षत्रियशूद्राश्च [2]संस्कार्यास्तु [3]द्विपञ्चकाः ।
अथवा [4]गुहसंख्यानां वर्णानां तु विशेषतः ॥४२॥
[5]समयं द्विगुणीकृत्य विशेषं च यथाविधि ।
[6]निर्वाणं द्विगुणं कृत्वा वर्णानां तु यथाक्रमम् ॥४३॥
ऋग्यजुःसामाथर्वांश्च[7] [8]भगसूक्तं जपेत्पुनः ।
[9]अलाभे [10]आत्रेयसूक्तं [11]वामाद्यास्तु विशेषतः ॥४४॥
इन्द्रादीशानपर्यन्तं स्थाने स्थाने तु कल्पयेत् ।

[शिष्याणां वस्त्रभूषणधारणम्]

नववस्त्राणि चार्हाणि[12] [13]सोत्तरीयं यथाविधि ॥४५॥
[14]स्वर्णसूत्रं तु दातव्यं [15]कटिसूत्रं यथाक्रमम् ।

---

[1] वैश्यशब्दस्य प्रथमतया निर्देशो वृत्तार्थ इति भाति ।

[2] संस्काराणि — अ, आ, इ.

[3] द्विपञ्चकम् — अ, आ, इ;
द्विपञ्चकाः — विप्रादिचतुर्वर्णाः षडनुलोमाश्च, आहत्य दशजात्युत्पन्ना इत्यर्थः ।

[4] गुहः — षण्मुखः । 'गुह' इत्यनेन लक्षितलक्षणया 'षट्' इत्यर्थो बोध्यते इति भाति । 'गुह-संख्यानां' इत्यनेन षडनुलोमा निर्दिश्यन्ते ।;
'ब्राह्मणादिचतुर्वर्णा वर्णानां स्वस्वजातयः ।
चतुर्वर्णा इमे प्रोक्तास्त्वनुलोमानिमाञ्शृणु ॥
सवर्णं प्रथमं विद्यादम्बष्ठं च द्वितीयकम् ।
पारशवं तृतीयं तु; जायन्ते ब्राह्मणोद्भवैः [वाः] ॥
मद्गुरित्युग्रनामा च जायेते तौ नृपस्य तु ।
वैश्यस्य चुञ्चुको ज्ञेयस्त्वनुलोमाः षडैव तु ॥
(**सुप्रभेदे** चर्यापादे २.१७ उ०–२० पू०)

[5] समया — अ, आ, इ.

[6] निर्वाणद्वि — अ, आ, इ.

[7] ०थर्वांश्च — अ, आ, इ; अत्र अथर्वशब्दस्य अकारान्ते प्रयोगः ।

[8] भर्गसूत्रं – अ, इ; गर्भसूत्रं – आ. भगसूक्तः— ऋग्वेदे ७.४१.

[9] अलाभेदात्रयस्सूक्तं — अ, आ; अलाभेदात्रयसूक्तं — इ.

[10] ऋग्वेदे पञ्चमं मण्डलम् ।

[11] वामाद्यां तु — अ, आ, इ.

[12] ०वस्त्राश्च गर्भाणां — अ, आ, इ;
वस्त्रम् —
'देवाङ्गं क्षौमकं वापि नेत्रं कार्पाससंभवम् ।
उत्तमं नवहस्तं स्यान्मध्यमं रसहस्तकम् ।
अधमं बाणहस्तं स्याच्चतुर्भागैकविस्तृतम् ।
सामान्यवस्त्रमेवं तु सर्वकार्येषु संग्रहेत् ।'
(**पूर्वकारणे** १८.२१३, २१४);
एतद्विषये पुनः **अजिते** २२.६२, ६३ पू० श्लोकास्तदीयटिप्पणी; **मतङ्गपारमेश्वरे** चर्यापादे २.३० श्लोकस्तदीयटिप्पणी च द्रष्टव्याः ।

[13] उत्तरीयम् — अस्मिन्विषये **अजिते** २२.७०–७२ श्लोकास्तदीयटिप्पणी; **रौरवे** क्रियापादे ४३.२८, २९ श्लोकौ तदीयटिप्पणी च द्रष्टव्याः ।

[14] स्वर्णसूत्रम्—हेमयज्ञोपवीतम्;
'उपवीतविधिं शृणु ।
पञ्चनिष्कं समारभ्य दशनिष्कावधि क्रमात् ।
सूत्रसंख्या त्रिवृत्प्रोक्ता द्विगुणीकृत्य बुद्धिमान् ॥
उत्सेधयुगमाधिक्यं द्वादशाङ्गुलमुच्यते ।

[1]अङ्गुलीकटकौ बाह्वोर्निष्कं निष्कार्धमेव वा[2] ॥४६॥
त्रिनिष्कात्कटिसूत्रं तु प्रत्येकं तु यथाक्रमम्।
दद्यात्सर्वप्रयत्नेन ब्राह्मणानां विशेषतः॥४७॥

[दर्भादिभिः संस्पर्शः शङ्खजलप्रोक्षणं च]

[3]शैवं दर्भैश्च [4]दूर्वैश्च [5]स्पृशेज्जपन्द्विजोत्तमः।
[6]आचार्यः [7]शङ्खमादाय प्रोक्षयेत्पुरुषेण तु॥४८॥

[8][अङ्गहोमः]

अङ्गहोमं ततः पश्चाज्जुहुयादष्टदिक्क्रमात्।

---

अग्रमग्रे समायोज्य ग्रन्थिः पादाङ्गुलं भवेत्॥
उपवीतमिदं प्रोक्तम्।'
[**उत्तरस्वायम्भुवे** (टि० ५३४, टि० १०१५) पश्चाङ्गभूषणविधिपटले]

[१५] कटिसूत्रम् —
'काटिसूत्रं त्रिसंख्यादि सूत्रं प्रति यवं घनम्।
कटिसन्ध्युपरिष्टात्तु कटिसूत्रं तु बन्धयेत्।
पञ्चषट्सप्तमात्रं वा कीर्तिमाननविस्तृतम्।
तद्विस्तारसमोत्तुङ्गं मेढ्रोर्ध्वं परिकल्पयेत्।
कटिसूत्रादूरुदाममूरुत्र्यंशावसानकम्।
मुक्तादामोरुदाम स्यादन्तरे रत्नसंयुतम्।
कटिसूत्रं समाख्यातम्'
(**काश्यपशिल्पशास्त्रे** ६४.३३ उ०–३६)

[1] अङ्गुलीकर्णबाहुभ्यां — अ, आ, इ;
'अङ्गुली' अनेन पदेन अङ्गुलीयकं लक्ष्यते।
अङ्गुली —
'कुञ्जनिष्कं समारभ्य कुञ्जकुञ्जविवर्धनात्।
त्रिनिष्कान्तं विधेयं स्याद्ग्रन्थिरेकाङ्गुलं भवेत्।
अनामिकामूलनाहं त्ववकाशस्य विस्तरम्।
अङ्गुलीलक्षणं प्रोक्तम्'
कटकम् —
'कटकं त्वधुनोच्यते।
अर्धनिष्कं समारभ्य पादनिष्कविवर्धनात्।
त्रिगुणान्तं विधेयं स्यात्प्रकोष्ठनाहसंमितम्।
मध्ये पद्मसमायुक्तं रुद्राक्षं मध्यमे न्यसेत्।
कौशिकाद्यधिदैवत्यं कनिष्ठाङ्गलिनाहकम्।
एवं कटकमाख्यातम्'
(**उत्तरस्वायम्भुवे** [टि. ५३४, टि. १०१५] पश्चाङ्गभूषणविधिपटले)

[2] च–अ, आ, इ.

[3] शैवं शिवमन्त्रमित्यर्थः। अस्य पदस्य जपन्नित्यत्रान्वयः।; कुशैर्दर्भैश्च — इ.

[4] अत्र दूर्वाशब्दः पुँल्लिङ्गे प्रयुक्तः। 'दूर्वाभिः' इति पाठश्चेत्सुष्ठु।

[5] स्पृशेज्जपं द्वि० – अ; स्पृशेज्जपद्वि० – आ, इ.

[6] आचार्य — आ.

[7] पूर्वं शङ्खस्थापनमावश्यकमित्यनेनाभ्यूह्यते शङ्खाभिषेकः —
'यथालाभं चितान्भद्रानष्टावित्यधिवासयेत्।
कलशान्यागभूमौ तु तदभावात्सुशोभनम्।
एकं वाप्यथवा शङ्खं निर्व्रणं शुभलक्षणम्।'
'यथालाभं चितान् इति लाभानुसारेण संचितानित्यर्थः।'
'तदभावात् इति तेषामभावात् शोभनं एकं वा इति। अभावविकल्पोऽयमेकस्य कलशस्य शङ्खेन सह।'
(**मतङ्गपारमेश्वरे** क्रियापादे १०.१४, १५ पू० श्लोका वृत्तिश्च);
एतद्विषये पुनः **मृगेन्द्रे** क्रियापादे ८.२०१–२०४ श्लोकास्तदीयवृत्तिश्च द्रष्टव्याः।

[8] अङ्गानां शुद्ध्यर्थं विधेयो होमोऽङ्गहोमः।

चक्षुः श्रोत्रं तु [1]नासाभ्यां [2]जिह्वा ह्योष्ठौ च [3]दन्तकैः ॥४९॥
[4]वाक् च पादश्च पाणिश्च पायुगुह्यं तथैव च।
[5]शिखा चाज्ञा गलं चास्यं पादमूलं तथैव च ॥५०॥
[6]उष्णीषं बाहुमूलं च हस्तमध्यं तथैव च।
[7]पृथिव्यग्निश्च वायुश्च वरुणो गगनं तथा[8] ॥५१॥
शब्दः स्पर्शश्च[9] रूपं च [10]रसो गन्धस्तथैव च।
[11]त्वक्चर्ममांसरुधिरमस्थि मज्जाथ शुक्लकम् ॥५२॥
तान्यङ्गानि [12]प्रसङ्गाच्च [13]प्राणोऽपानो यथाविधि।

---

अत्र विषये अङ्गानि परं निर्दिष्टानि। निर्दिष्टान्यङ्गान्यपि न समग्राणि।
अङ्गशुध्यर्थमन्त्रविषये **तैत्तिरीयारण्यके** दशमप्रपाठकपरिशिष्टे ६५, ६६ अनुवाकौ द्रष्टव्यौ;
'अतः परं प्रजुहुयाद्विरजाहोममात्मनः।
षड्विंशत्तत्त्वरूपेऽस्मिन्देहे लीनस्य शुद्धये॥
तत्त्वान्येतानि मद्देहे शुद्ध्यन्तामित्यनुस्मरन्।
तत्रात्मतत्त्वशुद्ध्यर्थं मन्त्रैरारुणकेतुकैः॥
पठ्यमानैः पृथिव्यादिपुरुषान्तं क्रमान्मुने।
साज्येन चरुणा मौनी शिवपादाम्बुजं स्मरन्॥
पृथिव्यादि च शब्दादि वागाद्यं पञ्चकं पुनः।
श्रोत्राद्यं च शिरःपार्श्वपृष्ठोदरचतुष्टयम्॥
जङ्घां च योजयेत्पश्चात्त्वगाद्यं धातुसप्तकम्।
प्राणाद्यं पञ्चकं पश्चादन्नाद्यं कोशपञ्चकम्॥
मनश्चित्तं च बुद्धिश्चाहंकृतिः ख्यातिरेव च।
संकल्पं तु गुणाः पश्चात्प्रकृतिः पुरुषस्ततः॥
पुरुषस्य तु भोक्तृत्वं प्रतिपन्नस्य भोजने।
अन्तरङ्गतया तत्त्वपञ्चकं परिकीर्तितम्॥
नियतिः कालरागौ च विद्या च तदनन्तरम्।
कला च पञ्चकमिदं मायोत्पन्नं मुनीश्वर॥
मायां तु प्रकृतिं विद्यादिति माया श्रुतीरिता।
तज्जान्येतानि तत्त्वानि श्रुत्युक्तानि न संशयः॥
कालस्वभावा नियतिरिति च श्रुतिरब्रवीत्।
एतत्पञ्चकमेवास्य पञ्चकञ्चुकमुच्यते॥
अजानन्पञ्चतत्त्वानि विद्वानपि च मूढधीः।
नियत्यधस्तात्प्रकृतेरुपरिष्टात्पुमानयम्॥
काकाक्षिन्यायमाश्रित्य वर्तते पार्श्वतोऽन्वहम्।
विद्यातत्त्वमिदं प्रोक्तं शुद्धविद्यामहेश्वरौ॥
सदाशिवश्च शक्तिश्च शिवश्चेदं तु पञ्चकम्।
शिवतत्त्वमिदं ब्रह्मन्प्रज्ञानब्रह्मवाग्यतः॥
पृथिव्यादिशिवान्तं यत्तत्त्वजातं मुनीश्वर।
स्वकारणलयद्वारा शुद्धिरस्य विधीयताम्॥
(**शिवमहापुराणे** कैलाससं० १३.२१–३४)

[1] नासिभ्यां — आ, इ.

[2] जिह्वादोष्ठौ — आ, इ.

[3] दन्तकः — अ, आ, इ.

[4] पात्पादं च पाणि च पायो गुह्यान्तमेव च — आ, इ.

[5] शिवं ज्ञायं गुदं यस्य — अ; शिवज्ञाय गुदं यस्य — आ; शिवज्ञायं गुदं यस्य — इ; शिरसोऽङ्गानि निर्दिष्टानि स्युरिति पाठोऽत्र कथंचित्साधितः।; 'आज्ञा' इत्यनेन लक्षणया भ्रूमध्यदेशो बोध्यत इति व्याख्येयम्।

[6] उष्णीषमित्यनेन तद्धारणयोग्यं स्थानं शिरो लक्ष्यते।

[7] पृथिव्याग्निश्च — अ, आ, इ.

[8] वरुणाग्निखगाय च — अ, आ, इ.

[9] स्पर्शं च — आ.

[10] रसगन्ध — आ.

[11] 'त्वक्चर्ममांसरुधिर' इत्यस्य तैत्तिरीयारण्यकदशमप्रपाठकस्थमन्त्रस्य सायणभाष्ये 'एकस्यैव धातोर्बाह्यान्तरभागविवक्षया त्वक्चर्मशब्दौ प्रयुक्तौ' इत्यर्थो वर्णितो दृश्यते।

[12] प्रसङ्गैश्च — अ, आ, इ.

[13] प्राणोऽपान — अ, इ; प्राणोऽपाना — आ.

[1] समानश्चाप्युदानश्च व्यानो [2] नागस्तथा भवेत्[3] ॥५३॥
कूर्मश्च कृकरो[4] ज्ञेयो देवदत्तो[5] धनंजयः।
इडा च पिङ्गला चैव [6] सुषुम्ना च तथैव च ॥५४॥

[ऋत्विक्पूजा]

द्विजपूजां ततः [7] कुर्यात् प्रत्येकं च पुनः पुनः।
पाद्यादिकं[8] [9] विधातव्यं गन्धपुष्पाक्षतैर्युतम् ॥५५॥

[दक्षिणा]

सर्वाभरणसंयुक्तं [10] कर्णकुण्डलमेव च।
[11] अङ्गुलीयसमायुक्तं [12] स्वर्णयज्ञोपवीतकम् ॥५६॥
[13] छत्रदण्डसमायुक्तमेकनिष्कं तु दापयेत्।
[14] अनुज्ञात्वा [15] यथावत्तां [16] दक्षिणां प्रणतिपूर्वकम् ॥५७॥

---

[1] समनाश्चाद्युदानश्च — अ, इ; समानाश्चाद्युदानाश्च — आ.
[2] दानस्तथा — अ, इ.
[3] व्यानगान. . . . . . — आ.
[4] कूर्मश्च तु ततो — अ, आ, इ.
[5] देवदत्तं — आ, इ.
[6] रुष्काय च — अ; रुष्कायश्च — आ; रुष्णायश्च — इ.
[7] कृत्वा — अ, आ, इ.
[8] पाद्यादीनि — अ, आ, इ.
[9] यथा गव्यं — अ; यथातव्यं — आ, इ.
[10] कर्णकुण्डलम् —
'कुण्डलं त्वधुनोच्यते।
कुञ्जत्रिनिष्कमारभ्य पञ्चनिष्कान्तकं क्रमात्।
पञ्चवक्त्रसमायुक्तं रुद्राक्षं मध्यमे न्यसेत्।
पञ्चमूर्त्यधिदैवत्यं कर्णकुण्डलमेव च।'
(**उत्तरस्वायम्भुवे** पञ्चाङ्गभूषणविधिपटले (टि – ५३४, टि – १०१५); एतद्विषये पुनः **रौरवे** क्रियापादे ४३.२२ उ० – २४ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।
[11] अङ्गलीयकम् — '४६' श्लोकोत्तरार्धटिप्पणीं पश्यत।; अङ्गुलाभिर्दिशैर्युक्तं — आ; अङ्गुलीयदशैर्युक्तं — इ.
[12] स्वर्णयज्ञोपवीतम् — '४६' श्लोकपूर्वार्धटिप्पणीं पश्यत।
[13] चित्रदण्ड — अ;
छत्रम् —
'पूर्णचन्द्रसमाकारं मुकुलेन समन्वितम्।
सनालदण्डसंयुक्तं मुक्तादामविराजितम्॥
अग्रं विचित्रवर्णाढ्यं श्वेतच्छत्रमिदं परम्।'
(**अचिन्त्यविश्वसादाख्ये** ६.१४३, १४४ पू०);
दण्डम् —
अस्मिन्विषये **मतङ्गपारमेश्वरे** चर्यापादे २.३५ श्लोकस्तदीयटिप्पणी च द्रष्टव्ये।
[14] अनुज्ञात्वा अनुज्ञाप्येत्यर्थः; अन्तर्भावितणिजर्थः।
[15] यथाव्यक्तं — अ, आ; यथाव्यत्तं — इ.
[16] दक्षिणं प्रणवपूर्वकम् — अ; प्रदक्षिणं प्रणवपूर्वकम् — आ, इ.

## [1] [अभिषेकः]

गुरु[ः] शिष्यस्य भावेन तत्स्वरूपं विचिन्तयेत्।
प्रासादं दर्शयेत्पश्चान्महादीपं[2] च दीपवत् ॥५८॥
पञ्चप्रासादकं[3] दृश्य [4]ह्यभिषेकं यथा [5]पुरा।
सुमुहूर्ते सुलग्ने च स्निग्धसिंहासनोपरि ॥५९॥
पूर्वाशाभिमुखान्[6] स्थित्वा चोत्तरे च यथाक्रमम्[7]।

## [8] [नामकरणम्]

[9]जन्मनामादिकं चैव वर्जयेत्तु विशेषतः ॥६०॥

---

[1] 'प्रागेव कल्पिते गन्धधूपपुष्पादिभिः क्रमात्।
एकैकं कलशं मन्त्रैः पूर्वमेवाभिमन्त्रितम् ॥
विद्येश्वराणां क्रमशस्ततः शक्तिमुदीरयन्।
सौम्याननो गुरुः प्राच्यां तं शिष्यमभिषेचयेत् ॥
सेचितं भूषयेत्सम्यक् श्वेतवस्त्रादिभिः क्रमात्।
रत्नैश्च विविधैश्चित्रैर्यथासंभवतोऽपि वा।
'ध्वजतोरणपताकाद्युपशोभितेऽष्टाभिर्विद्येश्वरजप्तैः कलशैः क्रमेण पूर्वाभिमुखमुत्तराभिमुखो गुरुः व्योमव्यापिनमुच्चारयन् अभिषेचयेत्। ततः प्रावृतानार्द्रशुक्लवासोऽन्तरं भूषणैः भूषयेत्' (**मतङ्गपारमेश्वरे** क्रियापादे १०.२३–२५ श्लोकास्तदीया वृत्तिः);
'शतमष्टोत्तरं जप्त्वा प्रासादं सर्वतोमुखम् ॥
यागं कृत्वा तु पूर्वोक्तमभिषेकं तु कारयेत्।
शुभनक्षत्रदिवसे मुहूर्ते करणान्विते ॥
बहुमङ्गलनिर्घोषैः शङ्खवादित्रनिःस्वनैः।
ब्रह्मघोषैश्च विविधैर्नृत्तगीतसमन्वितैः ॥'
(**सार्धत्रिशतिकालोत्तरे** ९.३ उ०–५);
एतस्मिन्विषये पुनः **मृगेन्द्रे** क्रियापादे ८.१८८ उ० —२०४ श्लोकास्तदीयवृत्तिश्च द्रष्टव्याः।

[2] 'महादीपं प्रासादं दीपवद्दर्शयेत्' इति व्याख्येयमिति भाति।

[3] प्रासादका — अ, आ, इ;
पञ्चप्रासादमन्त्राः — '३५ उ०' टिप्पणी पश्यत।

[4] महाभिषेक — अ, आ, इ; अत्र कुर्यादित्यध्याहारः।

[5] पुनः — अ, आ, इ; '३६' तमश्लोकेऽभिषेकः सूचितः।; '४८' तमश्लोके शङ्खाभिषेकः सूचितः।

[6] पूर्वाशाभिमुखा — अ, इ; पूर्वाशाभिमुख — आ; अत्र शिष्यान् संस्थाप्येति शेषः। '२५' तमश्लोके शिष्यस्य पूर्वाशाभिमुखत्वेन स्थापनमुक्तम्।

[7] 'सुमुहूर्ते सुलग्ने च स्निग्धसिंहासनोपरि यथाक्रमं पूर्वाशाभिमुखान् [शिष्यान्] संस्थाप्य [आचार्यः] उत्तरे च स्थित्वा पञ्चप्रासादकं प्रदर्श्य पुरा यथा अभिषेकं कुर्यात्।' इति व्याख्येयमिति भाति।

[8] 'ईशानवक्त्रविद्येशा अघोरब्रह्मसद्यकम्।
रुद्रो वामश्च हुंकारो नवधा नाम उच्यते ॥
ब्राह्मणादिचतुर्णां तु गणान्तान्तं शिवादिकम्।
स्त्रीणां तु शक्तिनामान्तं दीक्षानाम विधीयते ॥'
(**सुप्रभेदे** चर्यापादे ४.१८, १९);
'स्रजं विमोचयेन्नाम दीक्षितानां तदादिकम्।
शिवान्तकं द्विजेन्द्राणामितरेषां गणान्तकम् ॥
स्थितानां समयेष्वेवं तत्स्रक्पातनिबन्धनम्।'
'यत्र च सा स्रक् ब्रह्मणामङ्गानां वा स्थाने पतति तदा तदादि शिवान्तकं द्विजेन्द्राणां द्विजेषु मध्ये प्रधानानामेवंविधानुग्रहयोगात्स्वजातिमण्डनभूतानां ब्राह्मणक्षत्रियविशां नाम कार्यम्। इतरेषां शूद्राणां तु तदादि गणान्तकं

[१]अत्र [२]गोचरसूत्राणां गोत्राणां तु बहुश्रुतम् ।[३]
[४]नक्षत्राणां नदीनां च [५]ग्रहदेवाद्रिवृक्षकाः ॥६१॥
अन्यदेवाश्च सर्वेषां[६] वर्जयेत्तु प्रयत्नतः ।
[७]पारंपर्याय [८]नामादि [९]कीर्तनीयं यथाक्रमम् ॥६२॥
स्त्रीलिङ्गं [१०]नपुंसकं च वर्जयेत्तु विशेषतः ।
[११]पुँल्लिङ्गेनैव सर्वेषां घोषयेद्बुधवाचकैः ॥६३॥

---

गणान्तं कुर्यात् । एवम् इत्थं सापेक्षदीक्षायोगाद् दीक्षितानां समयेषु स्थितानां समयस्थानां स्रक्पातनिबन्धनं स्रक्पातनिमित्तं नाम कार्यम् ।'
(**मृगेन्द्रे** क्रियापादे ६० उ०; ६१ श्लोकस्तदीयवृत्तिश्च);
एतद्विषये पुनः **मतङ्गपारमेश्वरे** क्रियापादे ७. ११ उ०–१४ श्लोका द्रष्टव्याः ।

[९]पूजान्मनादिना चैव — अ, इ; पूजान्मरदिना चैव — आ;

[१]अग्निगोचर० — अ, आ, इ.

[२]'गोचरं गोत्रसूत्रे च संक्षेपेण वदाम्यहम् ।
गोचरं शिवचिह्नं हि गोत्रं स्वमुनिवर्गकम् ॥
सूत्रमाचार एवं हि शैवानामुच्यते क्रमात् ।
शिवः शिखा तथा ज्योतिः सावित्री व्योमगोचराः ॥
एतानि पञ्च नामानि शैवानां शिवशासने ।
गोचरं कुलमित्युक्तं तच्चिह्नं चातुर्वर्णिनाम् ॥
काश्यपः कौशिकश्चैव भारद्वाजोऽथ गौतमः ।
आत्रेयः पञ्चधा ज्ञेयाः संप्रोक्ता मुनयस्त्विह ॥
काश्यपादिमुनीनां तु शिवगोचरमुच्यते ।'
'कौशिकादिमुनीनां तु शिखागोचरमुच्यते ।'
'मुनीनां भारद्वाजादेर्ज्योतिर्गोचरमुच्यते ।'
'गौतमादिऋषीणां तु प्रोक्तं सावित्रगोचरम् ।'
'अत्र्यादिऋषीणां तु व्योमगोचरमुच्यते ॥'
(**सूप्रभेदे** चर्यापादे १.३०–३४ पू०; ३७ पू०; ४० पू०, ४२ पू०, ४४ उ०);
'शिवः शिखा तथा ज्योतिः सावित्रं चेति गोचरम् ।
गोचरं कुलमित्युक्तं तच्छिह्नं शिवशासने ॥
चिह्नितास्तेन चिह्नेन शैवा ज्ञेया यथा नव ।
पूर्वमुत्पन्नमेतत्तु चतुष्कं शिवभेदतः ॥
शिवाग्रे यः शिवः सूक्ष्मं ततो जातं शिवं कुलम् ।
तदधो या शिखा शक्तिस्ततो जातं शिखाकुलम् ॥
व्यक्तं ज्योतिः कुलं बिन्दोर्नादात्सावित्रसंज्ञकम् ।
उत्तरोत्तरमुत्पत्तेः कल्प्यं न्यूनाधिकं बहिः' ॥
(**किरणे** चर्यापादे ९.२–५);

[३]बहुश्रुतम् इत्यत्र भावार्थे क्तप्रत्ययः; बहुश्रुतिरित्यर्थः ।

[४]'अथ नामतो वर्ज्याः । यथाह मनुः —
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम् ॥
ऋक्षं नक्षत्रम् । अन्त्या म्लेच्छा । भीषणं भयानकम् ।
आपस्तम्बोऽपि —
नक्षत्रनामा नदीनामा वृक्षनामाश्च गर्हिताः ।
सर्वाश्च रेफलकारोष्मान्ता वरणे परिवर्जयेत् ॥
यमोऽपि —
देवनाम्नीं नदीनाम्नीं शैलगन्धर्वनामिकाम् ।
ऋक्षवृक्षलतानाम्नीं दारार्थे परिवर्जयेत् ॥'
(**स्मृतिचन्द्रिकायां** संस्कारखण्डे १. पृ० २०१, २०२);
नक्षत्रादि — अ, आ, इ.

[५]ग्रहदेवादिवृक्षकैः — अ, इ; गृहदेवादिवृक्षकैः — आ.

[६]अत्र नामानीत्यध्याहृत्य ये ग्रहदेवाद्रिवृक्षका अन्यदेवाश्च तेषां सर्वेषां नामानि वर्जयेदिति व्याख्येयमिति भाति ।

[७]'६२' उत्तरार्धं '६३' श्लोकश्च **दीक्षादर्शे** 'रौरवे' इति निर्दिश्योद्धृतौ ।; इदमर्धं 'आ' मातृकायां न दृश्यते ।; पारम्पर्या च — अ, इ.

[८]नामानि — अ; नामाश्च — इ.

[९]कीर्तनीया — इ.

[१०]च नपुंसश्च — अ, आ; च नपुंसश्च — इ.

[११]पुल्लिङ्गादिषु — अ, आ, इ.

ब्रह्मादि[१]चातुर्वर्ण्ये च [२]नाम दत्त्वा तु [३]तत्क्रमात्।
[४]शिवकुम्भं समादाय हस्तमुद्धृत्य [५]तत्क्रमात् ॥६४॥
बुधाय शिवभक्ताय [६]महाशब्दं तु घोषयेत्।
गीतं नृत्तं च गेयं च भेरीताडनपूर्वकम् ॥६५॥
[७]शङ्खघोषं च शृङ्गं च वीणावेणुसमाकुलम्।
[८]काहलध्वनिसंयुक्तं [९]स्तोत्रमङ्गलवाचकैः ॥६६॥
[१०]मर्दलं पटहं झल्लीं [११]घण्टां ढक्कां च घोषयेत्।
सुमङ्गली[१२]वाक्यसंयुक्तं गोत्रनामाभिषेचनम्[१३]॥६७॥
अन्यैश्च [१४]विविधैर्युक्तं कुम्भैश्चैवाभिषेचयेत्[१५]।
[१६]वेदवाक्यैश्च'

[१७][अभिषेकानन्तरकरणीयविधिः]

'तत्काले[१८]वस्त्रालंकारशोभितम्[१९] ॥६८॥

---

[१] चातुर्वर्णश्च — अ, आ, इ.
[२] नामं — अ, आ, इ.
[३] तत्क्रमम् — अ, आ, इ.
[४] शिवकुम्भान् — अ, आ, इ; पूर्वं '१८' तमे श्लोके नवकुम्भस्थापनं निर्दिष्टम्। तत्र प्रधानभूतं 'शिवकुम्भं समादाय' इति व्याख्येयमिति भाति।
[५] तत्क्रमम् — अ, आ, इ.
[६] भारशब्दं — अ, आ, इ;
पञ्चमहाशब्दः —
'कुर्यात्पञ्चमहाशब्दं तथाशुभनिवृत्तये।
दारुजं पृथिवीजातं शङ्खजं चाब्जमुच्यते।
आग्नेयं लोहजं प्रोक्तं वायव्यं वंशजं भवेत्।
गेयं गगनजातं स्यात्पञ्चैते शब्द उच्यते।
सुषिरं गायनं चैव चर्मबन्धं तथैव च।
तन्त्रीवाद्यसमायुक्तः शब्दः पञ्चमहाख्यकः।'
(**पूर्वकारणे** ३१.३४ उ० – ३७ पू०);
'ततं च विततं चैव घनं सुषिरमेव च।
ततं वीणादिकं प्रोक्तं विततं मुरजादिकम्।
घनं च कांस्यतालाद्यं वंशादि सुषिरं स्मृतम्।
एतैश्चतुर्भिः संयुक्तैर्गीतैः शब्दैस्तु तच्छ्रुतः।
स हि पञ्चमहाशब्दः शिवप्रियकरः सदा।'
(**अजिते** २७.१२९–१३१ पू०)
[७] ६६–६८ पू० श्लोका **दीक्षादर्शे** 'रौरवे' इति निर्दिश्योद्धृताः।
[८] कालध्वनिसमायुक्तं — अ, आ, इ.
[९] स्तोत्रं — अ.
[१०] मद्दलीपटहझल्लिश्च — अ, आ, इ.
[११] डक्का डुक्कं च पूर्ववत् — अ, आ, इ.
[१२] वाक् च संयुक्तं — अ; ०वाचसंयुक्तं — आ, इ.
[१३] ०षेचकान् — अ, आ; ०षेचकाम् — इ; अत्र कुर्यादिति शेषः।
[१४] विधिभक्तैश्च अन्यकुम्भाभि — अ, आ, इ.
[१५] ०षेचकान् — इ अत्र दीक्षादर्शोद्धृतः पाठः 'अन्यैश्च विविधैः स्थाप्य कुम्भैश्चैवाभिषेचयेत्' इति दृश्यते।
[१६] देहाद्वाक्यं च — अ, आ, इ.
[१७] "ततो नवे विधायास्मै वाससी सोपवीतके।
सकलीकृत्य संपूज्य शिवहस्तं विधाय च॥
पुस्तकं घटिकासूत्रे कर्तरी योगपट्टकम्।
स्रुक्स्रुवावक्षसूत्रं च सोष्णीषं छत्रपादुके॥
राजोपकरणं यच्च चामराद्युपपद्यते।
मनसा यदसंपन्नं प्रतिपाद्याभिवादयेत्'॥
(**मृगेन्द्रे क्रियापादे** ८. २०५–२०७);
'स्नापयित्वा ततो मन्त्री शुक्लवस्त्रैर्विभूषितम्।

## [1] [शिवसूत्रधारणम्]

**[2] कार्पासानां कन्यकाभिः[3] षण्णवत्या[4] यथाक्रमम् ।**
**[5] त्रिगुणं कृत्य[6] तन्तूनां[7] [8] पुनस्त्रिगुणमन्त्रवित् ॥६९॥**
**सप्तविंशति [9] तन्तूनां योजयेच्छिवमन्त्रतः[10] ।**

---

गन्धपुष्पैः समभ्यर्च्य योगपीठोपरि स्थितम् ॥
उष्णीषं बन्धयेत्सूक्ष्मं सितशुद्धेन वाससा ।
ललाटपट्टं दातव्यं यथा राज्ञः प्रकीर्तितम् ॥
मकुटं कुण्डलाद्यैस्तु सर्वैराभरणैरपि ।
छत्रं ह्युपरि संधार्य चामरं च विधानवित् ॥
द्रव्याणामप्यलाभे तु दर्भैरेतानि कल्पयेत् ॥
अथवा मनसा सर्वं शिवमन्त्रेण चिन्तयेत् ॥
रुद्राक्षमुपवीतं च उष्णीषं चोत्तरीयकम् ।
पुस्तकं स्रुक्स्रुवं चैव करणीं कर्तरीं तथा ।
शिवार्चनाग्निकार्यं च जपध्यानं च शक्तितः ॥
व्याख्यामनुग्रहं कार्यमेवं भवतु सर्वदा ।
सर्वाधिकारभावं च दत्त्वा शिष्यस्य देशिकः ॥'
(**सुप्रभेदे** चर्यापादे ४, ५३ उ०–५९);
'मन्त्रपीठत्वमापन्ने कुशपुष्पाक्षतोत्तरे ।
अधिकारपदेऽस्मिंस्तु उपविश्य तमर्चयेत् ।
सकलीकृत्य विधिना शिवहस्तं प्रकल्पयेत् ॥
गन्धपुष्पपवित्राद्यैर्यथा संभवतो गुरुः ।
योगपट्टाक्षसूत्रं च संहितापुस्तकं तथा ॥
कर्तरीं करणीं सूत्रमाचार्यायोपपादयेत् ।
एवं संपूज्य विधिवदधिकारपदे स्थितः ॥
ततोऽभिवादयेच्छिष्यमाचार्यस्तु ततो गुरुः ।'
(**स्वायम्भुवे** २४.१२–१५);
'ततः शिवतनुं कृत्वा प्रणम्य च सदाशिवम् ।
पीठोष्णीषातपत्रादि ज्ञानं चैव शिवात्मकम् ॥
देयमुत्थापयेत्पश्चात्पाणिना दक्षिणेन तु ।
प्रभोः प्रपातयेत्पादे शिष्यमाचार्यसत्तमः ॥'
(**मतङ्गपारमेश्वरे** क्रियापादे १०.२६, २७)

[18] तत्कालं — अ, अ.
[19] अत्र कृत्वेति शषः
[1] 'ब्राह्मणी राजपुत्री वा वैश्यकन्याथवा पुनः ।
तिसृभिर्निर्मितं सूत्रमथवा शूद्रकन्यया ॥
अन्यस्त्रीनिर्मितं सूत्रं वर्जितव्यं प्रयत्नतः ।
अथवा तन्तुकार्येषु संग्राह्यं साधकोत्तमैः ॥
सूत्रसंग्रहणे काले शोधयेत्तोयभस्मना ।
प्राज्ञः प्रारभ्य पूर्वाह्णे सद्यमन्त्रेण तन्तुकम् ॥
चतुरङ्गुलमात्रेण षण्णवतिश्च सूत्रकम् ।
तेनैव त्रिगुणं यत्तत्सूत्रदघ्नमिहोच्यते ॥
पूर्वपश्चिमतः स्थित्वा दक्षिणोत्तरमेव हि ।
हस्तदक्षिणमूर्ध्वे तु स्पृष्ट्वा वै प्रथमं तथा ॥
पश्चाद्वामकरं चोर्ध्वे त्रिगुणान्ते विशेषतः ।
भूमावन्यत्र वा क्षिप्य पूर्वाग्रं चोत्तराग्रकम् ॥
पत्रं पुष्पं तृणं दत्त्वा कृतलोलवशं कृतम् ।
संप्रोक्ष्य वामदेवेन रज्जुं गृह्णीत साधितम् ॥
ग्रीवाया हस्तयोस्तिर्यक् चाङ्गुष्ठाद्वाहुकान्तकम् ।
तत्समं चैकसूत्रं तु त्रिगुणं चोपवीतकम् ।
रज्जुतद्ग्रन्थिके तस्मिन्वाग्देवी सुप्रतिष्ठिता ॥
सावित्री चैव गायत्री वसेतामग्रमूलयोः ।
ब्रह्मा विष्णुश्च रुद्रश्च त्रिसूत्राणां तु देवताः ॥
अघोरास्त्रेण तद्बद्ध्वा बहुरूपेण धारयेत् ।
नाभिप्रदक्षिणं कार्यं नाभेरूर्ध्वं विधानतः ॥
तत्सूत्रं ब्रह्मचारीणां गृहस्थानां षडेव हि ।
नवकं वानप्रस्थानां यतीनां द्वादशं स्मृतम् ॥
उपवीतविधिः प्रोक्तः'
(**सुप्रभेदे** चर्यापादे ५.१०२ उ०–११४ पू०)
[2] कार्पासकन्यकानां तु — अ, आ, इ.
[3] अत्र कृतानां इत्यध्याहृत्य 'कन्यकाभिः कृतानां तन्तूनां' इत्यन्वयः कार्यः ।
[4] षण्णवत्य — आ.
[5] द्विगुणीकृत्य — अ, इ; द्विगुणं कृत्य — आ.
[6] 'कृत्य' इत्यस्य 'कृत्वा' इति व्याख्या कार्या ।
[7] तन्त्राणां — अ, आ, इ.
[8] पुनस्त्रिगुणं मन्त्रवित् इत्यर्थे समस्तपदं छन्दोभङ्गनिवृत्त्यर्थमिति भाति ।
[9] तन्त्राणां — अ, इ.
[10] ०न्निवमन्त्रकम् — अ; ०मन्त्रकम् — आ, इ.

ऋषिच्छन्दोऽधिदेवांश्च[1] [2]ग्रन्थिमध्ये स्थितः शिवः[3]।।७०।।
[4]ब्रह्मा विष्णुश्च रुद्रश्च [5]तन्तुभेदे प्रकीर्तिताः[6] ।
वाम[7]हस्तादधो न्यस्त्वा [कृतं [8]सूत्रं]हृदा बुधः ।।७१।।
सव्यहस्तोपरि स्थाप्य जप्त्वा [9]घोरं तथा बुधः ।
पश्चाद्गायत्रिमुच्चार्य[10] दत्त्वा [11]सद्येन मन्त्रतः ।।७२।।
[12]धारयेच्छिवसूत्रं तु [13]वर्णे वर्णे तु मन्त्रतः ।
[14]शिवगायत्रिमुच्चार्य ब्रह्मवर्ण तु वर्जयेत् ।।७३।।
मध्ये प्रणवसंयुक्तं वैश्य[15]शूद्रकयोः क्रमात् ।
आद्यन्तं क्षत्रियस्योक्तं जप्त्वा प्रणवसंपुटम् ।।७४।।
जप्त्वोपवीत[16]मन्त्रं तु धारयेद्ब्रह्मवर्णकम् ।
क्षत्रिया[17]दिकवर्णांश्च शिवसूत्रं तु धारयेत् ।।७५।।
पश्चाच्छैवं समुच्चार्य पुनराचम्य पूर्ववत् ।
[18]स्वर्णयज्ञोपवीतं चाथवा रजतमेव वा ।।७६।।
अलाभे कार्पास[19]तन्तूनां द्विगुणं त्रिगुणीकृतम् ।

---

[1] ऋषिच्छन्दादिदेवस्य — अ, आ, इ.
[2] गन्धमध्ये — अ, आ.
[3] स्थितं शिवम् — अ, आ, इ.
[4] इदमर्धं 'आ' मातृकायां न दृश्यते।
[5] तन्त्रभेदं — अ, आ; तन्तुभेदं — इ.
[6] प्रकीर्तितम् — अ, आ, इ.
[7] ०हस्तकरो न्यस्त्वा —अ, आ; हस्तकरेणैव न्यस्त्वा — इ.
[8] सूर्य हृदि बुधः — अ, आ, इ.
[9] चोरं हृदि बुधः — अ, आ, इ.
[10] गायत्री — 'तत्सवितुः' इति मन्त्रं; ऋग्वेदे ३.६.१.१०; तै० संहिता १.५.६.१२; वृत्तार्थमत्र गायत्रीशब्दस्य ह्रस्वान्ततया प्रयोगः।
[11] सद्यं तु — अ, आ, इ.
[12] साधयेच्छिव० — इ.
[13] वर्णाद्वर्णं तु — अ, आ, इ.
[14] शिवगायत्री —
'ओं तन्महेशाय विद्महे महादेवाय धीमहि।
तन्नः शिवः प्रचोदयात् ।'
(पूर्वकामिके मन्त्रोद्धारपटले पृ० १६);
"गायत्रीमन्त्रोद्धारः प्रदर्शितः श्रीमद्बालज्ञानरत्नावल्याम् ।
'ओं तन्महेशाय पदं विद्महे च ततः पदम् ।
वाग्विशुद्धाय तत्रान्ते धीमहीति समन्वितम् ।।
तन्नः शिवपदं तस्मान्नियोज्य च प्रचोदयात् ।
गायत्री कथिता वत्स इति कालोत्तरीयके ।।'
इति"
(क्रियाक्रमद्योतिकाव्याख्या प्रभा पृ० ३८);
वृत्तार्थं गायत्रीशब्दो ह्रस्वान्ततया प्रयुक्तः।; ७२ उ० पश्यत।
[15] सूत्रस्य तत्क्रमम् — अ, आ; शूद्रस्य तत्क्रमम् — इ.
[16] ०मन्त्रेण — अ, आ, इ; उपवीतमन्त्रः — 'यज्ञोपवीतं परमं पवित्रं, इति मन्त्रः (ब्रह्मोपनिषत् ५)
[17] ०दिभिर्वर्णैश्च — अ, आ, इ.
[18] '४६' तमश्लोकपूर्वार्धटिप्पणी पश्यत।; ७६ उ०, ७७ पू० इत्यर्धद्वयं दीक्षादर्शे 'रौरवे' इति निर्दिश्योद्धृतम् ।
[19] ०तन्तुर्द्विगुणास्त्रिगुणान्धारयेत् — अ, इ; ०स्तन्त्राद्विगुणान्तिगुणं धारयेत् — आ.

[पाद्याद्युपचारदानम्]

[1]पाद्यमाचमनं चार्घ्यं गन्धपुष्पं च धूपकम् ॥७७॥
कर्पूरवर्तिसंयुक्तं धूपदीपं द्विधा भवेत् ।
दत्त्वा देवं हृदि [2]ध्यात्वा सर्वाङ्गं [3]भावयेत्पुनः ॥७८॥
दुष्टनिग्रहकारं च शिष्टपालं तथोपरि ।
[4]मन्त्राधारं तु कर्तारं [5]शैवाचारस्य रक्षकम् ॥७९॥
[6]दर्शनान्तरसंहारं परवादिभयंकरम् ।
गोब्राह्म[7]णान्प्राणिनश्च रक्षयेत्सर्वदेवताः[8] ॥८०॥
सर्वदेवतमाश्रित्य लोकानुग्रहकारणम् ।

[9][शिवहस्तसमर्पणम्]

शिवांशोत्पन्नभस्मानं[10] हस्तमादाय मन्त्रवित् ॥८१॥
[11]ललाटे मूर्ध्नि हृदये दापयेद्विधिवत्पुनः ।

---

[1] पाद्याचमनाच्चा० — अ; पाद्याचमनं चा० — आ, इ.

[2] ध्यानं — अ, आ, इ.

[3] मण्डले देवदेवेशमिष्ट्वाग्नौ तर्पयेन्मनून् ।
भगवन् देहमाविश्य मदीयमनुकम्पया ॥
अनुग्रहस्त्वया कार्यः शिष्याणां भावितात्मनाम् ।
इति विज्ञाप्य लब्धाज्ञश्चोष्णीषं शिरसि न्यसेत् ॥
सर्वेषां कर्मणां साक्षी मण्डलस्थः सदाशिवः ।
यज्ञस्य रक्षकः कुम्भे पावके होमकारणम् ॥
शिष्ये तु पाशनाशाय मद्देहे पाशमोचकः ।
पश्चाधिकरणो देवस्त्वहमेव सदाशिवः ॥
मन्त्राः करणभूता ये शिवस्य हृदयादयः ।
ममापि ते तथैवेह स्वातन्त्र्यं स्वस्य चात्मनि ॥
संभाव्याध्येषयेद्देवं प्राणैरन्तर्बहिःस्थितैः ।'
(उत्तरकामिके २३.७उ०–१२);
एतस्मिन्विषये पुनः **मतङ्गपारमेश्वरे** क्रियापादे ५.१६ श्लोकस्तदीयवृत्तिः, **सार्धत्रिशतिकालोत्तरे** ८.८, ९ पू० श्लोकास्तदीयवृत्तिश्च द्रष्टव्याः ।

[4] मन्त्रधारं — अ.

[5] शैवाचानन्तरक्षितम् — अ, आ; शैवाचारं तु रक्षितम् — इ.

[6] दर्शनान्यं च संहारं — अ, आ, इ.

[7] ०णाश्च प्राणाश्च — अ, इ; ०णाश्च प्राणाश्च — आ.

[8] ०देवताम् — अ, आ, इ.

[9] 'गन्धाधिवासितं कृत्वा स्वसव्यकरपल्लवम् ।
सासनेन सदेहेन शिवेन समधिष्ठितम् ॥
शिवहस्तमिति ध्यात्वा सापेक्षनिरपेक्षकम् ।
हृद्देशाद्भ्रूप्रदेशान्तं नीत्वा वै चूलिकान्तकम् ॥
सह प्रासादोच्चारेण समस्तग्रन्थिभेदिना ।
रुद्रेश्वरपदावाप्तिदायकं शिरसि न्यसेत् ॥'
(उत्तरकामिके २०.६६–६८);
एतद्विषये पुनः **मृगेन्द्रे** क्रियापादे ७.६३ श्लोकस्तदीयवृत्तिः; **मतङ्गपारमेश्वरे** क्रियापादे ५.१७, १८, १९ श्लोकास्तदीयवृत्तिश्च द्रष्टव्याः ।

[10] शिवांशोत्पत्तिभस्मारं — अ; शिवांशत् . . . पत्यभस्मारं — आ; शिवाशरत्पत्यभस्मानं — इ; शिवांशोत्पन्नं भस्म यस्मिन् सः तम् ।

[11] ललाटमूर्ध्नि हृदयं — अ, आ, इ.

[1] [अधिकारसमर्पणम्]

**दत्त्वा [2] भुक्त्यधिकारं च [3] सर्वसिद्धिकरं शुभम् ॥८२॥**
**[4] आचार्यं दापयेत्पश्चाद्भस्मरुद्राक्षपूर्वकम् ।**
**देवतानां च देवीनां[5] गाणपत्यादि[6] सर्वशः[7] ॥८३॥**
**[8] मकुटं कुण्डलं चैव पुस्तकं पादुकां तथा ।**

---

[1] 'आमन्त्र्य परमेशानं भगवन्गुरुसन्ततौ ।
नियुक्तोऽयं मया नाथ तवाज्ञानुविधायिना ॥
वक्तव्यः सोऽप्यथैवं स्याद्वत्स त्वयि तु संस्थितः ।
पाल्यो नु संततावाप्तः सोऽधिकार शिवाज्ञया ॥'
(**मतङ्गपारमेश्वरे** क्रियापादे १०.२८, २९);
'आज्ञां च श्रद्धया यावदद्यप्रभृति देशिक ।
दीक्षाव्याख्यादिकं ज्ञात्वा परीक्ष्य विधिना कुरु ॥
तथैव देवदेवाय देशिकाय मया कृतम् ।
त्वत्प्रसादादविघ्नेन चाधिकारं करोत्विति ॥
विज्ञापयेत्'
(**उत्तरकामिके** २४.४५ उ०–४७);
एतद्विषये पुनः **मृगेन्द्रे** क्रियापादे ८.२०८–२१० पू० श्लोकास्तदीयवृत्तिश्च द्रष्टव्याः ।

[2] भोक्ताचकारश्च — अ; भोक्ताचकारा च — आ, इ.

[3] सर्ववृद्धि — इ.

[4] आचार्यस्येदमाचार्यम् । 'आचार्यत्वसंपादकम्' इत्यर्थः । 'अर्श आदिभ्यो अच्' (पा० सू० ५.२.१२७) इत्यच्प्रत्ययः । 'आचार्यम्' इत्येतत् 'भुक्त्यधिकारम्' इत्यस्य विशेषणम् ।

[5] 'आधिपत्यम्' इत्यध्याहृत्य देवतानां देवीनां च आधिपत्यमिति व्याख्येयमिति भाति ।

[6] गाणापत्यादि — अ, आ.

[7] सर्वतः — अ.

[8] इदमर्धं **दीक्षादर्शे** 'रौरवे' इति निर्दिश्योद्धृतम् ।;
'ततोऽस्य दद्यादाचार्यः शिष्यस्योष्णीषकादिभिः ।
करणीं कर्तरीं तद्वद्घटिकां स्रुक्स्रुवौ पुनः ॥
दर्भं च पुस्तकान्यक्षसूत्रमामकुटं गुरुः ।
पादुकं चामरं छत्रं हस्तिनं शिबिकादिकम् ॥
राजाङ्गमन्यत्तत्काले दद्याच्छ्रद्धासमन्वितः ।
(**उत्तरकामिके** २४.४३–४५ पू०);
'करणी कर्तरी सूत्रं योगपट्टाक्षसूत्रकम् ।
संहितापुस्तकं न्यस्य सर्वं तस्योपपादयेत् ॥
(**किरणे** क्रियापादे १५.९ उ०, १० पू०);
मकुटलक्षणम् — अस्मिन्विषये **रौरवे** क्रियापादे '४३' तमपटले १–१२ श्लोकास्तदीयटिप्पण्यश्च द्रष्टव्याः ।;
कुण्डललक्षणम् — '५६' पूर्वार्धटिप्पणीं पश्यत ।
पुस्तकम् —
'अङ्गुलत्रयमारभ्य व्योमाङ्गुलविवृद्धितः ।
पञ्चविंशतिमात्रान्तं भवेत्पुस्तकदैर्घ्यकम् ॥
व्योमाङ्गुलात्पादवृद्ध्या रविमात्रावसानकम् ।
प्रमाणं तु विशाले स्यात्पक्षपट्टीयुतं तु वा ॥
भूर्जत्वक्कुलसंभूतं श्रीतालीदलमेव वा ।
तालसंभूतपत्रं वा सुवर्णादिविनिर्मितम् ॥
शैलदारुकृतं वापि लेखयेदक्षरैः शुभैः ।'
(**उत्तरकामिके** ६७.३ – ६ पू०);
पादुका —
'तत्र तु द्वादशाङ्गुल्यं पादुकं स्वप्रमाणतः ।
आयामार्धं तु विस्तारं विस्तारार्धं समुच्छ्रितम् ॥
लोहेनैव तु कर्तव्यं पादुकाद्वयमुत्तमम् ।
(**सुप्रभेदे** क्रियापादे २२.१५४ उ०, १५५);
छत्रचामरपिञ्छानि —
'चामरव्यजनादीनां लक्षणं वक्ष्यतेऽधुना ।
मयूरव्यजनं कुर्याच्चमर्याश्चामरं तथा ॥
हेमरत्नमयं दण्डं रौप्यं ताम्रमयं तु वा ।
दन्तैर्वा दारुसारैर्वा दण्डं कुर्याद्विशेषतः ॥
श्वेतच्छत्रस्य पिञ्छस्य वक्ष्येऽहं लक्षणं शृणु ।
सप्तषट्तालतारं वा ह्यथवा पञ्चतालकम् ॥
वस्त्रैरावेष्ट्य सर्वत्र मौक्तिकैश्च विभूषयेत् ।
मयूरपिञ्छकैः पिञ्छमधोमुखसमन्वितम् ॥
सौवर्णं रजतं वापि ताम्रं वा मकुटं भवेत् ।
नवाष्टसप्तषड्ढस्तैः पञ्चहस्तैश्चतुष्ककैः ॥

छत्रचामरपिञ्छैश्च[1] दत्त्वा मन्त्रं तु पूर्ववत् ॥८४॥
[2] दर्पणदर्शनं चापि गीतनृत्तं च पूर्ववत् ।
[3] नमस्कारं ततः कृत्वा [4] शिष्टे शिष्ये यथाविधि ॥८५॥
[5] स्वर्णपुष्पं च दातव्यं [6] स्तोत्रवाचनपूर्वकम् ।
[7] मातापित्रोर्गुरोश्चैव [8] ज्येष्ठानां लिङ्गिनामपि ॥८६॥
मधु [9] शर्करासंयुक्तं सघृतं क्षीरमुच्यते ।
होमशेषं सकृद्ग्राह्य मिश्रं पीत्वा तु मन्त्रवित् ॥८७॥
पुनराचम्य विधिना साङ्गुलेन तु [10] वक्त्रकम् ।
भस्मचन्दनपुष्पैस्तु[11] शिरोऽङ्गुष्ठादिलेपनम् ॥८८॥
वेदिका[12] पश्चिमे चैव कल्पयेदासनं तथा ।
अङ्गन्यासकरन्यासमक्षरन्यासमेव च ॥८९॥
बद्धाञ्जलिपुटं न्यस्त्वा [13] कनिष्ठं च तदूर्ध्वतः ।
पुण्याहं स्वस्तिवचनं[14] मङ्गलं शोभनं तथा ॥९०॥
[15] आचार्यसर्वकं दत्त्वा सर्वमन्त्रं तु दापयेत् ।
सर्वज्ञानमिदं प्रोक्तं [16] सर्वतन्त्रं तु दापयेत् ॥९१॥

---

त्रिहस्तैर्वा यथालाभं तेषां दण्डस्य दैर्घ्यकम् ।
तालच्छत्रं तु कर्तव्यं तत्प्रमाणं तु बुद्धिमान् ॥
छत्रं पिञ्छं तथा प्रोक्तम्'
(**सुप्रभेदे** क्रियापादे २२.१५६–१६२ पू०)

[1] ०पिच्छैव — आ.

[2] दर्पणादर्शनं — अ; दर्पणं दर्शनं — आ, इ;

दर्पणम् — 'दर्पणस्य विधिं शृणु ।
स्मृत्यङ्गुलं तु विस्तारं पूर्णचन्द्राकृतिर्यथा ॥
नालं वस्वङ्गुलं ज्ञेयं पादं वेदाङ्गुलं भवेत् ।
नानापट्टिकया युक्तं शुद्धकांस्येन कारयेत् ॥
विस्तारमुदितं पूर्वमेषामर्धेन वर्तयेत् ।
तन्नाहं चैव सर्वेषां नाहमित्यभिधीयते ॥'
(**पूर्वकारणे** १८.२९६–२९८);

[3] 'वन्दनं कारयित्वाथ नीत्वा पुरहरान्तिकम् ।
(**किरणे** क्रियापादे १५.१०उ०)

[4] शेषे शिष्या यथाविधि — अ, आ, इ; अधिकारसमर्पणे शिष्ट इत्यनेन निरपेक्षो शिष्यो नमस्कार्यत्वेन विवक्षित इति भाति ।
" 'निरधिकारसमर्पणे शिष्यमभिवाद्य,
अद्यप्रभृति संक्रान्तो योऽधिकारो मया त्वयि ।
स कर्तव्यस्त्वया तावद्यावत्संक्रमितोऽन्यतः ॥
इति संश्रावयेत् सोऽपि तथेति शिरसा आज्ञां गृह्णीयात् । सापेक्षसमर्पणे तु नमस्कारो न विधेयः ।' 'अथ अधिकारसमर्पणं निरपेक्षसापेक्षभेदेन द्विधा विभिद्य तत्र करणीयमाह' " ।
(**क्रियाक्रमद्योतिका**, प्रभाव्याख्या च. पृ० ३७७);

[5] स्वर्णपुष्पम् — **रौरवे** क्रियापादे ४३.१३, १४ श्लोकौ तदीयटिप्पणी च द्रष्टव्याः ।

[6] स्तोत्रं वाचन० — अ.

[7] मातापित्रो गुरो — अ; मात्रापित्रा गुरो० — आ; मात्रा पित्रो — इ.

[8] ज्येष्ठादि लिङ्गमेव च — अ, आ, इ.

[9] ०पर्कर — आ, इ.

[10] पित्रकम् — अ, आ, इ; अत्र 'उपस्पृश्य' इति शेषः ।

[11] ०पुष्पेण — अ, आ, इ.

[12] ०पश्चिमं चैव लेपये० — अ, आ, इ.

[13] कनिष्ठो पादमूर्ध्वतः — अ, आ, इ.

[14] ०वाचेन — अ, आ इ.

[15] आचार्यं सर्वदत्तं च — अ, आ, इ.

[16] सर्वमन्त्रं — अ, आ, इ.

**सहज [1]सर्वपूज्यं तु सृष्टिस्थितिसमं भवेत्।**
**[2]कर्षणादि प्रतिष्ठान्तं प्रतिष्ठाद्युत्सवान्तकम् ॥९२॥**
**उत्सवादि तु[3] शान्त्यन्तं[4] [5]कर्तव्यं तु निवेदयेत्।**
**[6]पवित्रं [7]स्रुक्स्रुवं चैव [8]पद्मासनं तु दापयेत् ॥९३॥**
**[9]अक्षमालां च [10]दण्डं च कमण्डलुं च धारयेत्।**

---

[1] पूर्वपूज्यं — अ, इ.

[2] '९२ उ०; ९३ पू०' एतदर्धद्वयं **दीक्षादर्शे** 'रौरवे' इति निर्दिश्योद्धृतम्।

[3] उत्सवादीनि — अ, इ; मत्सवादीनि — आ.

[4] शान्त्यर्थ — आ; शान्त्यर्थं — इ.

[5] सद्यजादि निवे० — अ, इ; सद्यवादी निवे० — आ; दीक्षादर्शोद्धृतपाठमनुसृत्यात्र 'कर्तव्यं तु' इति पाठः साधितः।

[6] पवित्रम् —

'पवित्राणां ततः शृणु।
कुशा दर्भाश्च गोवालाः पवित्रे कनकास्तथा ॥
सप्तपञ्चत्रियुक्तं वा ह्यग्रं तु द्व्यङ्गुलं भवेत्।
द्व्यङ्गुलं तस्य नालं तु ग्रन्थिरेकाङ्गुलं भवेत् ॥
दक्षिणावर्तग्रथितं पवित्रमिह शोभनम्।
अनाम्यङ्गुलिविस्तारं ताराष्टैकांशहीनकम् ॥
तप्तचामीकरेणैव पवित्रं कनकाख्यकम्।'
(**सुप्रभेदे** क्रियापादे २२.१४–१७ पू०);
एतद्विषये पुनः **मृगेन्द्रे** क्रियापादे ६. ५२ उ०, ५३ पू० वृत्तिश्च द्रष्टव्याः।

[7] स्रुक्स्रुवौ —

'स्रुक्स्रुवौ खदिरेणैव शम्या वैकङ्कतेन वा।
अथवा याज्ञिकैर्वृक्षैः कर्तव्यौ लक्षणान्वितौ ॥
संगृह्य मध्यसारं तु द्विधा कृत्वा तरुं पुनः।
तत्पार्श्वे बिलमाख्यातमवक्रं निर्व्रणं दृढम् ॥
द्वात्रिंशदङ्गुलायामं सप्ताङ्गुलसुविस्तृतम्।
तद्घनं तु चतुर्मात्रमेवं पादं च तत्र वै ॥
मध्ये सूत्रं प्रसार्यादौ मुखायामं षडङ्गुलम्।
अग्रभागं त्रिभागैकं मुखविस्तारमुच्यते ॥
यवत्रयप्रमाणेन पट्टिका मुखपार्श्वयोः।
यवमानेन निम्नं स्यान्मुखं सर्वमशेषकम् ॥
पक्षाङ्गुलं गलायामं विस्तारं तु शराङ्गुलम्।
सप्ताङ्गुलायता वेदी विस्तारं तत्सम भवेत् ॥
बिलं सुवृत्तं मध्ये तु चाङ्गुलद्वयमानतः।
तद्विस्तारसमं गर्तं सुवृत्तं बिलमुच्यते ॥
पट्टिका बिलबाह्ये तु यवमानघनान्वितम्।
तद्बाह्येऽष्टदलं पद्मं यवनिम्नं विचित्रितम् ॥
वेदिकायास्तु परितः पट्टिका त्रियवा घना।
बिलादूर्ध्वमुखात्खात्वा कनिष्ठाङ्गुलमानतः।
तारेण वाथ ताम्रेण नालं कृत्वा तु योजयेत्।
पक्षाङ्गुलप्रमाणेन पद्माकारं तु गण्डिका ॥
गण्डिकैकाङ्गुला वृत्ता तन्नाहं चाब्धिमात्रकम्।
रव्यङ्गुलं तु दण्डोच्चं तस्यार्धं नाहमुच्यते ॥
तन्मूले कलशाकारमङ्गुलद्वयमानतः।
धर्माङ्गुलं तु नाहं स्यात्तस्याधस्ताच्च पादयुक्।
वेदिकायास्त्वधः पद्मं पृष्ठाकारं सकर्णिकम् ॥
गजोष्ठपृष्ठसदृशमास्यं पृष्ठाकृतिर्भवेत् ॥
एवं संग्राह्य तच्छेषं परित्यज्य दृढं यथा।
एवं स्रुग्लक्षणं प्रोक्तं स्रुवलक्षणमुच्यते ॥
द्वाविंशदङ्गुलायामं दण्डनाहं रसाङ्गुलम्।
मूलाद्ग्रीवान्तरं यावत्त्र्यङ्गुल ग्रीवनाहकम् ॥
मूलवच्चाग्रनाहं स्याद्द्विबिलं नासिकाकृतिः।
पूरितं कर्षकार्धेन बिलमानं प्रकीर्तितम् ॥
पुष्कराधः प्रकर्तव्या गण्डिका द्वियवोन्नता।'
(**पूर्वकारणे** १८, २८–४४ पू०);
एतद्विषयं पुनः **अजिते** २१.१२५–१३२ श्लोकाः, **मृगेन्द्रे** क्रियापादे ६.३५–४१ पू० तदीयवृत्तिः, **मतङ्गपारमेश्वरे** क्रियापादे ४.६८–७८ श्लोकाश्च द्रष्टव्याः;

[8] पद्मासनम् —

'ततः पद्मासनं शृणु।
ऊर्ध्वाधोदलसंयुक्तं वृत्तमब्जासनं स्मृतम् ॥
(**सुप्रभेदे** क्रियापादे २२.१२४)

[9] अक्षमाला —

'जपमाला शिरोमाला हृन्माला बाहुमालिका।

[1]कुलिशं [2]चामरं [3]छत्रं [4]दर्पणं [5]पुस्तकं तथा ॥९४॥
[6]गुणत्रयं [7]धारयेत्तु [8]कूर्मासनं तु दापयेत् ।

---

कर्णपृष्ठात्तु नाभ्यन्ता उरोमाला इति स्मृता ।
शिरोमाला तु तन्नाहा भुजमाला भुजासमा ।
जपमालां समानेन संख्यामात्रं शृणुष्व हि ॥
पञ्चविंशतिरुद्राक्षैर्मोक्षार्थिनां जपं स्मृतम् ।
षड्विंशतिः शिवार्थं च ज्ञानार्थं शत्रुनाशने ॥
सप्तविंशतिरित्युक्तं पुष्टयर्थमष्टविंशतिः ।
त्रिंशज्जयार्थिनां कार्या दशपञ्चाभिचारके ॥
जपमाला समाख्याता'
(**सुप्रभेदे** योगपादे ३.१० उ०–१४);
एतद्विषये पुनः **मतङ्गपारमेश्वरे** क्रियापादे ११.
८–१२ श्लोकास्तदीयटिप्पण्यश्च द्रष्टव्याः ।

[10] दण्डकमण्डलम् — इ;
दण्डकमण्डलू —
'वेणुदण्डविधिं शृणु ।
विप्राणां तु शिरोत्सेधं क्षत्रियाणां ललाटकम् ॥
वैश्यानां नासिकोत्सेधं शूद्रादीनां तु वर्जयेत् ।
वेणुदण्डमृजु स्निग्धं वक्रकोटरवर्जितम् ।
दण्डस्यैवं विधिः प्रोक्तः कमण्डलुविधिं शृणु ।
पूरितं चाढकं श्रेष्ठं मध्यं त्रिप्रस्थपूरितम् ॥
द्विप्रस्थपूर्णमधमं मानमेवं कमण्डलोः ।
सौवर्णं राजतं वापि ताम्रं वा मृण्मयं तु वा ॥
यदुक्तं शिल्पशास्त्रेषु तत्तदुक्तं तु कारयेत् ।'
(**सुप्रभेदे** योगपादे ३.४८ उ०–५२);
एतद्विषये पुनः **मतङ्गपारमेश्वरे** चर्यापादे २.
३५; ८.४उ०–७पू० श्लोका द्रष्टव्याः ।

[1] कुळिरं – इ;
कुलिशम् —
'तालमात्रसमायामं विस्तारोऽष्टाङ्गुलं मतम् ।
तन्मध्ये गण्डिकां कुर्याच्चतुरङ्गलमानतः ॥
शेषैरष्टाङ्गुलैरेव अधश्चोर्ध्वं त्रिशूलवत् ।
पार्श्वपत्रद्वयं चक्रं मध्यमत्र ऋजु स्थितम् ॥
एवं वज्रं समाख्यातम्'
(**सुप्रभेदे** क्रियापादे २२.१७५–१७७पू०)

[2] चामरम् —
'चामरस्य विधिं शृणु ।
दर्भेण दारुजेनैव शुल्बेन रजतेन वा ॥
सौवर्णेनैव रत्नेन दण्डं कुर्याद्विचक्षणः ।
चतुर्विंशाङ्गुलायामं दण्डनाहं शराङ्गुलम् ॥
नानागण्डिकया युक्तं नानाकुम्भलतान्वितम् ।
नानाकर्णसमायुक्तं नानामण्डलसंयुतम् ॥
संयुक्तं चमरीवालैर्यथाशोभं तु कारयेत् ।'
(**पूर्वकारणे** १८.२३५ उ०–२३८)

[3] छत्रम् —
'छत्रलक्षणमुच्यते ॥
चतुर्मुखप्रविस्तारं समवृत्तमधोमुखम् ॥
आधारं वैणवेनैव तन्तुना बन्धयेत्क्रमात् ।
वस्त्रेण वेष्टयेत्सर्वं मुक्तादामैश्च रत्नकैः ॥
मकुटं हेमपट्टैश्च भूषयेद्भूषणार्हकैः ।
वस्त्रेण मध्यमं कुर्यात्तालपत्रैश्च कन्यसम् ॥
बाणाग्निरसतालैर्वा नालायामं प्रकीर्तितम् ।
(**पूर्वकारणे** १८.२२९ उ०–२३२);
एतद्विषये पुनः ५७ पू० टिप्पणीं पश्यत ।

[4] दर्पणम् —
८५ श्लोकस्य टिप्पणीं पश्यत ।

[5] पुस्तकम् —
'पुस्तकस्य प्रमाणं च शृणुष्व कमलासन ।
चतुर्दशाङ्गुलं वापि पञ्चदशाङ्गुलं तु वा ।
षोडशाङ्गुलमेवं वा सप्तदशाङ्गुलं तु वा ।
अष्टादशाङ्गुलं वापि नवदशाङ्गुलं तु वा ।
अथवा विंशतिर्वापि एकविंशतिरेव वा ।
द्वाविंशतिर्वा विप्रेन्द्र कारयेद्देशिकोत्तमः ।
एवं तु पुस्तकं चैव मानाङ्गुलेन कारयेत् ।
उत्सेधं चाष्टधा कृत्वा एकांशं चैव विस्तरम् ।
विस्तारार्धं घनं प्रोक्तं पार्श्वकम्पद्वये न्यसेत् ।
त्रिभागं तु चतुर्भागं मध्ये सुषिरमुच्यते ।
एवं पुस्तकमानं तु'
(**वीरे** २.२४–२९ पू०);
एतद्विषये पुनः '८४ पू०' टिप्पणीं पश्यत ।

[6] गुणत्रयम्–यज्ञोपवीतम् '६९' श्लोकस्य टिप्पणीं पश्यत ।

[1]रङ्गे वा [2]शिबिकायां वा [3]अश्वे गजे [4]नरेषु वा ॥९५॥
ग्रामप्रदक्षिणं चैव गृहप्रवेशमेव हि ।

[5][पूर्णाहुतिः प्रायश्चित्तहोमश्च]

पूर्णाहुतिं तथारभ्य प्रायश्चित्तं तु होमयेत् ॥९६॥

---

[7] च धारेण — अ, आ, इ.

[8] कूर्मासनम् —

'कूर्मासनविधिं शृणु ।
रुद्राङ्गुलं तु विस्तारं तदूर्ध्वं नैव वर्धयेत् ॥
श्रुत्यङ्गुलं घनं प्रोक्तं मुष्टिर्भूताङ्गुलं भवेत् ।
सप्ताङ्गुलेन तन्नाहं मानाङ्गुलेन कारयेत् ॥
कच्छपासनमेवं स्यात्' ।
(**पूर्वकारणे** १८.८६ उ०–८८);

'आसनं कूर्मवत्कृतम् ।
खादिरो देवदारुश्च मधुको बिल्व एव च ॥
अथवा याज्ञिकैर्वृक्षैः कृत्वा कूर्मासनं तथा ।'
(**सुप्रभेदे** योगपादे, ३.६, ७)

[1] रुगे वा — अ; ९५ उ०, ९६, ९७ पू० श्लोकाः **दीक्षादर्शे** 'रौरवे' इति निर्दिश्योद्धृताः ।;

रङ्गम् — 'रङ्गं चैव ततः शृणु ।
रथाधिष्ठानवत्कृत्वा ब्रह्माणं मुकुलं त्यजेत् ॥
रङ्गमण्टपवत्कृत्वा ह्यथ प्रासादवत्कृतम् ।
दारुणा द्वितलं कृत्वा तदूर्ध्वे तु तुरङ्गमाः ॥
चतुर्वापि गजा मध्ये वृषसिंहा द्रुमोऽथवा ।
तलोर्ध्वे यन्त्रिडोलां च अन्यदुक्तं तु कारयेत् ॥
एवं तु रङ्गमाख्यातम्'
(**सुप्रभेदे** क्रियापादे २२.१३१–१३४ पू०)

[2] शिबिकोयं वा — अ; शिबिको वापि – आ; शिबिके वापि – इ; शिबिका —

'सारदारुमयेनैव मानाङ्गुलेन कारयेत् ।
षट्त्रिंशदङ्गुलं तारं कन्यसस्य प्रकीर्तितम् ॥
मध्यमं चाष्टचत्वारि षष्ट्यङ्गुलमथोत्तमम् ।
विस्तारं द्विगुणायामं पादोनद्विगुणं तु वा ॥
ईलिकायास्तु विस्तारं श्रेष्ठस्याब्ध्यङ्गुलं भवेत् ।
अङ्गुलाङ्गुलहीनं तु मध्यमस्याधमस्य च ॥
तस्यार्धं तु घनं प्रोक्तमीलिकायाः प्रजापते ।
ईलितारं त्रिधा कृत्वा मध्यभागेन पट्टिका ॥
भागेनैकेन तद्बाह्ये कारयेत्तु कपोतकम् ।
आयाममष्टधा कृत्वा भागेन भित्तिपादकम् ॥
कुम्भं च वलयं चैव वृत्तकं चारुहीनकम् ।
ईलिकामध्ययोर्मध्ये चतुरश्रीकृतं तथा ॥
एकैकांशेन चोर्ध्वाधः पट्टिकाद्वयमेव हि ।
मध्यमे तु विभागेन फलका च क्रमेण तु ॥
ईलिकैर्जालिकैश्चैव फलकैर्गलकैरपि ।
नानावल्लीसमायुक्तां नानाक्रीडासमायुताम् ॥
तत्पूर्वभित्तेरुत्सेधमष्टाङ्गुलमिति स्मृतम् ।
सिंहद्वयसमायुक्तं तदूर्ध्वे मकरास्यकम् ॥
एलिकासदृशं पादं तत्र सप्ताङ्गुलोन्नतम् ।
अयःपट्टैश्च नाराचैर्दृढं कुर्याद्विशेषतः ॥
वेणिकावेष्टनं वापि फलकाबन्धनं कुरु ।
शिबिकालक्षणं प्रोक्तम्' ।
(**पूर्वकारणे** १८.१०३–११३)

[3] अश्वं — अ, आ, इ.

[4] ०नरोऽपि वा — आ, इ.

[5] 'नदर्थं विधिनानेन प्रायश्चित्तं समाचरेत् ।
शिवासनाङ्गमन्त्रैश्च पूज्य देवस्य नामभिः ॥
अङ्गैर्दशाहुतीर्हुत्वा शिवेनान्ते दशाहुतीः ।
तेनैव पूर्णां दत्त्वान्ते भगवन्तं क्षमापयेत् ॥'
(**उत्तरकामिके** २४.५०, ५१);

'ततः पूर्णाहुतिं दद्यात्कृतहोमस्य देशिकः ।
शिवादिभिः करस्याग्रमुल्मुकाग्रेण संस्पृशेत् ।
खड्गवन्मन्त्रसंदीप्त्यै पाशच्छेदादिहेतुतः ।'
(**मृगेन्द्रे** क्रियापादे ८.२१३, २१४ पू०);

'ततोऽग्नौ तर्पयेत्सम्यङ्मन्त्रग्राममनिन्दितम् ।
सुसुगन्धेन हविषा यथाशक्त्या समाहितः ॥'
(**मतङ्गपारमेश्वरे** क्रियापादे १०.३०)

अग्निप्रदक्षिणं कृत्वा आचार्यं [1]तं विसर्जयेत् ।
[2]पूर्ववत्कृत एवोक्त[3]माचार्यत्वेन गण्यते ॥९७॥
[4]संवत्सरान्ते चैवोक्तमाचार्यं तु प्रवेशयेत् ।
[5]नित्यार्चने तु देवानां नित्यहोमे[6] तथैव च ॥
[7]समयविशेषनिर्वाणेष्वभिषेके[8] यथाक्रमम् ॥९८॥

इति श्रीमद्रौरवतन्त्रे क्रियापादे
आचार्याभिषेकविधिर्ना[9]माष्ट[10]चत्वारिंशः पटलः ।

[1] तं च वर्जयेत् — अ; तु वर्जयेत् — आ; तु विवर्जिताः — इ.
[2] पूर्ववत्तत्रमेवोक्त० — अ, आ, इ.
[3] ०माचार्यं तु निगण्यके — अ, इ; ०माचार्यं तु निगण्यते — आ.
[4] संवत्सरान्तमेवोक्त० — अ, आ, इ.
[5] नित्यार्चनं तु — अ, आ, इ.
[6] ०होमं — अ, आ, इ.
[7] समयं — अ, आ, इ.
[8] निर्वाणमभिषेकं — अ, आ; इ.
[9] 'आ, इ' मातृकयोः 'नाम' इति न दृश्यते ।
[10] सप्तचत्वारिंशत्पटलः — अ, आ, इ.

# एकोनपञ्चाशः पटलः

## ग्रामदेवोत्सवविधिः

अतः परं प्रवक्ष्यामि ग्रामदेवोत्सवक्रमम् ।

[1][ग्रामदेवताः, तासां स्थानानि च]

**विघ्न[2]राजो गुहो विष्णुर्दुर्गा शास्तेति [3]पञ्चकम् ॥१॥**
**पञ्च[4]गोचरमूर्त्यादि शिववद्ग्रामदैवतम्[5] ।**

---

[1] ग्रामादौ देवतास्थानं वक्ष्ये सर्वं सनातनम् ।
ब्रह्मस्थानस्य वायव्यां विष्णुस्थानं प्रकीर्तितम् ॥
वारुण्यां वास्तुनो ब्रह्मा सूत्रस्योत्तरदेशके ।
ग्राममध्ये तदीशान्यामष्टदिक्षु शिवो मतः ॥
हरिहरयुतं वास्तु केवलेन हरेण वा ।
अन्यत्सर्वं यथेष्टं स्यात्तेषां स्थानमिहोच्यते ॥
वारुण्यामिन्द्रकाष्ठायामिन्द्रेशानान्तरेऽथवा ।
रविस्थानं भवेत्तत्र स्थानं वापि शचीपतेः ॥
वायव्यामिन्द्रकाष्ठायां याम्यकाग्नेयनैर्ऋते ।
सुग्रीवे वारुणे वापि षण्मुखस्थानमीरितम् ॥
वारुण्यां नैर्ऋताविन्द्रे शास्तुः स्थानं प्रकीर्तितम् ।
वारुण्यां वाथ नैर्ऋत्यां वायुसोमान्तरेऽथवा ॥
अन्यत्र च गणेशस्य स्थानमुक्तमिहागमे ।
यमे वा नैर्ऋते भागे वायव्यामिन्द्रमध्यमे ॥
नैर्ऋत्यन्तकयोर्वापि दुर्गास्थानं प्रकीर्तितम् ।
वारुण्यां श्रीसरस्वत्योः स्थानमुक्तं शिवाश्रिताः ॥
ऐशान्यां सोमभागे वा तयोर्मध्ये तु मातरः ।
आग्नेय्यां मोटिकास्थानं कामदेवस्य तत्र वै ॥
ज्येष्ठा पुष्करणीतीरे स्थाप्यान्यत्र बहिस्तु वा ।
कामभास्करयोर्वास्तु षण्मुखस्थानमुच्यते ॥
षण्मुखस्य तु मातॄणां स्थानमन्यद्यथेप्सितम् ।
सहस्रादधिके विप्रे मध्ये विष्णुगृहं तु वा ॥'
'ग्राममध्ये हरेः स्थानमुत्तमं परिकीर्तितम् ।
पश्चिमे मध्यमं विद्यादधमं चान्यदेशके ॥'
(**पूर्वकामिके** २६.१–११; २१);
विघ्नराजस्थानविषये **अजिते** ४९.१५, १६ श्लोकौ तदीया टिप्पणी; **रौरवोत्तरे** ९.१उ० तदीया टिप्पणी च द्रष्टव्याः ।
गुहस्थानविषये **अजिते** ५०.१४ श्लोकस्तदीयटिप्पणी च द्रष्टव्यौ ।
विष्णुस्थानविषये **रौरवे** क्रियापादे ३६.१–३ पू० श्लोकास्तदीयटिप्पणी; **रौरवोत्तरे** १३.१ उ० तदीयटिप्पणी च द्रष्टव्याः ।
दुर्गास्थानविषये **अजिते** ५३.१६–१८ पू० श्लोकास्तदीयटिप्पणी; **रौरवोत्तरे** १३.१उ०, २ पू० श्लोकस्तदीयटिप्पणी च द्रष्टव्याः ।;
'शास्तुश्च लक्षणं प्रोक्तं स्थापनं शृणु तत्त्वतः ।
प्रासादे नैर्ऋते भागे ग्रामादीनां च नैर्ऋते ॥
अष्टदिक्षु च पूर्वादि तद्ग्रामस्य पराङ्मुखम्' ।
प्रासादं कारयेद्धीमान्गजपृष्ठं विशेषतः ॥
अथवा मण्डलं[पं]वापि कर्तव्यम्'
(**सुप्रभेदे** क्रियापादे ५३.९–११ पू०);
'प्रासादे नैर्ऋते भागे ग्रामादीनां च नैर्ऋते ।
अष्टदिक्षु च पूर्वादि तद्ग्रामस्य पराङ्मुखम् ।
प्रासादं कारयेद्धीमान्'
(**पद्मसंहिता** टि.३४० पृ० १, २)

[2] ०राजं गुहं विष्वं दुर्गा — आ, इ.

[3] पञ्चसु — अ, आ, इ.

[4] ०गोपुर — आ, इ.

[5] ०देवताः — अ, आ, इ.

एकग्रामे भवेत्तस्मात्[१]स्थाने स्थाने विशेषतः ॥२॥

[दुर्गाविष्णवोर्हर्म्यम्]

शिवहर्म्याग्रके हर्म्यं [२]दुर्गायै विष्णवे च वै[३]।
[४]द्वारं शिवाग्रके [५]युक्तमन्तर्मण्डलमध्यके[६] ॥३॥
[७]तयोर्हर्म्यकयोर्मध्ये महामण्टपमाचरेत्।
[८]द्वारमेकं हि धाम्नो वा [९]द्वयं वा याम्यसौम्ययोः ॥४॥

[ध्वजस्थानं महोत्सवस्थानं च]

स्वस्वाग्रे [१०]च ध्वजस्थानं [११]कलकेतुकभासुरम्।
वास्तुमङ्गलवीथ्यां च[१२][१३]तयोर्यानं महोत्सवे[१४]॥५॥
कृत्वा पीठं विशेषेण बाह्याभ्यन्तरयोस्तयोः।

[पञ्चगोचरमूर्तीनां धाम]

शिवस्थानस्य बाह्येषु पञ्चगोचरधाम तत् ॥६॥
भवेत्तत्स्थानं सर्वेषां [१५]बाह्यभित्त्येकमाचरेत्।

[नित्योत्सवः]

स्वस्वहर्म्येषु बाह्येषु स्वस्वनित्योत्सवं चरेत् ॥७॥

---

[१] स्थानात्स्थान — अ, आ, इ.
[२] दुर्गा गां विष्णुमेव वा — अ, आ, इ.
[३] अत्र 'कल्पयेत्' इत्यध्याहृत्य व्याख्येयम्।
[४] यथा द्वारं शिवाग्रके युक्तं संबद्धं भवेत् तथा कर्तव्यमिति व्याख्येयम्। अत्र 'शिवाग्रद्वारसंयुक्तम्' इति पाठश्चेत्सुष्ठु।
[५] युक्ते अन्तर्मण्डलमध्ययोः — अ, आ, इ.
[६] अत्र 'कल्पितयोः' इति पदमध्याहृत्यान्वयः कार्यः।
[७] तयोर्मध्ये तयोर्मध्ये — अ, आ; तयोर्हर्म्यतयोर्मध्ये — इ.
[८] द्वारमेकस्य धामे वा — अ, आ, इ.
[९] द्वयै वा — आ; द्वयो वा — इ.
[१०] वा ध्वजस्थाने — अ, आ, इ.
[११] कलकेयूरभासुरे — अ; कलकेयूरभाररे — आ, कलकेयूरभारके — इ; कलो वृक्षविशेषो मत्स्यविशेषो वा। 'कलः सालवृक्षः इति राजनिघण्टुः'; 'शकुलमत्स्यः' इति हेमचन्द्रः' इति **शब्दकल्पद्रुमे** कलशब्दविवरणे।
[१२] ०वीथ्येव — अ, आ, इ;
'राजवीथीति विख्याता ग्रामादेर्बहिरावृता।
सैव मङ्गलवीथीति रथवीथीति चोच्यते॥'
(**पूर्वकामिके** २५.२)
[१३] तयोः दुर्गाविष्णवोः।
[१४] तयोर्ध्यानं महोत्सवम् — अ; तयोर्यानमहोत्सवम् — आ, इ.
[१५] बाह्ये भित्त्येक० — आ, इ; बाह्ये भित्तिरेका यस्मिन् इति व्यधिकरणबहुव्रीहिः।

[1] लङ्घयेत्स्थानयुग्मं वा त्रयं वापि चतुर्थकम् ।
[2] आहरेच्च बलिं बाह्ये तत्तद्देवबलिं क्षिपेत् ॥८॥

[महोत्सवस्थानम्]

वास्तुमङ्गल[3]वीथ्यां तु सर्वेषां वा महोत्सवम्[4] ।
[5] तद्बाह्ये केशवस्यापि तद्बाह्ये [6] दौर्गकं तथा ॥९॥
तद्बाह्ये विघ्नराजस्य तद्बाह्ये स्कन्दपीठकम्[7] ।
पञ्चगोचरमूर्तीनां [8] स्थानं तु बाह्यदेशके ॥१०॥
महामङ्गल[9] वीथ्यां च भवेत्तद्वास्तुवीथिका[10] ।
तस्माच्च सर्वदेवानां[11] [12] तस्यां चोत्सवमाचरेत् ॥११॥

[अन्यग्रामदेवानां स्वग्रामे महोत्सवकरणे दोषः]

अन्य[13] ग्रामस्थदेवानां [14] स्वग्रामे [15] चोत्सवं भवेत्[16] ।
तत्काले [17] चान्यकाले च [18] देवबुद्धिर्भवेत्तयोः[19] ॥१२॥
[20] तद्ग्रामयोर्भवेन्नाशः[21] स्थान[22] नाशो धनक्षयः ।
एकग्रामे [23] द्वयो राजा अर्धग्रामपतिर्भवेत् ॥१३॥
[24] ग्रामदेवद्वये चैव [25] ग्रामाणां तु [26] पतिर्भवेत् ।

---

[1] लङ्घने स्थान० — अ, आ, इ.
[2] आहारं च — अ, इ; अर्हारं च — आ.
[3] ०वीथ्येके — अ; वीथ्यां च — आ, इ.
[4] कुर्यादिति शेषः ।
[5] तद्बाह्ये च शिवस्यापि — अ; तद्बाह्ये च शिवस्या च — आ, इ.
[6] दुर्गायास्तथा — अ; दुर्गयान्तथा — आ, इ.
[7] अत्र शास्तृपीठप्रस्तावो भवितव्य इति भाति ।
[8] स्थानानां बाह्य० — अ, आ, इ.
[9] ०वीथ्या च — अ.
[10] ०वीथिके — आ, इ.
[11] तत्सर्व देवतानां च — अ, आ; तत्र सर्वदेवतानां — इ.
[12] तस्मिन् — अ, आ, इ.
[13] ०ग्रामस्य — अ, आ, इ.
[14] तद्ग्रामे — अ, आ, इ.
[15] वोत्सवं — अ, आ.
[16] अत्र 'यदि' इति पदमध्याहृत्य व्याख्येयम्.
[17] चान्त्यकाले — अ, आ, इ.
[18] स्वग्रामदेवबुद्धिरित्यर्थः ।
[19] तयोः स्वग्रामान्यग्रामदेवयोः ।; ०बुद्धं भवेत्तयोः — आ, इ.
[20] तत् — तस्मात्कारणात् इत्यर्थः ।, ग्रामयोः - स्वग्रामान्यग्रामयोः; तयो ग्रामे — अ, आ, इ.
[21] नाशं — अ, आ, इ.
[22] ०नाशं धनक्षयम् — अ, आ, इ.
[23] द्वयोः - स्वग्रामान्यग्रामदेवयोः इत्यर्थः । अत्र 'उत्सवे सति' इत्यध्याहृत्य व्याख्येयम् ।
[24] स्वग्रामदेवद्वये इत्यर्थः । अत्रापि 'उत्सवे सति' इत्यध्याहृत्य व्याख्येयम् ।; ग्रामदेवो द्वयोश्चैवा — अ, आ, इ.
[25] ग्रामा सन्तु — आ.
[26] प्रति प्रति — अ, आ, इ.

[1]सर्वैरन्यैः समायुक्तमतस्तत्र महीपतिः ॥१४॥
एकवीथ्यां [2]न वीथ्यां वा सर्वेषां चोत्सवं चरेत्।
[3]न कर्तव्यो ममाप्यस्यां समाश्रित्य सदैवतम्[4] ॥१५॥
प्रियावहं ग्रामदेवे[5] [6]चरेदुत्सवमुत्तमम्।
तस्मात् [7]प्राकार एके [8]वा स्वस्वप्रकारकेऽपि वा ॥१६॥

इति श्रीमद्रौरवतन्त्रे[9] क्रियापादे ग्रामदेवोत्सवविधि[10]र्नाम
[11]एकोनपञ्चाशः पटलः।

---

[1] सर्वमन्यत्समायुक्तमेतत्त्र — अ, आ, इ.
[2] तु वीथ्येव — अ, इ; न वीथ्ये वा — आ.
[3] नृपं कर्तुममाप्यस्य — अ, इ; नृप कर्तुं ममोप्य स्वा — आ.
[4] सदेवतः — अ, आ, इ; अन्यदेवताभिः सहितम् इत्यर्थः।
[5] ०देवां — अ, आ, इ.
[6] चरेवोत्सव० — आ.
[7] प्राकारमेके — अ, आ, इ.
[8] च — इ.
[9] 'इ' मातृकायां 'तन्त्रे' इत्यस्यानन्तरं 'महोत्सवतन्त्रे' इत्यधिकं दृश्यते।
[10] 'इ' मातृकायां 'नाम' इति न दृश्यते।
[11] अष्टचत्वारिंशत्पटलः — अ, आ, इ.

## पञ्चाशः पटलः

### [1] नवरात्रपूजाविधिः

**अथातः संप्रवक्ष्यामि [2]नवरात्रप्रपूजनम् ।**

[3][नवरात्रपूजाकालः]

**आर्द्रायां मासि कन्यायां[4] कृष्णपक्षे तु पूजयेत् ॥१॥**

[5][नवरात्रपूजनम्]

**[6]आरभ्य प्रथमायास्तु नवरात्रं[7] प्रपूजयेत् ।**
**तद्दिने यजमानस्य[8] उपवासं तु कारयेत् ॥२॥**
**रक्षाबन्धनकं कर्म[9] [10]देशिकः कारयेद्बुधः[11] ।**

---

[1] अयं पटलः (टि. ३४८) ३६९–३७२ पृष्ठेषु दृश्यते । ; एतद्विषये **उत्तरकामिके** ७७ ; **पूर्वकारणे** १२७ पटलौ द्रष्टव्यौ ।

[2] नवरात्रि प्रपूजयेत् — ई.

[3] 'कन्यां गते सवितरि शुक्लपक्षेऽष्टमीयुता ।
मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ॥
आश्वयुक्शुक्लपक्षे वा अष्टमी मूलसंयुता ।
सा महानवमी नाम्ना त्रैलोक्येऽतिसुदुर्लभा ॥
अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम् ।
पूजयित्वाश्वयुङ्मासि विशोको जयति द्विषः ॥'
(**उत्तरकामिके** ७७.२–४) ;
'अथातः संप्रवक्ष्यामि नवरात्रिविधिक्रमम् ।
आश्वयुक्शुक्लपक्षे तु प्रतिपन्नवम्यन्तके ॥
प्रतिपद्दिनमारभ्य व्रतोत्सवमथाचरेत् ।'
(**पूर्वकारणे** १२७.१, २ पू०) ;
'कृत्यतत्त्वार्णवे लैङ्गे —
कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभेऽपि वा ।
नवम्यां बोधयेद्देवीं महाविभवविस्तरैः ॥'
(**निर्णयसिन्धौ** पृ० १२६)

[4] आर्द्राया मासकर्म तु — ई.

[5] 'देव्यग्रे दक्षिणे वापि मण्टपे समलंकृते ।
ऐशान्ये चोत्तरे वापि लक्ष्मीं दुर्गां च भारतीम् ॥
गौरीमिमायमन्त्रेण बद्धा प्रतिसरं बुधः ।
नानाशक्त्यादिसंयुक्तं नानायुधादिसंयुतम् ॥
प्रथमादि नवम्यन्तं दिनं प्रति प्रपूजयेत् ।
तथा तद्दिनमारभ्य नानाशक्तिजपं बुधः ॥
मूलदेव्यग्रके वापि अन्ये च मण्डपादिके ।
अलंकृत्य च देव्याश्च विनोदालोकनं नयेत् ॥
यथावित्तानुसारेण नवनैवेद्यमेव च ।
धूपदीपोपचारैश्च मन्त्रपुष्पाणि दापयेत् ॥
इष्टकाम्यार्थसिद्धयर्थं जनान्सर्वान्प्रदर्शयेत् ।
होमकार्यं द्विकालं च रात्र्यां चोत्सवमाचरेत् ।'
(**पूर्वकारणे** १२७.२ उ०–८ पू०)

[6] आरम्भं प्रथमायां तु — ई.

[7] नवरात्रि — ई.

[8] यजमानं तु — ई.

[9] ०बन्धनकर्म तु — ई.

[10] देशिकं — ई.

[11] ०येद्बुधा — ई.

दुर्गां च[1] मध्यमे स्थाप्य वामपार्श्वे सरस्वतीम्[2] ॥३॥
महालक्ष्मीं तु संस्थाप्य[3] दक्षिणे तु प्रपूजयेत्।
नवरात्रं[4] प्रपूज्याथ [5]पायसान्नं निवेदयेत् ॥४॥

[6][उत्सवः]

[7]यानं [8]चेदं समाख्यातं [9]दुर्गायास्तु प्रपूजन।
नवरात्रे[10] च यानं च[11] तद्दैवं दौर्गयानकम्[12] ॥५॥
आलयात्तु[13] समाश्रित्य यानं [14]वाद्यैः क्रमेण च।

[रक्षासूत्रबन्धनम्]

नदीतटाक[15]कूले च समुद्रे [16]पूर्वदेशके ॥६॥
देवस्याग्रे विशेषेण किंचिदैशान्यकोणके।
वह्निवृक्षसमासन्ने[17] रक्षासूत्रं तु कारयेत् ॥७॥

[मण्टपपूजा]

षोडशस्तम्भसंयुक्तं मण्डपं कारयेद्बुधः[18]।

---

[1] दुर्गायां — ई.
[2] सरस्वती — ई.
[3] संपूज्य — ई.
[4] ०रात्रि — ई.
[5] **रौरवोत्तरे** ९.३७ पू० टिप्पणी द्रष्टव्या।
[6] नवरात्र्युत्सवः —
'यागकर्मावसाने तु यानं सम्यक्समाचरेत्।
वीथीसंमार्जनं पूर्वं प्रोक्षणं च द्वितीयकम् ॥
पताकाद्यैस्तृतीयं तु यन्त्राद्यैश्च चतुर्थकम्।
उत्सवेशीमलंकृत्य वीरशक्तिं स्वतन्त्रिणीम्।
सर्वालंकारसंयुक्तं वाद्यघोषसमन्वितम्।
शनैः प्रदक्षिणं कृत्वा नानालीलासमन्वितम् ॥
सर्वत्रोज्ज्वलदीपाश्च नानाजातिसमाकुलम् ॥
यानान्ते परिवेषं च सुरबृन्दैश्च सेवितम् ॥'
घटदीपादि —
'शिवधामबहिस्थाने कुम्भादि दीपमावृतौ।
रुद्रकन्यासमायुक्तं त्रिःप्रदक्षिणमाचरेत् ॥
आलये तु प्रदक्षिण्यां धर्मप्रदक्षिणं कुरु।
कल्याणमण्टपे स्थित्वा नैवेद्यं दापयेद्गुरुः ॥
धूपदीपं च आरात्रिं ताम्बूलं गिरिजां कुरु।
वीणावेणुस्वनाद्यैश्च नृत्तगीतसमाकुलैः ॥
पिञ्छचामरसंयुक्तैर्व्यजनैस्तालवृन्तकैः।
अनेकैरुपचारैश्च तोषयेत्परमेश्वरीम् ॥
एवं क्रमेण कर्तव्यं नवम्यन्तं दिनं प्रति।'
**अघोरशिवाचार्यपद्धतौ** महानवमीपूजाविधौ ॥
(पृ० ७६, ७७)
[7] यानप्रतिपादकग्रन्थः पूर्वं न निर्दिष्टः।
[8] वेदसमा० — ई.
[9] दुर्गायां तु प्रपूजयेत् — ई.
[10] ०रात्री — ई.
[11] वा तद्दैवं — ई.
[12] दुर्गयानकम् — ई.
[13] आलयानां — ई.
[14] वा चक्रमेव च — ई.
[15] ०कुम्भे च — ई.
[16] पर्व० — ई.
[17] ०समासाने — ई.
[18] ०द्बुधा — ई.

चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ॥८॥
वास्तुहोमं [1]समाप्याथ पर्यग्निकरणं कुरु।
शान्तिहोमं समाकुर्यात्पूर्वोक्तं प्रोक्षयेद्बुधः ॥९॥
चतुर्द्वारं प्रपूज्याथ अर्चनं पूर्ववद्बुधः[2] ।
[3] मण्डपं समलंकृत्य नानापुष्पोपशोभितम् ॥१०॥
लिकुचैर्नालिकेरैश्च नागवल्लीदलैरपि।
[4] क्रमुकैः पूगपुष्पैश्च केतकीशतपत्रकैः ॥११॥

[5] [दशमदिनोत्सवः]

दशरात्रे[6] तु यानं वा; प्रातःकालमथाचरेत्।
उमासहितमूर्तीनां यानकर्म विशेषतः ॥१२॥
[7]नानावाद्यसमायुक्तं नानालीलासमन्वितम्।
नानाच्छत्रसमायुक्तं नानापिञ्छसमन्वितम् ॥१३॥
नानाभक्तसमायुक्तं नानाजात्यैस्तु[8] संयुतम्।
भूपतीनां विशेषेण गजवाहनमाचरेत्[9] ॥१४॥
देवानां शिबिकोर्ध्वे तु अथवा अश्ववाहनम्।
[10] देवेन सह देवीं तु [11]आसीनां वामभागके[12]॥१५॥

---

[1] समभ्यर्च्य — ई.
[2] ०द्बुधाः — ई.
[3] मण्डपानामलंकृत्य — ई.
[4] कमुखैः — ई.
[5] 'राजराष्ट्राभिवृद्धचर्थं दशम्यां पूजयेच्छमीम्।
तद्दिने च प्रभाते वा सायाह्ने वार्चयेच्छमीम् ॥
उत्तरे चैव पूर्वे वा शमीमण्टपसंस्थिते।
शमीधाम ह्यलंकृत्य चतुर्द्वारसमन्वितम् ॥
वितानैस्तोरणैर्भूष्य नानालंकारसंयुतम्।
इन्दुशेखरमूर्तिं च तुरगारूढयेद्बुधः ॥
नानालंकारसंयुक्तं नानाभक्तजनैः सह।
शमीस्थानं प्रविश्याथ पुण्याहं वाचयेत्ततः ॥
खड्गखेटौ च चापं च स्थापयेत्तु शमी सह।
शमीपूजाप्रकारेण आसनादीन्प्रपूजयेत् ॥
तत्पश्चाच्छमिमूले तु कालरात्रिं च काल्यकैः।
यमं च यमदूतैश्च ब्राह्म्याद्यैः सप्तमातृकैः ॥
महालक्ष्मीं समभ्यर्च्य शमीमूलेन पूजयेत्।
अस्त्रमन्त्रेण संपूज्य नैवेद्यं धूपदीपकैः ॥
शमी शत्रुविनाशाय शमी पापप्रणाशिनी।
शमी संपत्करी चैव शमी चैव नमो नमः ॥
शक्त्या दानादिकं दद्याद्ब्राह्मणे वेदपारगे।
ग्रामकर्तृनृपैश्चैव सोष्णीषः सुप्रसन्नवान् ॥
चतुर्दिक्षु चतुर्बाणान्नमयेच्चैव बुद्धिमान्।
शम्भोर्नीराजनं दद्यात्तथा दुष्टमृगं हरेत् ॥
ततो देवालयं गच्छेत्स पुण्यां गतिमाप्नुयात्।'
(पूर्वकारणे, १२७.१५ उ०–२५)
[6] दशरात्रि — ई.
[7] नानाविद्या० — ई.
[8] ०जाति तु — ई.
[9] ०मारभेत् — ई.
[10] देविकं हस्तदेवं तु — ई.
[11] आसीनं — ई.
[12] ०भागकम् — ई.

नानालंकारसंयुक्त[1]माचार्यः पञ्चभूषणः।
याने देवौ[2] समारोप्य [3]मण्टपे तु विशेषतः ॥१६॥
[4]वेदिकायां तु संस्थाप्य [5]देवदेव्यौ विशेषतः।
[6]नवकैरभिषिच्याथ [7]पायसं च निवेदयेत् ॥१७॥
[8]अन्नपञ्चकसंयुक्त[9]मपूपपञ्चविंशति।
[10]व्यञ्जनैः पञ्चविंशैश्च देवदेव्यौ[11] प्रपूजयेत् ॥१८॥
देवाग्रे तु विशेषेण नानावाद्यसमन्वितम्।
नानालीलासमायुक्तं भरतोक्तक्रमेण तु ॥१९॥

[यज्ञवृक्षपूजनम्]

[12]देवदेव्यौ तु संग्राह्य यज्ञवृक्षमथापि च।
पश्चिमे स्थानकं कृत्वा पूर्वद्वारे [13]समारभेत् ॥२०॥
[14]देशिको वाथ [15]शिष्यो वा यज्ञवृक्षं प्रपूजयेत्।
अभिषिच्य ततो मन्त्री यज्ञ[16]मन्त्रसमन्वितः ॥२१॥
गन्धपुष्पं समभ्यर्च्य अर्चनं तु विशेषतः।
अर्चनोक्तक्रमेणैव [17]दशायुधान्समर्चयेत् ॥२२॥
मूलमन्त्रं तु संयोज्य[18] नाममन्त्रं समाचरेत्।

[युद्धयात्रा]

[19]देशिकस्त्वथ दैवज्ञो ह्यायुधानि[20] तु संग्रहेत् ॥२३॥
वह्नि[21]वृक्षे तु युद्धं च[22] चतुर्द्वारे तु युद्धके[23]।

---

[1] ०माचर्य पञ्चभूषितम् — ई.
[2] यानदेवं — ई.
[3] मण्टपं तु — ई.
[4] देविकाले तु — ई.
[5] देवाग्रं — ई.
[6] नवकालेरभि — ई.
[7] **रौरवोत्तरे** ९.३७ पू० टिप्पणीं पश्यत।
[8] अन्नानं पञ्चसंयुक्तं — ई; 'अन्नपञ्चकम्' **अजिते** २२.१०४ उ०–११० पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।
[9] ०मपूपं पञ्च — ई.
[10] व्यञ्जनं — ई.
[11] देवदेवीं — ई.
[12] देवदेवीं — ई.
[13] तु मारभेत् — ई.
[14] देशिकं — ई.
[15] शिष्यं — ई.
[16] मन्त्रं समानताः — ई.
[17] दशायुधसमा बुधाः — ई.
[18] संयोज्याथ — ई.
[19] देशिकं त्वथ — ई.
[20] दैवज्ञमायुधानां — ई.
[21] ०वृक्षं — ई.
[22] वा — ई.
[23] ०द्वारं तु युद्धिकम् — ई.

[1]धनुःसूत्रं तु संग्राह्य देवहस्ते[2] तु योजयेत् ॥२४॥
आचार्यो[3] यज्ञवृक्षं [4]च देवदेव्यौ च संग्रहेत् ।
दिग्विदिक्षु च विन्यस्य चतु[5]र्द्वारे तु चास्त्रकम् ॥२५॥
नानाभक्तांस्तु[6] संग्राह्य भूपतींस्तु[7] विशेषतः ।
नानाजात्यांस्तु[8] संग्राह्य महापापं विसर्जयेत् ॥२६॥
[9]देवदेव्यौ समे याने आलयं तु प्रवेशयेत् ।
नानावाद्यसमायुक्तं गणिका नृत्तमाचरेत् ॥२७॥
[10] देवदेव्यौ तु [11]तत्स्थाने तिथ्यन्तं तु समर्चयेत् ।

[सरस्वतीपूजा]

सरस्वतीं प्रपूज्याथ धूप[12]दीपैर्विशेषतः ॥२८॥
नानायुधांस्तु[13] संग्राह्य धारयेत्तु विशेषतः ।
नानादोष[14]शमं कुर्यान्नानादोषो न विद्यते ॥२९॥
क्रियाः संपूर्णतः[15] कुर्यात् क्रियादोषो[16] न विद्यते ।
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ॥३०॥

इति रौरवाख्ये महातन्त्रे क्रियापादे नव[17]रात्रपूजाविधिः
पञ्चाशः पटलः ।

---

[1] धनुसूनां — ई.
[2] ०हस्तं — ई.
[3] आचार्य — ई.
[4] तु देवदेवीं तु संग्रहे — ई.
[5] ०द्वारं तु अस्त्रकम् — ई.
[6] ०भक्तं तु — ई.
[7] भूपतीनां — ई.
[8] नानाजाति — ई.
[9] देवदेवीं समायानं — ई.
[10] देवं देवीं तु — ई.
[11] तस्था तिथ्यन्ते तु समा बुधाः — ई.
[12] ०दीपं विशेषतः — ई.
[13] ०युधां तु — ई.
[14] ०समं कृत्वा नानादोषं — ई.
[15] क्रिया संपूज्य तत् — ई.
[16] ०दोषं — ई.
[17] ०रात्रिपूजा — ई.

# एकपञ्चाशः पटलः

## [1] क्षेत्रपालस्थापनविधिः

[2]अतः परं प्रवक्ष्यामि क्षेत्रपालविधिक्रमम्।

[रुरुरुवाच —]

क्षेत्रपालस्य[3] मन्त्रं च मुद्राः स्थापनमेव च ॥१॥
पूजनं चोत्सवं स्नानं [4]वदात्र भुवनेश्वर[5]।

ईश्वर उवाच —

[6][क्षेत्रपालमन्त्रः]

ळान्तं [7]तु क्षेत्रपालस्य[8] [9]बीजं षष्ठस्वरान्वितम् ॥२॥

---

[1] अयं पटलः आर्.इ. १९०२९.८९–९१ पत्रेषु; आर्. इ. २६३१३.१८४–१८६ पत्रेषु; आर्. इ.२९३९९.२६३–२६५ पत्रेषु; टि.१०२४. ३८१–३८६ पत्रेषु; टि. १३५.१–८ पत्रेषु च दृश्यते।; एतद्विषये **पूर्वकारणे** १०३; उत्त-रकारणे ७०; **दीप्ते** ७३; **मकुटे** (टि. १८) ७; **सुप्रभेदे** क्रियापादे ५०; **सूक्ष्मे** ९१ पटला द्रष्टव्याः।

[2] ततः — उ.

[3] पालं च — उ, ऊ, ऋ, ॠ

[4] वदस्व — उ; विधातृ — ऊ, ॠ.

[5] भुवनेश्वरम् – ॠ.

[6] 'क्षवर्णः क्षेत्रपालानामूर्ध्वबिन्दुविभूषितः।
क्षेत्रपालानां क्षवर्णः क्षकारः ऊर्ध्वबिन्दुभूषितः सानुस्वारः।
(**मृगेन्द्रे** क्रियापादे ८पू० तदीयवृत्तिश्च); क्षेत्रपालमन्त्रः —
ओं हां क्षं क्षौ क्षेत्रपालाय नमः।'
(**कालागमप्रायश्चित्ते** (टि. १४४) पृ० ३९९);
'ब्रह्माणि ह्रस्वाः प्रोक्तानि दीर्घा ह्यङ्गानि षण्मुख।
अनुस्वारो भवेन्नेत्रं सर्वेषां चोपरि स्थितः॥
सविसर्गं भवेदस्त्रमनुस्वारविवर्जितम्।'
(**सार्धत्रिशतिकालोत्तरे** १.९उ०, १०);
'अस्त्रं विसर्गसंयुक्तमन्ये बिन्दुसमायुताः।'
'दीर्घाणि ह्यङ्गमेवं स्यात्षडङ्गाश्चैव कीर्तिताः।
अस्त्रं विसर्गसंयुक्तं ह्रस्वा वै ब्रह्मपञ्चकम्॥'
(**सुप्रभेदे** क्रियापादे ३.२६उ०; १९३);
'हृदय च शिरश्चैव शिखा कवचमेव च।
नेत्रमस्त्रं षडङ्गानि कीर्तितानि क्रमेण तु॥
हृदादिनेत्रपर्यन्तं बिन्दुयुक्ताः प्रकीर्तिताः।
अस्त्रं विसर्गसंयुक्तं जातिषट्कसमन्वितम्॥
नमः स्वाहा वषड् वौषड् हुं फट्कारः क्रमेण तु।
एते वै जातिषट्काश्च हृदाद्यस्त्रान्तकैर्युताः।'
(**पूर्वकारणे** (टि. ३१३) २.२४उ०–२७पू०);
'दीर्घमङ्गचतुष्टयम्।
सविसर्गं भवेदस्त्रं नेत्रं बिन्दुयुतं भवेत्॥'
(**किरणे** क्रियापादे १३.८.)

[7] च — ऊ, ॠ, ॠ.

[8] ०पालं स्यात् — ऊ, ॠ, ॠ.

[9] बीजषष्ठ — ॠ, ॠ.

[1] त्रयोदशान्तसंयुक्तं बिन्दुनादसमन्वितम् ।
[2] मूलमन्त्रमिदं प्रोक्तं तस्मिन्नङ्गानि कल्पयेत् ॥३॥
पश्चाङ्गं ह्रस्वसंयुक्तं [3] दीर्घाङ्गानि प्रकल्पयेत् ।
नमःस्वाहावषड्वौषड्हुंफट्कारसमन्वितम् ॥४॥
बिन्दुनादसमायुक्तं[4] विसर्गान्तास्त्रविन्यसेत्[5] ।
सर्वेषां [6] च क्रमात्तत्र [7] अस्त्रे विसर्ग उच्यते ॥५॥
दिवाकरे तु पूर्वे तु [8] सर्वमन्त्रान्प्रयोजयेत् ।
[9] एवं मन्त्रं समाख्यातम्'

[10] [मुद्राः]

[11] मुद्रायामधुनोच्यते ॥६॥
पद्मं शूलं च मुकुलं निष्ठुरं शङ्खयोनिके[12]।
[13] मन्त्रान्ते मुद्रया [14] कार्यं विनियोगं प्रयोजयेत् ॥७॥

[15] [क्षेत्रपालरूपम्]

त्र्यक्षमष्टभुजं रौद्रमूर्ध्वकेशं सुदंष्ट्रकम् ।

---

[1] त्रयोदश च सं — ऊ, ऋ, ॠ.
[2] 'ऊ, ऋ, ॠ' कोशेषु '३' उत्तरार्धं '४' पूर्वार्धं च न स्तः ।
[3] दीपान्यङ्गं — उ.
[4] विन्दुयुग्मं भवेन्नेत्रं — उ.
[5] विसर्गान्तमसं न्यसेत् — ऊ, ऋ, ॠ.
[6] चैवानुस्वारमन्त्रं विसर्गमुच्यते — उ.
[7] अस्त्रं विसर्गमुच्यते — ऊ, ऋ, ॠ.
[8] सर्वमन्त्राः प्र० — उ; सर्वमन्त्रं प्र० — ऊ, ऋ, ॠ.
[9] महामन्त्रमिति स्यातं — ऊ, ऋ, ॠ.
[10] 'पद्मं शूलं च मुकुलं निष्ठुरं योनिशङ्खजम् [कम्] ।
मन्त्रान्ते मुद्राकार्यं वा विनियोगं प्रपूजयेत् ॥'
(**पूर्वकारणे** १०३.२७)
[11] मुद्रालक्षणमुच्यते — ऊ, ऋ, ॠ.
[12] शङ्खयोजयेत् — उ, ऊ, ऋ, ॠ.
[13] मन्त्रान्तं — उ.
[14] कार्यविनि० — उ.
[15] 'क्षेत्रपालाकृतिं शृणु ।
रक्त उग्रेक्षणः कालो मेघवर्णो महाबलः ॥
द्विबाहुर्वा चतुर्बाहुरष्टबाहुरथापि वा ।
कपालशूलो द्विभुजो घण्टापाशसमायुतः ॥
चतुर्बाहुः क्रमात्क्षेत्रपालो वामे च दक्षिणे ।
अग्निटङ्कौ च खट्वाङ्गाभयमष्टभुजे क्रमात् ॥
रक्तपद्मासनारूढः श्यामवर्णोग्ररूपकः ।
विसृतोर्ध्वारक्तकेशः कुञ्चितभ्रूसविभ्रमः ॥
नग्नरूपः शिरोमालाभूषितस्तीक्ष्णदंष्ट्रकः ।'
(**पूर्वकारणे** १३.९७–१०१ पू०);
'त्र्यक्षमष्टभुजं रौद्रमूर्ध्वकेशं [सुदंष्ट्र]कम् ।
रौद्रदृष्टिं च कृष्णाङ्गं बालेन्दुकृतशेखरम् ॥
नागं चैव तु धत्तूरं नागयज्ञोपवीतकम् ।
संयुक्तं कर्णयोः पत्रं वृत्तमकरसंयुतम् ॥
शूलं डमरुकं खड्गं पिनाकं दक्षिणे करे ।

रौद्रदृष्टिं च[1] [2]कृष्णाभं [3]बालेन्दुकृतशेखरम् ॥८॥
[4]नरशिरं च [5]धुत्तूरं [6]नागास्यैश्च सुसंयुतम् ।
कर्णयोः पत्रपिण्डं तु ततो मकरकुण्डलम् ॥९॥
खट्वाङ्गं च भुजङ्गं च [7]पाशं शूलं च दक्षिणे ।
[8]कपालं डमरुं [9]खड्गमग्निं वामे च हस्तके ॥१०॥
सर्वाभरणसंयुक्तं [10]शिरोमालासमन्वितम् ।
[11]नग्नमह्यम्बरैर्युक्तं किङ्किणी[12]वरसंयुतम् ॥११॥
[13]नूपुरं यज्ञसूत्रं च [14]पादे किङ्किणिसंयुतम् ।
प्रभामण्डलसंयुक्तं [15]मृण्मयं [16]परिकल्पयेत् ॥१२॥

[17][क्षेत्रपालस्थापनयोग्यस्थानम्]

[18]ग्रामे पूर्वे तथैशान्यां वने [19]खेटकपत्तने ।

---

कपालं पाशखेटं च बाणं वामकरे ततः ॥
सर्वाभरणसंयुक्तं शिरं वै शिरमालया ।
नग्नं नागाम्बरैर्युक्तं किङ्किणीमालया सह ॥
नूपुरं यज्ञसूत्रं च पादे किङ्किणिशोभितम् ।
प्रभामण्डलसंयुक्तं भद्रपीठोपरि स्थितम् ॥
श्वानयुक्तमयुक्तं वा श्यामरक्तान्धकारभाक्
एवं वै क्षेत्रपालं तु'
(सूक्ष्मे ९१.१९ उ०–२५ पू०);
एतद्विषये पुनः अजिते ३६.३१४ उ०–३१८ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[1] तु — उ, ऋ.

[2] कृष्णाङ्गं — ऊ, ऋ, ॠ.

[3] फालान्तकृत० — ऊ; फालं तु कृत० — ऋ; फालान्तु कृत० — ॠ.

[4] नराशिरं — ऊ, ऋ, ॠ; 'शिरः'शब्दस्याकारान्ते प्रयोगः ।

[5] धुर्धूरं — उ, ऊ, ऋ; धुद्रूरं — ॠ.

[6] नागास्मिश्च — उ, ऊ; नागस्मिश्च — ऋ, ॠ.

[7] पाशशूलं — ऊ, ऋ, ॠ.

[8] कपालडमरुं — उ; कपालडमरुकं — ॠ.

[9] खड्गमसीनां वामहस्तके — उ; खड्गं वामे च हस्तके — ऊ, ऋ; खड्गं दक्षिणे वामे च — ॠ.

[10] शिरं वैरे तु मालया — उ.

[11] नग्नाभमपरै० — उ; नग्नाभमम्बरै० — ऊ, ऋ, ॠ.

[12] ०रवसंयुतम् — ऊ, ऋ, ॠ.

[13] नपुरं — ऊ.

[14] पदे — उ.

[15] मृण्मयीं — ऊ, ऋ, ॠ; उत्तरत्र बिम्बस्य जलाधिवासग्रामप्रदक्षिणयोर्वर्णितत्वाद् मृण्मयबिम्बस्यागमान्तरेषु जलाधिवासग्रामप्रदक्षिणयोर्निषिद्धत्वादत्र मृण्मयमिति न युज्यते । अतो यदि मृण्मयं बिम्बं तदा प्रभामण्डलसंयुक्तमिति व्याख्येयमिति भाति ।

[16] रूपकल्पयेत् — ॠ.

[17] 'ग्रामादावैशदिग्भागे लोकरक्षार्थकारणम् ।
प्रासादं प्रतिमां तत्र पूर्वोक्तविधिना तथा ॥
द्वारं तु पश्चिमे मुख्यं दक्षिणे मध्यमं स्मृतम् ।
कन्यसं चेन्द्रदिग्द्वारम्'
(सुप्रभेदे क्रियापादे ५०.१ उ०–३ पू०);
'द्वारं तु पश्चिमे मुख्यं दक्षिणे मध्यमं स्मृतम् ।
कन्यसं चेन्द्रके द्वारमैशान्यां स्थानमुत्तमम् ॥'
'ग्रामेषु नगरे चैव पत्तने राजधानिके ।
चत्वरेषु श्मशानेषु समुद्रे गजपादिनम् (जनपदे तथा?) ॥

नदीतीरे तथा क्षेत्रे [1]आलयैशान[2]भागके ॥१३॥
[3]पञ्चहस्तं त्रिहस्तं वा आलयं सममण्डलम् ।

[4][मण्डपस्तत्र कुण्डकल्पनं च]

आलयस्याग्रतः कुर्यात्सप्तहस्तं तु मण्टपम् ॥१४॥
षोडशस्तम्भसंयुक्तं द्वारतोरण[5]भूषितम् ।
चतुस्तोरणसंयुक्तं चतुर्द्वारसमायुतम्[6] ॥१५॥
वितानध्वजसंयुक्तं मुक्तादामैरलंकृतम् ।
मण्टपं तु त्रिधा भज्य मध्ये [7]वेदीं प्रकल्पयेत् ॥१६॥
तालमात्रोदयां[8] कृत्वा गोमयेनोपलिप्य च[9] ।
पूर्वे तु चतुरश्रं [10]तु दक्षिणे वृत्तकुण्डकम् ॥१७॥
पश्चिमे पञ्चकोणं [11]चाप्युत्तरे तु त्रिकोणकम् ।
[12]त्रिमेखलासमायुक्तमेकमेखलमेव वा[13] ॥१८॥

---

देवालये गुरुगृहे विमाने पुण्यदेशके ।
आरण्ये पर्वताकारे नद्यादिषु तटाकके ॥
एतेषां स्थानमेवोक्तमन्येषु स्थापनं नयेत् ।
देवस्याभिमुखं पूर्वमैशान्यां क्षेत्रपालकम् ॥
दक्षिणाभिमुखे देवे क्षेत्रेशं वायुदेशके ।
देवस्य पश्चिमद्वारे चाग्नेय्यां क्षेत्रपालकम् ॥
उत्तराभिमुखे देवे क्षेत्रेशानं तु नैर्ऋते ।
एतत्स्थानं प्रकर्तव्यमन्येषु स्थाननाशनम् ॥
प्रमादाद्दिक्षु संस्थाप्य यजमानराष्ट्रनाशनम् ।'
(पूर्वकारणे १०३.१३ उ०, १४ पू०; ५९–६४ पू०)

[18] 'ऋ' मातृकायां १३–१६ श्लोका न दृश्यन्ते ।; ग्रामपूर्वे — उ.

[19] कटकरूपयोः — उ.

[1] आलयेशान० — उ.

[2] ०गोचरे — ऋ.

[3] इदमर्धं 'ऊ, ॠ' कोशयोर्न दृश्यते ।

[4] 'हर्म्याग्रे मण्डपं कुर्यादष्टहस्तप्रमाणतः ।
कलास्तम्भसमायुक्तं ध्वजतोरणसंयुतम् ॥
तन्मध्ये वेदिकां कुर्यात्तत्त्रिभागैकभागतः ।
रत्निमात्रसमुत्सेधां दर्पणोदरसन्निभाम् ॥
कुण्डानि परितः कुर्यान्मानुषे तु पदे क्रमात् ।
इन्द्रादिषु चतुर्दिक्षु वेदाश्रं कारयेद्बुधः ॥
वृत्तकुण्डमथैशान्यां प्रधानं कल्पयेद्बुधः ॥
मण्डपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत् ।
उद्वास्य शिल्पिनं पश्चाद्गोमयेन तु लेपयेत् ॥
[मण्टपे मार्जनं] कृत्वा भूसुरान्भोजयेत्ततः ।
गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः ॥'
(टि० २८९.८१, ८२ पृष्ठयोः 'कारणे' इति निर्दिश्यैते श्लोकाः दृश्यन्ते ।);
'षोडशस्तम्भसंयुक्तं यागशालां प्रकल्पयेत् ।
मध्ये वेदिं प्रकल्प्याथ दर्पणोदरसंनिभाम् ॥
पूर्वाद्यष्टदिशास्वेव पूर्ववत्कुण्डमुच्यते ।
इन्द्रईशानयोर्मध्ये वृत्तकुण्डं प्रकीर्तितम् ॥'
(उत्तरकारणे ७०.२ उ० – ४ पू०)

[5] ०भर्षितम् — ऊ.

[6] ०समन्वितम् — ऊ, ऋ.

[7] वेदि — ऊ.

[8] ०मात्रोदयं — उ, ऊ, ऋ, ॠ.

[9] गोमयेनैव लिप्यते — उ, ऋ; ०लिप्यते — ऊ, ॠ.

[10] वा — उ.

[11] तु उत्तरे — उ, ऊ, ऋ, ॠ.

[12] त्रिमेखलसमा — उ, ऊ, ॠ.

[13] च — ऊ.

नाभियोनिसमायुक्तं [1]मध्ये [2]पद्मसमायुतम् ।

[मण्डपसंस्कारः]

पुण्याहं वाचयेत्तत्र ब्राह्मणान्भोजयेत्ततः ॥१९॥
शोषणं [3]प्लावनं कृत्वा प्रोक्षयेत्पञ्चगव्यकैः ।
[4]प्रोक्षयेद्धृदयेनैव सर्वत्र सकुशोदकैः ॥२०॥

[5][रत्नन्यासः]

रत्नन्यासं ततः [6]कुर्याद्धृदयेन तु मन्त्रतः ।

[7][नयनोन्मीलनम्]

[8]नयनोन्मीलनं कुर्यान्नेत्रमन्त्रं तु[9] विन्यसेत् ॥२१॥
सवत्सां [10]गां [11]हृदा चैव [12]घृतं मधु पयो हृदा ।
ब्राह्मणान्पञ्चमेनाथ [13]सर्वांश्चैव हृदा [14]बुधः ॥२२॥
दर्शयेद्बीजमुख्येन शुद्धिं कृत्वा [15]सकृत्पुनः ।
[16]सक्तुतोयमृदा भस्मबिल्व[17]पत्रैस्तु क्षालयेत् ॥२३॥

[18][ग्रामप्रदक्षिणं जलाधिवासश्च]

ग्रामप्रदक्षिणं कृत्वा पञ्चब्रह्म समुच्चरन् ।

---

[1] मध्यपद्म० — ऋ.
[2] पद्मं समा० — ऋ.
[3] पचनं — उ.
[4] प्रोक्षयेदस्त्रमन्त्रेण हृदयेन कुशो — ऊ, ऋ.
[5] 'चलस्थापनवत्कृत्वा रत्नन्यासादिपूर्वकम् ।
क्षेत्रपालं स्वमन्त्रेण प्रतिष्ठां सम्यगाचरेत् ॥'
(सुप्रभेदे क्रियापादे ५०.९उ०, १०पू०)
[6] कृत्वा हृदयेनैव — ऊ, ऋ, ॠ.
[7] 'नयनोन्मीलनं कुरु ॥
हेमसूच्या लिखेत्पक्ष्मरेखां वै कृष्णमण्डलम् ।
मधुना तर्पयित्वा तु कुर्याद्गव्याभिषेचनम् ॥'
(टि. २८९. ८१ पृष्ठे 'कारणे' इति निर्दिश्योद्धृतः)
[8] नयनं मोक्षणं — ऊ, ऋ, ॠ.
[9] नेत्रमन्त्रेण — ऋ.
[10] 'ऊ, ऋ, ॠ' मातृकासु 'गां' इति न दृश्यते ।
[11] हृदेनैव — उ; हृदयेनैव — ऊ, ऋ, ॠ.
[12] युतं मधुपयं — ऊ; घृत . . . ऋ; घृतं मधुपयं — ॠ.
[13] सर्वेषां हृदया — उ; सर्वेषां च हृदा — ऊ, ऋ, ॠ.
[14] पुनः — उ.
[15] सकृत्सकृत् — ऊ, ऋ, ॠ.
[16] सकृत्तोयं मृदा — उ; तोयमृदा — ऊ, ऋ, ॠ.
[17] पत्रेषु क्षालयेत् — उ; तोयेन क्षालयेत्क्रमात् — ऊ, ऋ, ॠ.
[18] 'ग्रामप्रदक्षिणं कुर्याज्जलाधिवासनं भवेत् ।
वस्त्रेण प्रतिमां वेष्टय लम्बकूर्चं शिरे न्यसेत् ॥

पञ्च[1]गव्येन संक्षाल्य गन्धतोयेन[2]सेचयेत् ॥२४॥
[3]गन्धं पुष्पं च [4]धूपं च [5]दीपं चैव स्वमन्त्रतः ।
[6]वस्त्रकूर्चसमायुक्तं जले चैवाधिवासयेत् ॥२५॥
त्रिरात्रमेकरात्रं वा याममेकं जलोषितम् ।

[7][शयनाधिवासः]

जलादुत्तीर्य देवेशं वस्त्रकूर्चं व्यपोह्य च ॥२६॥
स्नानमण्टपमानीय शुद्धिं कृत्वा यथाक्रमम् ।
पञ्च[8]ब्रह्मणा [9]संस्थाप्य अर्घ्यमाचमनं ददेत् ॥२७॥
गन्धपुष्पादिनाभ्यर्च्य [10]पिण्डिकां सह शाययेत् ॥

[11][कुम्भस्थापनं तत्पूजा च]

[12]वेद्यां च कुम्भं संस्थाप्य सवस्त्रं सहिरण्यकम् ॥२८॥

---

जलमध्ये तु निक्षिप्य कण्ठदेशसमन्वितम् ।
एकरात्रं द्विरात्रं वा त्रिरात्रं याममेव च ॥'
(टि. २८९. ८१ पृष्ठे 'कारणे' इति निर्दिश्योद्धृतौ)

[1] ब्रह्मेण — उ, ऊ, ऋ; ०ब्रह्मेन — ॠ.

[2] पूजयेत् — उ.

[3] गन्धपुष्पं — ऊ, ऋ, ॠ.

[4] दीपं — ऊ, ऋ, ॠ.

[5] दीपमर्घ्यं हृदा न्यसेत् — उ; धूपं चैव — ऊ, ऋ, ॠ.

[6] 'उ' मातृकायां २५ उ० — २८ पू० श्लोका न दृश्यन्ते ।

[7] 'अष्टद्रोणैश्च शालिभिस्तदर्धैस्तण्डुलैस्तिलैः ।
[स्थण्डिले नलिनं लिख्य] दर्भैश्चैव परिस्तरेत् ॥
कर्णिकामध्यमे चोक्तं शयनं कल्पयेत्ततः ।
अण्डजा मुण्डजाश्चैव रोमजाश्चर्मजास्तथा ॥
वामजाश्चैव पञ्चैतैर्भूततत्त्वानि विन्यसेत् ।
जलतीरं समागम्य स्वस्तिसूक्तसमन्वितम् ।
सर्वातोद्यसमायुक्तं सर्वालंकारसंयुतम् ॥
जलादुत्तीर्य बिम्बं तु स्नानश्वभ्रे तु विन्यसेत् ।
वस्त्रादीनि व्यपोह्याथ गव्यैरेवाभिषेचयेत् ॥
गन्धतोयेन संलिप्य पवमानमुदीरयन् ।
क्षेत्रबीजेन चाभ्यर्च्य रक्तवस्त्रेण वेष्टयेत् ॥
कौतुकं बन्धयेद्धीमान्पूर्वोक्तविधिना सह ।
धूपदीपं ततो दत्त्वा शाययेच्छयनोपरि ॥
गन्धपुष्पादिभिश्चैव पूजयेद्विधिना कुरु ।
तत्त्वतत्त्वेश्वरान्न्यस्य मूर्तिमूर्तीश्वरान्न्यसेत् ॥
आत्मविद्याशिवाख्यं जानुकण्ठशिरोऽवधि ।
पूर्ववद्विन्यसेत्तत्रानलादिमूर्तयः स्मृताः ।
अनलश्चाग्निकेशश्च करालश्च तृतीयकः ॥
घण्टारवो महाक्रोधः षष्ठो वै पिशिताशनः ।
सप्तमः पिङ्गलाक्षश्च ऊर्ध्वकेशस्तथा भवेत् ॥
एते च मूर्तिपाश्चैव विन्यसेत्क्रमशो बुधः ॥'
(टि. २८९. ८२, ८३ पृष्ठयोः 'कारणे' इति निर्दिश्योद्धृताः ।);
शयनारोपणं चैव पूर्ववत्परिकल्पयेत् ।
(**उत्तरकारणे** ७०.६ पू०)

[8] ०ब्रह्मेण — ऊ, ऋ, ॠ.

[9] संस्थाप्यार्घ्यं० — ॠ.

[10] पिण्डिका — ऊ, ऋ, ॠ.

[11] 'तस्योर्ध्वे तु शिरोभागे क्षेत्रकुम्भं तु विन्यसेत् ।
सकूर्चं सापिधानं च सवस्त्रं वारिपूरितम् ॥

शिवाख्यं पद्म[1]योनी च मुकुलीं चैव दर्शयेत्।
पाद्यमाचमनं चार्घ्यं गन्धपुष्पादिकं [2]बुधः ॥२९॥
[3]कुम्भान्संस्थापयेत्तत्र सवस्त्रान्सहिरण्यकान्।
[4]इन्द्रादीशानपर्यन्तं पूजयेत्स्वस्वमन्त्रकैः[5] ॥३०॥

[6][होमः]

[7]अग्निकार्योक्तमार्गेण शिवाग्निं परिकल्पयेत्।
समिदाज्य[8]चरू लाजाः [9]सक्त्वपूपयवास्तिलाः ॥३१॥

---

हैमं वा पद्मं रत्नं वा कुम्भमध्ये तु निक्षिपेत्।
तन्मध्ये तु स्वनामानं प्रणवादिनमोऽन्तकम् ॥
ध्यात्वा क्षेत्रेशरूपं तु पूजयेत्पूर्णमानसः।
अभितः कलशानष्टौ सूत्रादिभिः समन्वितान् ॥
पूर्वादीशानपर्यन्त हेतुघ्नाद्यान् प्रपूजयेत्।
हेतुघ्नस्त्रिपुरघ्नश्च वेतालश्चाग्निजिह्वकः ॥
कालाग्निः करालकश्चैव एकाङ्घ्रिर्भीम इत्यपि।
पूजयेद्गन्धपुष्पाद्यैः स्वस्वनाम प्रपूजयेत् ॥'
(टि० २८९.८३ पृष्ठे 'कारणे' इति निर्दिश्योद्धृताः);
'वेदिकामध्यमे चैव दशकुम्भं न्यसेत्ततः।
ससूत्रं सापिधानं च सरत्नस्वर्णपङ्कजम् ॥
सकूर्चनालिकेरं च चूतपल्लवसंयुतम्।
सप्तधान्यस्थितं कुम्भं पश्चिमाभिमुखं भवेत् ॥
दक्षिणाभिमुखं वापि बिम्बमावाहयेद्घटे।
आसनं मूर्तिमभ्यर्च्य विद्यादेहं प्रकल्पयेत् ॥
प्रणवं पूर्वमुच्चार्य श्रीबीजं च द्वितीयकम् ॥
कुरु वाटिकायेति आपदुद्धारणाय च ॥
क्षं क्षेत्रपाल इत्येते चतुर्थ्यन्तं समुच्चरन्।
नमोऽन्तमुच्चरेत्पश्चाद्भ्राष्योच्चारं तु पूर्ववत् ॥
पश्चान्मन्त्रेण चावाह्य घटे संपूजयेत्ततः।
पश्चिमाभिमुखं पूज्य दक्षिणाभिमुखं तु वा ॥
पुष्पाञ्जलित्रयं पूज्य प्रथमावरणं यजेत् ॥
पश्चिमाद्दक्षिणान्तं वा दक्षिणात्पूर्वमेव वा ॥
विश्वरूपादिमभ्यर्च्य द्वितीयावरणं तथा।
पञ्चमावरणं चैव पूर्ववत्परिकल्पयेत् ॥
नन्द्यादींश्चैव इन्द्रादीन्वज्रादीन्हेतुकादि च।
पूर्वादिषु चाष्टदिक्षु तत्तत्स्थानेषु पूजयेत् ॥'
(**उत्तरकारणे** ७०.६उ०–१५पू०)

[12] 'ऊ, ऋ, ॠ' मातृकासु २८ उ०, २९ श्लोकश्च न स्तः।; दद्याद्घृतं च कुम्भस्थं सवस्त्रं – उ.

[1] ०योनिं च — उ.

[2] पयः — उ; अत्र 'कुर्यात्' इति पदमध्याहृत्य व्यांख्येयम्।

[3] इदमर्धं 'उ' मातृकायां न दृश्यते।

[4] इन्द्राद्यैशान० — उ.

[5] ०मन्त्रतः — उ.

[6] 'आचार्यो मूर्तिपाश्चैव होमकर्म समारभेत्।
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥
शमीखादिरमायूरप्लक्षाश्चैव दिशासु च।
प्रधानस्य पलाशं तु समिधः संप्रकीर्तिताः ॥
हृदयेन समिद्धुत्वा आज्यं मूलेन होमयेत्।
अस्त्रेणैव चरुं हुत्वा लाजमीशेन होमयेत् ॥
सर्षपं कवचेनैव द्रव्यान्ते व्याहृतिं हुनेत्।
प्रत्येकं शतमर्धं वा तदर्धं वापि होमयेत् ॥
द्रव्यान्ते व्याहृतिं हुत्वा स्पृशेद्बिम्बस्य मस्तकम्।
एवमेव क्रमाद्रात्रौ'
(टि० २८९.८३, ८४ पृष्ठयोः 'कारणे' इति निर्दिश्योद्धृताः।);
'अग्निसंस्कारपूर्वं तु पूर्ववद्विधिना हुनेत्।
समिदाज्यचरूँल्लाजं नवधान्यं गुलं तथा ॥
अपूपान्कन्दकुसुमं होमयेत्तु विशेषतः।'
(**उत्तरकारणे** ७०.१५ उ०, १६)

[7] इदमर्धं 'उ' मातृकायां न दृश्यते।

[8] ०चरून् लाजान् — उ, ऊ, ऋ, ॠ.

[9] सक्तूपूपयवस्तिलान् — उ; सक्त्वपूपयवांस्तिलान् — ऊ, ऋ, ॠ.

[1] सर्षपाश्च व्रीहिभिश्च [2] माषा एकादश स्मृताः ।
पञ्चब्रह्मषडङ्गैश्च [3] मूलमन्त्रैः शताहुतिः ॥३२॥
क्षुरिकास्त्रादिमन्त्रैश्च[4] प्रत्येकं विंशतिस्तथा ।

[5] [कुम्भाभिषेकः]

प्रभाते विमले चैव [6] स्नानवेद्युपरि न्यसेत् ॥३३॥
[7] भस्मधारणशुद्धाङ्गः[8] [9] आत्मशुद्ध्यादिपूर्वकम् ।
[10] गन्धं पुष्पं च धूपं च दीपमर्घ्यं च पूजयेत् ॥३४॥
[11] ध्यात्वा तु प्रतिमारूपं मन्त्रसंस्कारपूर्वकम् ।
दीक्षितः शिवधर्मज्ञः शिवशास्त्रविशारदः ॥३५॥
[12] प्राणप्रकृतिमार्गेण सबीजं हृदये न्यसेत् ।
[13] घटसंस्थापितान्देवान्स्वस्वनाम्नैव[14] स्थापयेत् ॥३६॥
[15] ब्रह्मपञ्चकमन्त्रेण तदन्ते अभिषेचयेत् ।
गन्धपुष्पं च धूपं च [16] दीपं मुद्रां निवेदयेत् ॥३७॥

---

[1] इदमर्धं 'ऊ, ॠ, ॠ' मातृकासु न दृश्यते ।

[2] माषकैश्च दश — उ.

[3] सद्योजातैश्च वाहुतिः — उ; मूलमन्त्रशता० — ऊ, ॠ, ॠ.

[4] पूर्वाहुतिस्तु क्षुरिका — उ.

[5] 'प्रभाते स्नपनं कुरु ।
देशिको मूर्तिपैः सार्धं स्नानं पूर्ववदाचरेत् ॥
आचार्यो मूर्तिपैः सार्धं पूजयेत्पूर्ववत्ततः ।
शयनाद्बिम्बमुद्धृत्य वस्त्रादीनि व्यपोह्य च ॥
गन्धपुष्पादिभिश्चैव पूजयेत्पुरुषेण तु ।
जयादिरभ्यातानं च राष्ट्रभृच्च हुनेत्क्रमात् ॥
पूर्णाहुतिं च शिरसा हुत्वाग्निं तु विसर्जयेत् ।
शयनाद्बिम्बमुद्धृत्य स्वस्वस्थानेषु स्थापयेत् ॥
प्रागुक्तविधिना धीमान्घृतस्यैव शिरोऽर्पणम् ।
कुम्भमुद्धृत्य बिम्बाग्रे स्थापयेत्स्थण्डिलोपरि ॥
कुम्भाद्बीजं समादाय प्रतिमाहृदि विन्यसेत् ।
तत्तत्कुम्भोदकैः स्नाप्य पूर्वादिषु क्रमाद्यथा ॥
नैवेद्यं दापयित्वा तु ताम्बूलं तु निवेदयेत् ।
भक्तानां परिचाराणां यथाशक्ति तु पूजयेत् ॥
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्'
(टि. २८९. ८४, ८५ पृष्ठयोः 'कारणे' इति निर्दिश्योद्धृताः ।);
'प्रायश्चित्ताहुतिं चैव अग्निमुत्थापयेत्ततः ।
घटे संयोजयेत्पश्चात्सुमुहूर्ते सुलग्नके ॥
अभिषेकं ततः कृत्वा ब्राह्मणान्भोजयेत्ततः ।
आचार्यं पूजयेच्चैव दक्षिणां दापयेत्ततः ॥
एवं यः कुरुते चैव स राजा विजयी भवेत् ।'
(**उत्तरकारणे** ७०.१७–१९ पू०)

[6] स्नात्वाचम्य विधिर्बुधः — ऊ, ॠ, ॠ.

[7] गन्धसेचनशुभ्राभ्रं — उ.

[8] ०शुद्धाङ्गं — ऊ, ॠ, ॠ.

[9] आत्मेनैव निशुद्ध्यति — उ.

[10] गन्धपुष्पं — उ, ॠ, ॠ.

[11] 'उ' कोशे ३५–४० पू० श्लोका न दृश्यन्ते ।

[12] 'प्राणप्रकृतियोगं तु ज्ञात्वा स्थापनमाचरेत् ।
प्राणो मन्त्र इति प्रोक्तः प्रकृतिःस्थाप्य उच्यते ॥'
(**पूर्वकारणे** ५९.२२१)

[13] पट० — ऊ.

[14] देवान्स्वनामेनैव — ऊ, ॠ, ॠ.

[15] ब्रह्मोपक्रममन्त्रेण — ऊ, ब्रह्मपकमन्त्रेण — ॠ.

[16] दीपमुद्रां — ऊ, ॠ, ॠ.

नमस्कारान्तसंयुक्तं मुद्रां चैव निवेदयेत्।

[1][परिवारविधिः]

इन्द्रादीशानपर्यन्तं परितः कल्पयेत्ततः ॥३८॥
असिताङ्गो रुरुश्चण्डः क्रोधश्चोन्मत्तभैरवः।
[2]कपाली भीषणश्चैव संहारश्चाष्टभैरवाः[3] ॥३९॥

[द्वारपालौ]

क्रोधकं कुम्भकं चैव द्वाररक्षं तु पूजयेत्।

[आचार्यादिपूजा]

[4]आचार्यपूजनं कुर्यान्मूर्तिपानथ पूजयेत् ॥४०॥

[5][नित्यपूजा]

पाद्यं [6]वै सद्यमन्त्रेण [7]वामेनाचमनीयकम्।

---

[1] 'असिताङ्गो रुरुश्चण्डः क्रोधश्चोन्मत्तभैरवः।
[2] कपाली भीषणश्चैव संहारश्चाष्टभैरवाः॥
पूर्वाद्यैशानपर्यन्तं पूजयेत्तु विशेषतः।
कपालशूलसहितमभयं वरदान्वितम्॥
नीलमेघनिभाकारं त्रियक्षं चन्द्रशेखरम्।
प्रणवादिनमोऽन्तं च पूजयेत्त्वष्टभैरवम्॥'
'भैरवं दक्षिणेऽभ्यर्च्य द्विभुजं चैकवक्त्रकम्।
खड्गखेटधरं चैव रक्तवर्णसमायुतम्॥
महाभैरवं वामे तु कृष्णवर्णसमायुतम्।
द्विभुजं विस्मयं हस्तं शूलं वा दण्डधारिणम्॥
उग्रभैरवपीठं स्याद्बलिपीठे बलि तथा।
तस्याग्रे श्वानसंयुक्तं द्वारपार्श्वद्वयं तथा॥
वाहनं चैव संयोज्य चतुर्वेदं प्रकल्पयेत्।'
(**पूर्वकारणे** १०३.५६–५८; ६६उ०–६९)

[2] कपालि — ऊ.

[3] ०भैरवः — ऊ, ऋ, ॠ.

[4] इदमर्धं 'ऊ, ऋ, ॠ' मातृकासु न दृश्यते।

[5] 'पाद्यैराचमनीयार्घ्यैर्गन्धैः पुष्पैश्च धूपकैः।
दीपैर्निवेदनैः सर्वं कूटबीजेन दापयेत्॥
श्वानमारूढदेवं च स्वनामाद्येन पूजयेत्।'
(**पूर्वकारणे** १०३.७उ०, ८);
'पाद्यादीनि समारभ्य नैवेद्यान्तं यजेद्बुधः।
कूटबीजेन दातव्यं बिन्दुनादेन संयुतम्॥
श्वानमारूढदेवं च स्वस्वनाम्नैव पूजयेत्।'
(**सूक्ष्मे** ९१.७ उ०, ८);
'पाद्यैराचमनैरर्घ्यैर्गन्धैः पुष्पैश्च धूपकैः।
दीपैर्निवेदनैः सर्वं कूटबीजेन दापयेत्॥
श्वानमारूढदेवं च स्वनामाद्येन पूजयेत्।
क्षेत्रध्यानक्रमं वक्ष्ये शृणुष्वैवं महेश्वर॥
ऊर्ध्वकेशं त्रिणेत्रं च सर्पकुण्डलशोभितम्।
दंष्ट्रस्पृष्टाधरोष्ठं च अञ्जनद्रुमसन्निभम्॥
चतुर्बाहुं शूलहस्तं डमरुं दक्षिणे करे।

अर्घ्यं शिरसि विन्यस्य हृदयेनाभिषेचयेत् ॥४१॥
पुष्पमीशानमन्त्रेण[1] गन्धं तत्पुरुषेण तु।
[2]अघोरेणैव धूपं तु दीपं नेत्रेण मन्त्रतः ॥४२॥
नैवेद्यं हृदयेनैव ताम्बूलं कवचेन तु।
पानीयमस्त्रमन्त्रेण क्षेत्रपालं तु पूजयेत् ॥४३॥
एवं नित्यं ततः [3]पूजा [4]कर्तव्या [5]सिद्धिसंप्रदा।

[6][परिवारबलिः]

[7]परितः [8]पूर्वके चैव बलिभिश्च यजेत्ततः ॥४४॥
[9]प्राकारेषु कृते चैव स्वस्वमन्त्रेण पूजयेत्।
[10]महापीठपिशाचेभ्यो बलिं दद्याद्विशेषतः ॥४५॥
महाहविर्निवेद्यान्ते[11] [12]ताम्बूलं च निवेदयेत्।
गुलखण्डाज्यपूपं च[13] [14]सक्तुलाजसमन्वितम् ॥४६॥
तदग्रे स्थण्डिलं कृत्वा मध्यरात्रौ बलिं क्षिपेत्।

---

कपालं दण्डहस्तं च सव्यभागे तु धारयेत् ॥
नग्नवेषधरं भीमं नागयज्ञोपवीतिनम्।
अष्टबाहुं चतुर्बाहुमुत्तमं च द्विबाहुकम् ॥
इत्थं वै क्षेत्रदेवं तु ध्यात्वा मृत्युविनाशनम्।
आवाहयेत्ततो देवं सिंहासनं ततोपरि ॥
स्नाने पद्मासनं कृत्वा वस्त्रैर्गन्धैः सपुष्पकैः।
धूपदीपैः समभ्यर्च्य योगासनं प्रकल्पयेत् ॥
निवेद्यकाले संपूज्य अनन्तासनसंस्थिते।
नृत्तं कृत्वा विशेषेण सिंहासने सुसंस्थितम् ॥
पद्मासनं तु सर्वेषां सकलाराधनक्रमम्।
शिवार्चनसमं पुण्यं न भूतं न भविष्यति ॥'
(मकुटे ७.४–१२)

[1] चैव सद्य० — उ.
[2] वामे चाच० — उ, ॠ.
[1] पुष्पं शिरसि विन्यस्य — उ.
[2] दीपं वै नेत्रमन्त्रेण वामेनाचमनीयकम् — ऊ, ॠ, ॠ.
[3] पूजां — ॠ; पूज्य — ॠ.
[4] कर्तव्यं — उ, ऊ, ॠ, ॠ.
[5] सिद्धिदप्रदम् — उ; सिद्धिदं प्रदम् — ऊ; सिद्धिदः प्रदम् — ॠ.
[6] 'सर्वोपचारपूजायां भोगाङ्गं पूजयेत्तदा।
लयाङ्गं लिङ्गपूजायां भोगाङ्गं क्षेत्रपालकम् ॥
सर्वभैरवं संपूज्य बलिपीठे विशेषतः।
रक्तपानबलिं कृत्वा सर्वशान्तिकरं शुभम् ॥
मधुमांसफलैर्युक्तं नैवेद्यं तु प्रदापयेत्।
गन्धद्रव्यसमायुक्तं गन्धपुष्पेण पूजयेत् ॥
धूपदीपसमायुक्तं सर्वातोद्यसमायुतम्।
अर्धरात्रौ विशेषेण भोगाङ्गबलिं पूजयेत्।
पूजान्ते तु बलिं कृत्वा स पुण्यां गतिमाप्नुयात्।'
(**पूर्वकारणे** १०३, ७०–७४ पू०)
[7] पुरतो — उ.
[8] पूर्वकं चैव — उ; पूर्वकश्चैव — ऊ, ॠ, ॠ.
[9] प्राकारेष्वाकृतं चैव — उ, ॠ, ॠ; प्राकारेष्वकृतं चैव — ऊ.
[10] महापीडा० — ऊ; महापीठा — ॠ.
[11] निवेद्यान्तं — उ, ऊ, ॠ, ॠ.
[12] ताम्बूलान्तं नि० — उ.
[13] ०ज्यापूपं च — ॠ.
[14] सदध्याज्यसमायुतम् — उ.

[उत्सवः]

[1]प्रतिष्ठान्तोत्सवं कुर्यात्सप्ताहं तत्र कारयेत् ॥४७॥
एकाहं वा[2] प्रकर्तव्यमुत्सवं चैव कारयेत् ।
सप्ताहे [3]रात्रिमारभ्य प्रभाते तीर्थमाचरेत्[4] ॥४८॥

[दिनदेवताः]

प्रथमं भूतदैवत्यं द्वितीयं गणदैवतम् ।
[5]तृतीयं पिशाचदैवत्यं चतुर्थमिन्द्रदैवतम् ॥४९॥
पञ्चमं [6]मुनिदैवत्यं [7]षष्ठं राक्षसदैवतम् ।
[8]सप्तमे क्षेत्रपालस्तु [9]दिवसानां च देवताः[10] ॥५०॥
[11]मुद्गान्नं चैव सक्तुं च लाजमाषयुतं तथा ।
गन्धपुष्पं च धूपं च दीपमर्घ्यं समर्चयेत् ॥५१॥

[होमः]

समिदाज्यचरुक्षीरं [12]दध्यपूपतिलं तथा ।
[13]होमद्रव्याणि [14]सप्तैभिः सायं[15]प्रातस्तु होमयेत् ॥५२॥
हृदयाद्यस्त्रपर्यन्तं प्रत्येकं तु शतं हुनेत् ।
पूर्णाहुतिं तथा [16]द्रव्यैः [17]पुरुषेण तु मन्त्रतः ॥५३॥

---

[1] प्रतिष्ठा चोत्सवं — उ, ऊ, ऋ, ॠ.
[2] च — उ.
[3] तत्रमारभ्य — उ; तन्त्रमारभ्य — ऊ, ऋ, ॠ.
[4] 'रात्रावेवोत्सवारम्भो दिवावभृथ उच्यते ।'
(**अजिते** २७.३९ पू०);
'निर्दिष्टदिवसाद्रात्रिमारभ्योत्सवमाचरेत् ।'
(**पूर्वकारणे** १४१.२० पू०);
'शैवादि चोत्सवादीनां यावत्संख्या विधीयते ।
तत्पूर्वरात्रिमारभ्य कारयेदुत्सवं बुधः ॥
प्रतिष्ठां चोत्सवं यागं सायादिदिनमारभेत् ।
प्रातःकाले ह्यवभृथं सायंकाले समारभेत् ॥
रात्रिः सायं दिवा प्रातरिति शास्त्रस्य निश्चयः ।'
(**दीप्ते** ८३.२७ पू०–२९)
[5] द्वितीयं — ॠ.
[6] रतिदैवत्यं — ऊ, ऋ, ॠ.
[7] षट् षट् राक्षस० — ॠ.
[8] सप्तमं क्षेत्रपालं तु — उ, ऊ, ऋ, ॠ.
[9] दिवसान्तं च — ऊ, ऋ, ॠ.
[10] दैवतम् — ऊ, ऋ, ॠ.
[11] 'ऊ, ऋ, ॠ' मातृकासु ५१ श्लोकः ५२ पूर्वार्धं च न स्तः ।
[12] दध्यपूपस्तिलं — उ.
[13] '५२' तृतीयपादस्य स्थाने 'अन्नं मुद्गं च लाजं च' इति 'ऊ, ऋ, ॠ' मातृकासु दृश्यते ।
[14] सप्तेभ्यो — उ.
[15] प्रातस्य — उ.
[16] द्रव्यं — उ, ऊ, ऋ, ॠ.
[17] पुरुषेणैव — ऊ, ऋ, ॠ.

[1]सायं[2]प्रातर्बलिं दद्याद्धोमान्ते चोत्सवं [3]भवेत्।
सप्ताहे [4]सति तीर्थं तु [5]पूर्णान्तं कारयेत्ततः ॥५४॥
महाहविश्च[6] कर्तव्यमुत्सवान्ते[7] विशेषतः।

[स्नपनम्]

शालिभिः [8]स्थण्डिलं कृत्वा [9]नवकुम्भं तु विन्यसेत् ॥५५॥
[10]पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम्।
[11]पूर्ववत्कल्पयेत्तत्र स्थापयेत्पञ्चगव्यकम् ॥५६॥
क्षीरं दधि घृतं चैव [12]इन्द्रादीशान्तमन्त्रतः।
[13]मध्ये वै क्षेत्रपालं तु [14]ध्यात्वा [15]कुम्भं तु विन्यसेत् ॥५७॥
तत्तत्स्वनाममन्त्रेण कलशानभिषेचयेत्।
[16]पूर्वे ध्वजं तु संस्थाप्य [17]श्वानलेखं तु पूजयेत् ॥५८॥
[18]क्षेत्रेशमुत्सवान्ते च महाहविर्निवेदयेत्।
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ॥५९॥

इति रौरवतन्त्रे क्रियापादे क्षेत्रपाल[19]स्थापनविधिः
एकपञ्चाशः पटलः।

---

[1] 'होमान्ते तु बलिं दत्त्वा बल्यन्ते चोत्सवं क्रमात्।'
'सायं प्रातर्बलिं दद्याद्धोमान्ते विधिना पुरा॥'
(पूर्वकारणे १४१.६१ उ०, १२४ उ०);
'होमान्ते तु बलिं दद्याद्बल्यन्ते चोत्सवं बुधः।'
'सायं प्रातर्बलिं दद्याद्धोमान्ते तु विशेषतः॥
उत्सवं प्रारभेदन्ते सर्वालंकारसंयुतम्।'
(सुप्रभेदे क्रियापादे १४.८२ पू०, १०६);
एतद्विषये पुनः रौरवे क्रियापादे १८.८४ उ०–८९ पू० श्लोका द्रष्टव्याः।

[2] प्रातर्भवेद् दद्यात् — उ.

[3] ततः — ऊ, ऋ, ॠ.

[4] स तु — उ; तु चतुर्थं तु — ऊ, ऋ, ॠ.

[5] पुण्याहं — ऊ, ऋ, ॠ;
'पर्वान्तं सर्वमासके'
(उत्तरकामिके ६.४ उ०)

[6] ०हविं तु — उ.

[7] स्नपनान्ते — उ.

[8] स्तण्डिलं — उ.

[9] कुम्भस्थापनमाचरेत् — ऊ, ऋ; कुम्भस्थापनमारभेत् — ॠ.

[10] पाद्यं चाचमनं — उ, ऊ;
'पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम्।
क्षीरं दधि घृतं चैव प्रथमावरणं विदुः॥'
(सुप्रभेदे क्रियापादे — १५.४०.).

[11] इदमर्धं 'उ' मातृकायां न दृश्यते।

[12] इन्द्रादीशान० — उ, ऊ, ऋ, ॠ.

[13] शैवेन — ऊ, ऋ, ॠ.

[14] ध्यात्वात्मा कल्पविन्यसेत् — ऊ, ऋ, ॠ.

[15] कल्पं तु — उ.

[16] महाध्वजं पूर्वतः स्थाप्य — ऊ, ऋ, ॠ.

[17] श्वानं लेख्यं — ऊ, ऋ, ॠ.

[18] उत्सवादि विसृज्याथ — उ; क्षेत्रेशमुद्दिश्य इति व्याख्येयम्।

[19] ०प्रतिष्ठाविधिः पटलश्चतुश्चत्वारिंशतिः — ऊ;
०प्रतिष्ठाविधिपटलश्चत्वारिंशतितमः — ऋ;
०प्रतिष्ठाविधिपटलश्चतुश्चत्वारिंशतितमः — ॠ.

## द्विपञ्चाशः पटलः

### [1]सर्पशान्तिविधिः

**सर्पशान्तिं प्रवक्ष्यामि संतानस्याभिवृद्धये।**

[2][सर्पशिशूनां तदण्डानां च हनने संभाव्यमानो दोषः]

**सर्पसंहारदोषस्तु[3] कुलक्षयकरो[4] भवेत्॥१॥**
**जन्मान्तरसहस्रेषु[5] गूढपाद्धननं[6] यदि।**
**पुनः पुनश्च दोषाय [7]कल्पते कर्मबन्धनात्[8]॥२॥**
**[9]एकमासशिशौ नष्टे[10] [11]एकाब्दशिशुनाशनम्।**
**मासयुग्मशिशौ नष्टे[12] [13]युग्माब्दशिशुनाशनम्॥३॥**
**त्रिमासशिशुसंहारे अब्दत्रयशिशोर्मृतिः।**
**एकमासस्य [14]एकाब्दमष्टाब्दान्तं यथाक्रमम्॥४॥**
**[15]द्विशतोर्ध्वचत्वारिंशत्सर्पाण्डेषु[16] यथाक्रमम्।**
**एकाण्डनाशनेनैव एकगर्भविनाशनम्[17]॥५॥**

---

[1] अयं पटलः आर्. इ. १९९८८ इत्यङ्किते तालपत्रकोशे ११०–११३ पत्रेषु 'रौरवागमे' इति निर्दिश्य लिखितः। आर्. इ. २००२६ इत्यङ्किते तालपत्रकोशे विनागमनामनिर्देशमेतत्पटलस्थश्लोकाः प्रायेण दृश्यन्ते। तौ कोशौ क्रमेण 'ल, ए' इति संकेतेन निर्दिश्येते।

[2] 'सर्पशान्तिं प्रवक्ष्यामि सन्तानस्याभिवृद्धये।
सर्पमारणदोषस्तु कुलक्षयकरो भवेत्॥
जन्मान्तरसहस्रेषु सर्पाणां हननं यदि।
पुनः पुनश्च दोषाय कल्पते कर्मबन्धनात्॥
एकमासः शिशुर्नश्येदेकाब्दश्च तथा शिशुः।
मासयुग्मशिशोर्नाशो युग्माब्दशिशुनाशनम्॥
त्रिमासशिशुनाशे च अब्दत्रयशिशोर्मृतिः।
एकमासैकवर्षादि वर्षाष्टकमिति क्रमात्॥
एकाण्डनाशने चैव एकगर्भविनाशनम्।
तथा च गणयेद्विद्वाञ्श्रेयसे बुद्धिविस्तरात्॥'
(**शान्तिकुसुमाकरे** पूर्वभागे पृ० १२.)

[3] ०दोषेण — ल, ए.
[4] ०करं — ल, ए.
[5] ०सहस्रे तु — ए.
[6] ०पादनने — ल.
[7] कल्प्यतं — ल; कल्पितं — ए.
[8] ०बन्धनम् — ए.
[9] एकमासे — ल.
[10] ०शिशोर्नष्टे — ए.
[11] एकाब्दं — ल; एकाब्दे — ए.
[12] शिशोर्नाशे — ए.
[13] युग्माब्दे सुतनाशनम् — ए.
[14] एकाब्दं मासाब्दान्तं — ल.
[15] द्विशगोर्धचतुर्विशत् — ल.
[16] सर्पस्यांशं — ल; सर्पस्याण्डं — ए.
[17] ०गर्भस्थपातनम् — ल.

**तथा च गणयेद्विद्वाञ्श्रेयसे बुद्धिविस्तरात् ।**

[1] [दोषपरिहाराय शान्तिपूर्वकं सर्पाणां प्रतिष्ठा]

**तद्दोषपरिहारार्थं [2]शान्तिः स्थापनमेव च ॥६॥**
**शान्तिहीनप्रतिष्ठायां निष्फलं द्रव्यनाशनम् ।**
**तस्मात्सर्वप्रयत्नेन शान्तिपूर्वं यथाविधि[3] ॥७॥**

[4] [आचार्यवरणम्]

**शुभे दिने[5] सुनक्षत्रे सुलग्ने सुमुहूर्तके[6] ।**
**वेदशास्त्रार्थतत्त्वज्ञमाचार्यं कल्पयेत्ततः ॥८॥**
**तादृशान्ब्राह्मणानष्टौ [7]ऋत्विक्स्थाने नियोजयेत् ।**
**कर्ता पत्नीसमेतः सन्ब्राह्मणांस्त्रिःप्रदक्षिणम् ॥९॥**
**नमस्कारं [8]ततः कृत्वा [9]विज्ञाप्य परिषन्मुखम् ।**
**[10]पुण्याहं विधिवत्कृत्वा पञ्चगव्यं यथाविधि ॥१०॥**

[11] [पिष्टादिभिः सर्पादिकरणं तत्पूजनं च]

**शिष्टकर्माणि सर्वाणि [12]आचार्यप्रमुखैस्तदा ।**

---

[1] 'तद्दोषपरिहारार्थं शान्तिकर्म समाचरेत् ।
शान्तिहीनप्रतिष्ठा तु निष्फला द्रव्यनाशनम् ॥
तस्मात्सर्वप्रयत्नेन शान्तिपूर्वं यथाविधि ।
शुभे दिने सुनक्षत्रे सुलग्ने सुमुहूर्तके ॥
शान्तिकर्म तथा कृत्वा प्रतिष्ठां कारयेद्बुधः ।'
(**शान्तिकुसुमाकरे** पूर्वभागे पृ० १२)

[2] शान्तिस्थापन० — ल्ह, ए.

[3] प्रतिष्ठां कारयेदिति शेषः ।

[4] 'अथ विघ्नेश्वरं संपूज्य पूर्वोक्तप्रकारेण संकल्पं कुर्यात् ।
'विघ्नेश्वरमथोद्वास्य तं संप्रार्थ्य पुनः पुनः ।
वेदशास्त्रार्थतत्त्वज्ञमाचार्यं वरयेत्ततः ॥
तादृशब्राह्मणानष्टौ ऋत्विक्स्थाने नियोजयेत् ।'
अथ आचार्यः सकल्प्य, पुण्याहवाचनं कृत्वा, तेन जलेन यजमानं संप्रोक्ष्य पञ्चगव्यं पुण्याहजलं च पाययेत् । अथ यजमानो ब्राह्मणान्प्रदक्षिणीकृत्य, आचार्यमृत्विजश्च सर्पशान्तिकर्म कुरुध्वमिति प्रार्थयेत् ।'
(**शान्तिकुसुमाकरे** पूर्वभागे पृ. १५)

[5] शुभवारे — ए.

[6] सुमूत्तके — ल्ह.

[7] जपस्थाने — ए.

[8] तथा — ए.

[9] विज्ञाप्यं च ततो वदेत् — ए.

[10] संकल्प्य स्वस्य पुण्याहं — ल्ह.

[11] 'अथ आचार्यो यवतण्डुलचूर्णं प्रस्थत्रयपरिमितमेलालवङ्गकर्पूरचन्दनगोघृतैः संयोज्य, तेन पिष्टेन फणियुग्ममशीतिं फणिशिशून्, षष्टयुत्तरशतसर्पाण्डानि, बृहत्कालकूटं, वृश्चिकं, नक्रं, स्थूलकूटम् एतानि कृत्वा, रजतशूर्पे निधाय, पुष्पाक्षतान्गृहीत्वा ब्रह्मलोकादिषु संस्थितान् सर्पान्, सर्पशिशूंश्च आवाह्य षोडशोपचारपूजां कुर्यात् ।
अथ चतुरश्रं मण्डलं गोमयेनोपलिप्य, तदुपरि भारपरिमितान् व्रीहीन्, तदुपरि तदर्ध-

ततः परं प्रकर्तव्यं [1]संकल्पादि च पूर्ववत् ॥११॥
यवतण्डुलचूर्णं तु त्रिप्रस्थं गुलसंयुतम् ।
एलालवङ्ग[2]कर्पूरचन्दनैर्गोघृतैर्युतम् ॥१२॥
[3]संपेष्य तेन कर्तव्यं फणियुग्मं यथाविधि ।
अशीति[4]शिशवश्चैव षष्टयुत्तरशताण्डकम् ॥१३॥
कालकूटं तथैकं स्याद्वृश्चिकं [5]विषनक्रकम् ।
[6]स्थूलकूटं च विप्रेन्द्र [7]चत्वारिंशच्छतद्वयम् ॥१४॥
गोमयेनैव संलिप्य रङ्गवल्लीसमायुतम्[8] ।
अष्ट[9]द्रोणं तथा [10]व्रीहिं तण्डुलं च तदर्धकम् ॥१५॥
तदर्धं तिलमर्धार्धं[11] माषं चैव यथाविधि ।
एवं स्थण्डिलयुग्मे तु[12] धान्यराशिं निधाय च ॥१६॥
[13]तदूर्ध्वे कमलं लिख्य[14] कर्णिकालक्षणैर्युतम् ।
तन्तुना [15]वेष्टितौ कुम्भौ स्थण्डिलोपरि विन्यसेत् ॥१७॥
शुद्धोदकेन संपूर्य[16] [17]नवरत्नं निधाय च ।
आम्रशाखानालिकेरमूर्ध्वकूर्चं [18]सवस्त्रकम् ॥१८॥
प्रतिमायाश्च युग्मं तु सुवर्णेनैव कारयेत्[19] ।
[20]एकं रौद्रं तथा चान्यं वासुदेवं सनातनम् ॥१९॥
आवाह्य विधिवत्पूज्य उपचारैर्यथाक्रमम् ।

---

परिमितांस्तण्डुलान्, तदुपरि तदर्धपरिमितांस्तिलान्, माषांश्च निक्षिप्य, तत्र स्थानद्वयं कल्पयित्वा, तन्तुवेष्टितौ गङ्गादिजलपूर्णौ द्वौ कुम्भौ निधाय, आम्रपल्लवनालिकेरकूर्चवस्त्रहरिद्राकुङ्कुमाक्षतपुष्पैरलंकृत्य, वरुणमावाह्य, एकस्मिन् कुम्भे पलत्रयपरिमितस्वर्णनिर्मितां त्र्यम्बकरुद्रप्रतिमाम् अन्यस्मिन्कुम्भे तादृशीं लक्ष्मीनारायणप्रतिमां च निधाय 'त्र्यम्बकं' 'तद्विष्णो' रिति द्वाभ्यामावाह्य, षोडशोपचारपूजां कुर्यात् ।

(**शान्तिकुसुमाकरे** पूर्वभागे पृ० १५, १६)

[12] आचार्यस्य मुखात्ततः — ल; आचार्यः कुरुते .. — ए.

[1] संकल्प्यादि पूर्ववत् — ल; संकल्पं नान्दिपूर्वकम् — ए.

[2] ०कर्पूरं — ल.

[3] संपेष्टच — ल.

[4] ०शिवपश्चैव — ल.

[5] विळनं क्रमात् — ए.

[6] स्थूलकूटः — उभयतोमुखः सर्पविशेषः ।
(**शान्तिकुसुमाकरे** पूर्वभागे पृ० १५ टिप्पणी)

[7] द्विशतोर्ध्वं चतुर्विंशत् — ल; द्विशतोर्ध्वं चत्वारिंशत् — ए; 'चत्वारिंशदधिकशतद्वयम्' इति व्याख्येयम् ।

[8] ०वल्लीरलंकृतम् — ए.

[9] ०द्रोणस्तथा — ल, ए.

[10] व्रीहिः — ल, ए.

[11] तिलमर्धं च — ए.

[12] ०युक्तेषु — ल; ०युग्मेषु — ए.

[13] तदूर्ध्वं — ए.

[14] लिखित् — ल; लिख्या — ए.

[15] वेष्टितं कुम्भं — ल, ए.

[16] पूर्यत्ति — ल; संपूर्या — ए.

[17] विष्णुकूर्चं च निक्षिपेत् — ल.

[18-19] कृत्वा तत्तत्कुम्भोपरि न्यसेत् — ल.

[20] एके रुद्रं तथा चान्ये — ल.

[1][रुद्रकुम्भे वेदादिमन्त्रजपः]

रुद्रकुम्भे च [2]वेदादीञ्शतरुद्रीयमेव[3] च ॥२०॥
[4]पवमानं च [5]भूसूक्तमाशुःशिशानमेव[6] च ।
[7]महासौरं [8]बृहत्साम [9]राथन्तर्यं यथाक्रमम् ॥२१॥

[विष्णुकुम्भे वेदादिमन्त्रजपः]

विष्णुकुम्भे [10]च [11]वेदादीन्विष्णुसूक्तं[12] तथैव च ।
[13]श्रीसूक्तं [14]पुरुषसूक्तं च [15]महानारायणं तथा ॥२२॥
[16]वरुणसूक्तं [17]वालखिल्यम[18]ब्लिङ्गं च तथैव च ।
एतानि सूक्तमन्त्राणि [19]रुद्रविष्ण्वोस्तथा जपेत् ॥२३॥

---

[1] [रुद्रकुम्भे विष्णुकुम्भे च वेदादिमन्त्रजपः होमश्च]

'अथ आचार्यः ऋत्विजश्च रुद्रकुम्भसमीपे स्थित्वा, कुम्भं स्पृशन्तो वक्ष्यमाणान्मन्त्राञ्जपेयुः । ते मन्त्राः वेदादयः, शतरुद्रीयम्, चमकम्, पवमानानुवाकः, आशुश्शिशानः, रुद्रसूक्तम्, दुर्गासूक्तम्, ऐन्द्राग्नम्, वायव्यम्, महासौरम्, बृहत्, रथन्तरम्, बृहद्रथन्तरम्, रथन्तरबृहत्, एतानि सामानि च ।'

'विष्णुकुम्भसमीपे तु विष्णुसूक्तं, श्रीसूक्तं, भूसूक्तं, पुरुषसूक्तम्, उत्तरनारायणं, वसुसूक्तं, वालखिल्यम्, आदित्यसूक्तं, घृतसूक्तं, ब्रह्मसूक्तं, सोमसूक्तं, वरुणसूक्तं पञ्चशान्तीश्च जपेयुः ।'

'अथ कुम्भयोः पश्चिमभागे स्वगृह्योक्तविधिना अग्निं प्रतिष्ठाप्य, मुखान्तं कृत्वा, पालाशसमिद्भिरन्नेनाज्येन च बृहत्तदित्यादिभिः षड्भिर्मन्त्रैः पृथक् पृथग् अष्टोत्तरशतं जुहुयात् ।'

(**शान्तिकुसुमाकरे** पूर्वभागे पृ० १६)

[2] वेदादिः — ल.

[3] **तै० संहिता** ४.५.

[4] पावमानं — ए; **ऋक्संहिता** मण्डलम् — ९.

[5] **तै० संहिता** १.५.३.१.

[6] **तै० संहिता** ४.६.४.१; ०माशुरीशानमेव च — ल.

[7] महासौरं सूर्यसूक्तम् । **तै० संहिता** ३.४.११.

[8] बृहत्सामं — ल; **सामवेदे** ८०९.

[9] वामदेव्यं रथन्तरम् — ए; **सामवेदे** ६८०.

[10] तु — ए.

[11] वेदादिर्विष्णु — ल.

[12] **तै० संहिता** १.२.१३.

[13] श्रीरुद्रं — ल; पुरुषसूक्तं च श्रीसूक्तं — ए; **ऋग्वेदे** पञ्चममण्डलस्यान्ते विद्यमानः खिलभागः ।

[14] **तै० आरण्यके** ३.१२.

[15] **तै० आरण्यके** १०.१३.

[16] वसुसूक्तं — ए; **तै० आरण्यकम्** १०.१.

[17] तथाब्लिङ्गं — ए; **ऋक्संहिता** ८.४९–५९.

[18] लिङ्गं च वारुणम् — ल; वारुणं सूक्तमेव च — ए;

अब्लिङ्ग – 'आपो हिष्ठा' इत्यादिसूक्तम् (**तै० संहिता** ५.६.१.)

[19] विष्णुकुम्भे तथा जपेत् — ल.

[होमः]

[1]कुम्भयोः पश्चिमे भागे [2]अग्निकार्यं समारभेत्।
[3]स्वसूत्रोक्तविधानेन मुखान्तं होममाचरेत्॥२४॥
[4]बृहत्तदादिषड्ऋग्भिः पालाश[5]समिधापि च।
अन्नेन च घृतेनापि[6] अष्टोत्तरशतं हुनेत्॥२५॥

[7]तत्र होममन्त्राः —

[8]बृहत्तदादि[9] वसुधा प्राप्यया पुरुषाधमात्[10]।
[11]निवार्य [12]पूर्वजं दोषं [13]जीवपुत्रं [14]च दापय स्वाहा।
[15]वसुधाया इदं [न मम]॥१॥
[16] बृहद्रुभि महत्तरं शुचिरिन्द्रोऽपि सत्वरम्।
पूर्वस्मिन्संचितं दोषं विध्वंसय विभञ्जय स्वाहा।
इन्द्रायेदं [न मम]॥२॥
बृहन्नादो बृह[17]त्तेजो विश्वरूपो विराट्प्रभुः।

---

[1] कुम्भश्च — ए.
[2] प्रतिष्ठाप्य हुताशनम् — ए.
[3] स्वसूक्तोक्त० — ल, ए.
[4] बृहत्वादादि — ए.
[5] समिधो हुनेत् — ए.
[6] घृतेन च — ल; घृतेनैव — ए.
[7] 'ल' मातृकायां 'तत्र होममन्त्राः' इति न दृश्यते।; ततः — ए.
[8] 'बृहत्तदादि वसुधा प्राप्यया पुरुषाधमात्।
निवार्य पूर्वजं दोषं जीवपुत्रं च दापय स्वाहा।
वसुधाया इदं न मम।
बृहद्रुभि महत्तरं शुचिरिन्द्रोऽपि सत्वरम्।
पूर्वस्मिन्संचितं दोषं विध्वंसय विभञ्जय स्वाहा।
इन्द्रायेदं न मम।
बृहन्नादो बृहत्तेजो विश्वरूपो विराट् प्रभुः।
पुरा संचितदोषस्य लयं कुरु महेश्वर स्वाहा॥
विराड्रूपिणे रुद्रायेदं न मम।
हिरण्मयो वेदमयश्चतुर्वक्त्रः प्रजापतिः।
आदिशेषादिसर्पाणां विषं शमयतु स्वाहा॥
प्रजापतय इदं न मम।
शीर्षण्वती लोकमयी दंष्ट्रास्या पिशिताशना।
महिषध्वंसिनी दुर्गा मम पापं व्यपोहतु स्वाहा।
दुर्गाया इदं न मम।
तमोध्वंसी जगच्चक्षुः कालाशी कमलप्रियः।
कालान्तरार्जितं दोषं कालरूपी व्यपोहतु स्वाहा।
सूर्यायेदं न मम।'
(शान्तिकुसुमाकरे पूर्वभागे पृ० १६)
[9] बृहत्तदा — ल; बृहत्वादो — ए.
[10] वसुदो यो निवार्य पुरुषोत्तमः — ए.
[11] अनिवार्यं त्विदं दोषं — ए.
[12] पूर्वभद्दोषं — ल.
[13] नवपुत्रं च — ल.
[14] ददातु मे — ए.
[15] वसुधायेदु — ल; वसुदेवायेदं — ए.
[16] बृद्रं हि महत्तरं — ल; सहस्राक्षो महानिन्द्र अहिहा च शचीपतिः। अहिसंहारदोषं मे विध्वंसय — ए.
[17] ०त्तेज स्वपीस विराट् — ल; तेजस्सुरूपी वसुदः प्रभुः — ए.

[1]पुरा संचितदोषस्य [2]लयं कुरु महेश्वर स्वाहा।
विराड्रूपिणे[3] रुद्रायेदं [न मम]॥३॥
हिरण्मयो[4] वेदमयश्चतुर्वक्त्रः प्रजापतिः[5]।
आदिशेषादिसर्पाणां[6] दोषं शमयतु प्रभुः स्वाहा॥
प्रजा[7]पतय इदं [न मम]॥४॥
[8]शीर्षण्वती लोकमयी दंष्ट्रास्या पिशिताशना[9]।
महिषध्वंसिनी दुर्गा मम पापं व्यपोहतु स्वाहा।
[10]दुर्गाया इदं [न मम]॥५॥
[11]तमोध्वंसी जगच्चक्षुः [12]कालाशी कमलप्रियः।
[13]कालान्तरार्जितं दोषं कालरूपी व्यपोहतु स्वाहा।
[14]सूर्यायेदं [न मम]॥६॥

[15][होमशेषः पिष्टसर्पादीनां प्राणप्रतिष्ठादिसंस्कारः]

[16]एवमन्त्रेन चाज्येन हुत्वा [शेषं समापयेत्।]
ऊर्ध्वकर्माथ निर्वृत्य[17] शान्तिस्तोत्रं तथा पठेत्॥२६॥
पिष्ट[18]सर्पाञ्शिशूंश्चैव [19]पिष्टाण्डान्पुरतो न्यसेत्।

---

[1] पूर्व — ए.
[2] लं कुर्यान्म० — ए.
[3] विराड्रूपि — ल; 'विराड्रूपिणे' इति 'ए' मातृकायां न दृश्यते।
[4] शीर्षण्वतो — ल; सहस्रशीर्षो — ए.
[5] प्रजासृजः — ल.
[6] आदिभार्जतसर्पस्य — ल; अहिसंहारसंभूतं — ए.
[7] ०पत इदं — ल.
[8] वज्र षडत्र तिलोमथासत् पिशिता० — ल; वज्रधारी लोकमाता पिशिता० — ए.
[9] पिशिताशिनी — ल; पिशिताशननाशिनी — ए.
[10] 'ल' मातृकायां 'दुर्गाया इदं' इति नास्ति।
[11] 'तमोध्वंसी, इत्यारभ्य 'स्वाहा' इत्यन्तं 'ल' मातृकायां न दृश्यते।; तम ध्वंसी — ए.
[12] कालात्मा — ए.
[13] मया चिरार्जितं — ए.
[14] 'ए' मातृकायां 'सूर्यायेदं' इति नास्ति।
[15] अथ आचार्यः स्विष्टकृज्जयादिहोमशेषं समापयेत्। अथ शूर्पमग्नेः पुरतो विन्यस्य यजमानः, "एतु पूर्वमृतः सर्पः अस्मिन्पिष्टे समाविशेत्।
संस्कारार्थं महाभक्त्या प्रार्थयामि समाहितः॥
ज्ञानतोऽज्ञानतो वापि कृतः सर्पवधो मया।
संस्कारं कुर्वतो भक्त्या मम दोषो विनश्यतु॥"
इति प्रार्थयेत्।
'कुशेनैवाथ संस्पृश्य असुन्वन्तं ततो जपेत्।
प्राणान्क्रमेण संस्थाप्य बलिं कृत्वा विधानतः॥
अध्वर्युस्तानथोद्वास्य नदीतीरं ततो व्रजेत्।
शुद्धभूमौ गन्धकाष्ठैश्चितिं कृत्वा विधानतः।
रुद्रकुम्भोदकेनैव प्रोक्षयेत्तां चितां ततः॥
होमाग्निना दहेत्पश्चाद्रुद्रकुम्भेन सेचयेत्।
तद्भस्म सर्वमादाय महानद्यां विनिक्षिपेत्॥'
(**शान्तिकुसुमाकरे** पूर्वभागे पृ० १७)
[16] एवमन्त्रेनाज्येन — ल; 'ए' मातृकायां २६ श्लोकस्य स्थाने 'होमशेषं समाप्याथ पञ्चशान्ति जपेन्नरः।' इत्येकमेवार्धं दृश्यते।
[17] ऊर्ध्वतन्तुं निवृत्त्याथ — ल.
[18] ०सर्पशिशुं चैव — ल.
[19] पिण्डाण्डं — ए.

कुशेनैवाथ संस्पृश्य [1]असुन्वन्तं तथा जपेत् ॥२७॥
[2]मानस्तोके ततो जप्त्वा [3]नमो अस्तु [4]त्रिभिर्जपेत् ।
प्राणान्क्रमेण संस्थाप्य चितिं कृत्वा विधानतः ॥२८॥
[5]चितोपरि विनिक्षिप्य [6]अब्लिङ्गैर्मार्जयेत्ततः ।
होमाग्निना दहेत्पश्चाद्रुद्र[7]कुम्भेन सेचयेत् ॥२९॥
[8]तद्भस्म सद्य आदाय महानद्यां विनिक्षिपेत् ।

[9][सपत्नीकस्य यजमानस्य विष्णुकुम्भाभिषेकः]

तत्र स्नात्वा शुचिर्भूत्वा [10]स्वपत्न्या सहितस्तदा ॥३०॥
ब्राह्मणान्भोजयेद्भक्त्या आचार्यं च यथाविधि ।
विष्णुकुम्भोदकेनैव मार्जयेद्वारुणादिभिः ॥३१॥
[11]तत्पश्चादभिषेकः[12] स्यात्सर्पशाप[13]निवृत्तये ।

[14][आचार्यादिपूजा]

प्रतिमाभ्यां सवस्त्राभ्यामाचार्यं पूजयेत्सुधीः ॥३२॥
पयस्विनीं च गां दद्यात्सर्पशापविमुक्तये ।

---

[1] सुनुन्तन्तं — ल; असुन्वन्तस्तथा — ए; तै० **संहिता** ४.२.५.१०.

[2] पुनर्मनस्ततो — ल; तै० संहिता ३.४.११.८.

[3] **तै० संहिता** ४.२.८.७;

[4] त्रियं जपेत् — ए.

[5] चित्योपरि — ल.

[6] मर्जयेदत लिङ्गकैः — ल; अब्लिङ्गानि 'आपो हि ष्ठा' इत्यादिसूक्तानि ( **तै संहिता** ५.६.१).

[7] ०कुम्भाभिषेचयेत् — ल.

[8] तद्भस्मास्थि समादाय — ए.

[9] 'ततः स्नात्वा, शुचिर्भूत्वा, आमेन हिरण्येन वा गुलिकश्राद्धं कृत्वा, पत्न्या सह गृहं व्रजेत् ।

"विष्णुकुम्भोदकेनाथ मार्जयेद्वारुणादिभिः ।" प्रोक्षणमन्त्राः "आपोहिष्ठ, हिरण्यवर्णाः, पवमानः, हिरण्यशृङ्गम्, उदुत्तमम्, तरणिः, आप्यायस्व, आप उन्दन्तु, आपो वै, आशुश्शिशानः, जातवेदसे, इन्द्रस्तरस्वान्, पीवोन्नाम्, शुचिन्नु स्तोमम्, इत्यनुवाकाः, प्रातरग्निम्, पञ्च शान्तयः, घोषशान्तिः, महासौरम्, आपो वा इदमग्रे सलिलमित्यनुवाकः, देवस्य त्वा" इति ।

ततो विष्णुकुम्भोदकेन सपत्नीकं यजमानमाचार्यः स्नापयेत् ।'

(**शान्तिकुसुमाकरे पूर्वभागे** पृ० १७, १८)

[10] स पत्न्या — ल.

[11] तत्पादभिकं स्यात् — ल.

[12] भिषेकं — ए.

[13] ०विमुक्तये । — ए.

[14] 'अथ यजमान आचार्यं पूजयित्वा, कलशवस्त्रप्रतिमादीनि दत्त्वा, ऋत्विग्भ्यो दक्षिणां दत्त्वा, अभ्युदयं कृत्वा, पुण्याहं वाचयित्वा ब्राह्मणान्भोजयेत् ।'

(**शान्तिकुसुमाकरे पूर्वभागे** पृ० १८)

दीपदानं प्रकर्तव्यमाचार्याय विशेषतः ॥३३॥
दशदानं प्रकुर्वीत ब्राह्मणेभ्यः प्रदापयेत्।
ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभ्युदयपूर्वकम्[1]॥
सर्पशान्तिमहत्त्वाच्च जीवत्पुत्रं लभेद्ध्रुवम् ॥३४॥

इति रौरवागमे क्रियापादे सर्पशान्तिविधिः द्विपञ्चाशः पटलः।

---

[1] ०दक्षिणाभ्याभिपूर्वकम् — ल.

## त्रिपञ्चाशः पटलः

### [1] दिनशान्तिकल्पे वास्तुशान्तिशान्तिहोमदिशाहोममूर्तिहोम-जपशान्तिविधिः

#### [वास्तुशान्तिः]

[अतः] परं प्रवक्ष्यामि वास्तु[2]शान्तिं क्रमेण तु ।
जलसंप्रोक्षणे चैव वास्तुहोमं तु कल्पयेत् ॥१॥
वर्तमाने तु काले[3] चाप्युदयाद्युदयान्तके[4] ।
जलसंप्रोक्षणं कृत्वा वास्तुदेवांस्तु[5] पूजयेत् ॥२॥
आलयादिषु सर्वेषु [6]मार्जनं प्रोक्षणं ततः ।
गोमयेनोपलिप्याथ पञ्चगव्यं तु सेचयेत् ॥३॥
नित्यं संपूज्य विधिवत्तत्काले दोषसंभवे[7] ॥
शीघ्रं [8]शान्तिः प्रकर्तव्या [9]न्यायेनानेन कारयेत् ॥४॥
जपशान्तिं होमशान्तिं वास्तुशान्तिं पृथक् पृथक् ।
[10]तुरदोषे तु [11]हर्म्येऽथ वास्तुशान्तिं प्रकल्पयेत् ॥५॥
अन्यथा [12]दोष उद्भूते जपशान्तिं च कारयेत् ।
[13]मृद्भाण्डानि विसृज्याथ तैलाज्यादिकपात्रकम्[14] ॥६॥
जलभाण्डं विसृज्याथ [15]दारुपात्रं तु शोधयेत् ।

---

[1] अयं पटलः आर. इ. २५१९८ तालपत्रकोशे १५९-१६१ पत्रेषु दृश्यते। वास्तुशान्तिविषये अंशुमत्काश्यपे ३; अंशुमदागमे ७; अचिन्त्यविश्वसादाख्ये ५०; अजिते ८; पूर्वकामिके १७, १९, ३४; पूर्वकारणे ३, ५६; उत्तरकारणे १०; दीप्ते १९; सुप्रभेदे क्रियापादे २७ पटला द्रष्टव्याः। शान्तिहोमादिविषये उत्तरकामिके ३०; पूर्वकारणे १४४; उत्तरकारणे ४५, ४६, ४८; योगजे २२; वीरे ५५, ५६ पटला द्रष्टव्याः।

[2] दिनशान्तिक्रमेण – ऐ.

[3] कालं — ऐ.

[4] व्यान्तकम् — ऐ.

[5] देवं तु — ऐ.

[6] मार्जनप्रोक्षणं — ऐ.

[7] दोषमुद्भवम् — ऐ.

[8] शान्तिप्रकर्तव्यं — ऐ.

[9] न्याये न्यायेन — ऐ.

[10] तुरदोषेण — ऐ.

[11] हर्म्याथ — ऐ.

[12] दोषमुद्भूतं — ऐ.

[13] 'मृत्पात्रमग्निना दग्धं शङ्खातः शुध्यतेऽत्र हि। तक्षणाद्दारवं पात्रं लौहं क्षाल्याश्मताडनात् ॥' (मतङ्गपारमेश्वरे चर्यापादे ६. १९ उ०, २० पू०)

[14] ०ज्यादीनि पात्रकम् — ऐ.

[15] दारुपात्रेण शो० — ऐ.

**पाषाणपात्रसंयुक्तं भूमिस्थाने तु योजयेत् ॥७॥**
**गन्धकाष्ठादिसंयुक्तं सेचयेत्पञ्चगव्यकैः ।**
**[१] तण्डुलादिषु सर्वेषु पुण्याहप्रोक्षणं कुरु ॥८॥**
**दिन [२] शान्तिः प्रकर्तव्या तत्काले शान्तिमाचरेत् ।**
**अथवा द्रव्यहीने तु [३] पञ्चगव्येन होमयेत् ॥९॥**
**पलाशसमिधा हुत्वा चाज्येन चरुणाहुतिम् [४] ।**
**द्रव्यं प्रति विशेषेण षोडशाहुतिमाचरेत् [५] ॥१०॥**
**शुद्धान्नं सर्वदेवानां बलिं दद्याद्विशेषतः ।**

## [६] [वास्तुबलिविधिः]

**अथ वास्तुबलिं देवानाहुतीश्च [७] शृणु क्रमात् [८] ॥११॥**
**ब्रह्माणं मध्यमे पूज्य दशाहुतिमथाचरेत् ।**
**[९] समर्यादींश्चतुर्दिक्षु [१०] [११] भवेत् पूर्ववदाहुतिः ॥१२॥**
**[१२] आपाद्यष्टकमूर्तीनामष्ट अष्टाहुतीर्हुनेत् ।**
**[१३] ईशाद्द्वात्रिंशदेवानां [१४] पञ्च पञ्चाहुतीर्हुनेत् [१५] ॥१३॥**
**[१६] चरक्याद्यष्टमूर्तीनामेकाहुतिमथाचरेत् ।**

---

[१] तण्डुलादीनि सर्वाणि — ऐ.

[२] ०शान्तिप्रकर्तव्यं — ऐ.

[३] ०हीनं तु — ऐ.

[४] चरुणाहुति — ऐ; अत्र कुर्यादिति शेषः ।

[५] एतदनन्तरं ११ श्लोकस्योत्तरार्धात् प्रभृति वास्तुशान्तिप्रस्तावस्य दर्शनात् लेखकेन केनचित् वास्तुमण्डलसंबन्धिश्लोकद्वयं मातृकायां लिखितमिव भाति। श्लोकद्वयमिदं मयमते सप्तमाध्याये दृश्यमानश्लोकद्वयस्य (५७-५८) अर्थतः सदृशं न शब्दतः। तदिदं श्लोकद्वयं प्रकृतेऽप्रसक्तमितीह टिप्पण्यां दीयते।

अष्टांशांशे कस्य घस्तन्मुखाना-
मिष्टं गांशं व्यञ्जनं षोडशानाम् ।
अष्टानां कः षोडशानां खभागं
मण्डूकाख्ये स्थण्डिले तैतिलेषु ॥
परमशायिपदे नव मध्यमे
नलिनं लिख्यं विधिं तु समर्चयेत् ।
रसपदाश्च सदिक्षु विदिक्षु वै
परिवृता पदमेकसुवास्तुना ॥

[६] एतस्मिन्विषये अजिते ८.२२-३१ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[७] ०नाहुतिं च — ऐ.

[८] हुने क्रमात् — ऐ.

[९] सूर्यादी चतुर्दिक्षु — ऐ.

[१०] अत्र 'पूज्य' इत्यध्याहार्यम् ।

[११] पूर्वमेवाहुतिर्भवेत् — ऐ

[१२] आपाद्य अष्टमूर्तीनामष्टा अष्टाहुति — ऐ.

[१३] ईशाद्वात्रिश — ऐ; ईशात् — ईशादारभ्य इत्यर्थः ।

[१४] द्वात्रिंशद्देवानाम् इत्यत्र द्वात्रिंशदेवानाम् इति प्रयोगो वृत्तार्थः ।

[१५] ०हुतिं हुनेत् — ऐ.

[१६] चरक्यामष्ट — ऐ.

## वास्तुमण्डलम्

### मण्डूकपदम्



श्लो १४ उ०–२०

## [1][वास्तुदेवपूजा होमश्च]

मण्डूकस्य पदं लिख्य तिलैर्लाजैश्च शोभितम् ॥१४॥
कोष्ठं प्रति न्यसेद्दर्भत्रयं[2] तस्य प्रमाणतः ।
प्रमाणं चैव कोष्ठानां प्रत्येकं चतुरङ्गुलम् ॥१५॥
ब्रह्माणं मध्यमे पूर्वं पूजयेद्देशिकोत्तमः ।
पाद्यमाचमनं चार्घ्यं गन्धपुष्पसुधूपकैः ॥१६॥
दीपैश्च परमान्नं तु चरुं तस्य निवेदयेत् ।
[3]समर्यपिशचरकीस्कन्दादींश्च तथैव च ॥१७॥
ब्रह्मपञ्चा[4]वृतान्येवमर्चयेत्तु यथाक्रमम् ।
वास्तुकुम्भं तथैशान्ये विधिवत्स्थापयेत्सुधीः ॥१८॥
वास्तुब्रह्मादिदेवादीन्[5] कुम्भमध्ये समर्चयेत् ।
[6]द्रव्यं प्रति विशेषेण वास्तुमन्त्रेण होमयेत् ॥१९॥
अथवा द्रव्यहीने तु गव्यदूर्वाचरून्हुनेत्[7] ।
तत्काले शान्तिशुद्ध्यर्थं मण्डूकपदमुत्तमम् ॥२०॥

---

[1] अस्मिन्विषये **अजिते** ८.३५-४३ श्लोकास्तदीय-टिप्पणी च द्रष्टव्याः ।

[2] ०द्दर्भैस्त्रयं — ऐ.

[3] सूर्यादापात्स्वमीशानं शरक्या स्कन्दमादिषु — ऐ; अत्र 'द्वन्द्वान्ते श्रूयमाणं प्रत्येकमभिसंबध्यते' इति न्यायेनादिशब्दस्य प्रत्येकमन्वयः ।

[4] ०वृतान्तेव अर्चये० — ऐ.

[5] ०देवाभ्यां — ऐ.

[6] 'पाद्यमाचमनं चार्घ्यं गन्धपुष्पं च धूपकम् ।
बलिनैवेद्यताम्बूलं पुष्पमर्घ्यं प्रणम्य च ॥
स्वनाममन्त्रैरभ्यर्च्य दद्याद्दध्योदनं बलिम् ।
कुक्कुटाण्डप्रमाणेन बलिमेकं प्रदापयेत् ॥
नमोऽन्तं बलिर्निर्दिष्टः स्वाहान्तेनैव होमयेत् ।
बलिमण्डलमैशान्यां स्थण्डिलं शालिना कुरु ॥
लाजैः पुष्पैस्तिलैर्दर्भैः पञ्चचूर्णैरलंकृतम् ।
सकूर्चमुदकोपेतं सवस्त्रं सहिरण्यकम् ॥
पलाशपल्लवोपेतं नारिकेलफलैर्युतम् ।
संस्थाप्य वास्तुकुम्भं तु परिवारघटं विना ।
अर्चयेद्गन्धपुष्पाद्यैः कलशस्थापनोक्तवत् ।
ब्रह्मादिवास्तुदेवानां समभ्यर्च्य स्वनामतः ॥
नैवेद्यं दापयेत्तत्र धूपदीपादिकं ददेत् ।
बलिमण्डलपूर्वे तु अग्निकार्यं समाचरेत् ॥
आधानादिविवाहान्तमग्निकार्योक्तमार्गतः ।
वह्निमध्ये विशेषेण कल्पयेदासनं क्रमात् ॥
ब्रह्मादिवास्तुदेवानां समभ्यर्च्य विशेषतः ।
दशाहुतिं प्रधानस्य अन्येष्वेकैकमाहुतिम् ॥
पलाशसमिधा चैव हुत्वा ब्रह्मादिमन्त्रतः ॥
त्रयाधिकं च पञ्चाशद्देवताभ्यः स्वनामतः ।
घृतं तत्संख्यया हुत्वा चरुं तत्संख्यया तथा ॥
तण्डुलं तिलमिश्रेण हुत्वा तत्संख्यया बुधः ।
द्रव्यान्ते व्याहृतिं हुत्वा महास्त्रेण शतं हुनेत् ॥
सर्वद्रव्यं तु संगृह्य स्विष्टकृद्धोममाचरेत् ।
जयादिरभ्यातानं च राष्ट्रभृच्च क्रमाद्धुनेत् ॥
समिदाहुतिं च जुहुयाद्व्याहृतीभिस्तदा हुनेत् ।
यदस्य कर्मणश्चेति हुनेत्पूर्णाहुतिं पुनः ॥'
**अंशुमदागमे** — ७.१७ उ० — ३०.

०चरुंहुनेत् — ऐ.

[1] [पर्यग्निकरणम्]

**अश्वत्थपत्रसंयुक्तं शुष्कदर्भेण संयुतम् ।**
**[2] तिलं सिक्तं तु [3] बद्धाज्ये बाहुमात्रप्रमाणकम् ॥२१॥**
**पर्यग्निकरणं कृत्वा गर्भगेहादिमण्डपे ।**
**सर्वत्र सेचयेद्गव्यं [4] घण्टाघोषसमन्वितम् ॥२२॥**
**व्यपोह्य निर्ऋतिदेशे तु स्नानं कृत्वा विधानतः ।**
**सकलीकरणं कृत्वा शान्तिहोमेन शाम्यति ॥२३॥**
**जलसंप्रोक्षणं चैव शान्तिहोमेन शाम्यति ।**

[5] [शान्तिहोमः]

**शान्तिहोमं प्रवक्ष्यामि नित्यशान्तौ विशेषतः [5] ॥२४॥**

---

[1] 'दर्भैः पलाशपत्रैश्च शोषितैर्बन्धयेद्बुधः ।
तदग्नौ दीपयित्वा तु प्रासादं मण्टपं तथा ।
प्राकारं गोपुरस्थानं पर्यग्निकरणं कुरु ।
बाह्ये तदग्निमुद्वास्य स्थापितैस्तु जलैर्बुधः ॥
सर्वत्र प्रोक्षयेद्विद्वाञ्शुची वो हव्यमन्त्रतः ।
(**अंशुमत्काश्यपे** ३.१५ उ०–१७);
'अश्वत्थोदुम्बरान्ब्रह्मपत्राञ्शुष्कान् सदर्भकैः ।
तद्वास्तुशोधनं बध्वा सिद्धार्थं तिलसंयुतम् ॥
वह्निस्थं च पदस्थं च कुम्भस्थं हृदये यजेत् ।
तद्वास्तुशोधनं ग्राह्य संप्रोक्ष्य हृदयेन तु ।
तदग्रे वह्निमारोप्य संप्रज्वाल्याग्निबीजतः ॥
प्राकाराभ्यन्तरादीनि भवनं यागमण्टपम् ।
जयघण्टारवोपेतं पर्यग्निकरणं कुरु ॥
पञ्चगव्येन संप्रोक्ष्य हृदयेन तु मन्त्रतः ।
वास्तुकुम्भस्थतोयेन शुद्धैरुत्थेति मन्त्रतः ॥
प्रोक्षयेत्तु विशेषेण उल्कां त्यक्त्वाथ तद्बहिः ।
स्नानं कुर्याद्विधानेन मार्जनं प्रोक्षणं कुरु ॥
(**अंशुमदागमे** ७.३१–३६ पू०);
पलाशोदुम्बराश्वत्थपत्रशुष्कान्सदर्भकैः ।
बध्वाज्येन सदा सिक्त्वा तिलसिद्धार्थदर्भयुक् ॥
संप्रोक्ष्य हृदयेनैव संप्रज्वाल्य तदग्निना ॥
प्राकाराभ्यन्तरं सर्वं भवनं यागमण्टपम् ॥
पर्यग्निकरणं कृत्वा वर्धन्यास्रावतोययुक् ।
उल्कां त्यक्त्वा तु तद्बाह्ये स्नानं कुर्याद्विशेषतः ।
जलभाण्डस्थतोयेन सर्वत्र प्रोक्षयेद्बुधा ।
(**पूर्वकारणे** ५६.३० उ०–३३);
'पर्यग्निकरणं वक्ष्ये याज्ञिकवृक्षसंभवम् ।
पलाशपर्णशाखां च आबध्य घृतसेचनम् ॥
वस्त्रमाच्छादनं कृत्वा पापदेवं समर्चयेत् ।
पञ्चवक्त्रं चतुर्बाहुं दशश्रोत्रं सुनासिकम् ॥
कृष्णवर्णं महाभीमं रक्तदृष्टिभयंकरम् ।
दंष्ट्राकरालवदनं भ्रुकुटीमुखभीषणम् ॥
महापापकरूपं तु ध्यायेन्मन्त्रैश्च पूजयेत् ।
कुण्डाग्निज्वलनं शीर्षे स्पर्शाहुतिं समाचरेत् ॥
पञ्चब्रह्मषडङ्गैश्च विमुखार्घ्यं समाचरेत् ।
परिचारकमाहूय गन्धवस्त्रैरलंकृतम् ॥
पाददेशात्समादाय यत्र स्नानं समाचरेत् ।
तावत्संशोधयेत्पश्चादैशान्ये विसृजेच्छुचिः ॥
गव्येन प्रोक्षयेत्पश्चाच्छान्तिहोमं समाचरेत् ।'
(**उत्तरकारणे**, ४५.१६–२२ पू०)

[2] सितसित्तं तु — ऐ.

[3] बध्वाज्यं — ऐ.

[4] खण्डघोष० — ऐ.

[5] 'शान्तिहोममहं वक्ष्ये शृणुष्वैकाग्रमानसः ।
सदाशिवादिदेवानां परिवाराणां तथैव च ॥
प्राकाराभ्यन्तरे देवस्वनामाद्यैश्च होमयेत् ।

नित्यपूजाप्रकारेण नित्यपूजां समर्चयेत् ।
तत्काले दोष उद्भूते[१] तत्र शान्तिं समाचरेत् ॥२५॥
मार्जनप्रोक्षणं कृत्वा शिवाग्रे च विशेषतः ।
गोमयालेपनं कृत्वा चतुःसंस्कारसंयुतम् ॥२६॥
शालि[२]स्थण्डिलं संकल्प्य तदूर्ध्वे लाजयुक्तकम् ।
तन्मध्ये [३]कुम्भं संस्थाप्य वर्धनीं तस्य वामके ॥२७॥
इन्द्रादीशानपर्यन्तं परिवारं तु[४] पूजयेत् ।
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥२८॥
अश्वत्थसमिधा चैव पञ्चगव्यं तु होमयेत् ।
द्रव्यं प्रति विशेषेण षोडशाहुतिमाचरेत् ॥२९॥
जयाद्यादि विशेषेण नित्यशान्तौ[५] समाचरेत् ।
तुर[६]कार्ये तु संयुक्तं युक्तायुक्तं विशेषतः ॥३०॥
शान्ति[७]होम इति प्रोक्तो दिशा[८]होमस्ततोच्यते[९] ।

[१०][दिशाहोमः]

दिशाहोममतो वक्ष्ये सद्यः प्रोक्षणमाचरेत् ॥३१॥
शिवाग्रे लेपनं कृत्वा दक्षिणे पश्चिमेऽपि वा ।
उत्तरे तु विशेषेण लेपयेत्तु क्रमेण तु ॥३२॥
पूर्वे शालिं[तु]संस्थाप्य पद्ममष्टदलं लिखेत् ।
शिखरे [११]पूर्वदेवो यस्तद्देवकुम्भमाचरेत् ॥३३॥
दक्षिणे दक्षिणामूर्ति[१२] लिङ्गोद्भवं तु पश्चिमे ।
[१३]दुर्गां चाप्युत्तरे स्थाप्य चतुष्कुम्भं तु स्थापयेत् ॥३४॥

---

द्विगुणं पूजयेत्तत्र अर्चनोक्तक्रमेण तु ॥
शान्तिहोममिति प्रोक्तं सर्वदेवांश्च होमयेत् ।'
(योगजे २२.१–३ पू०)

[१] दोषमुद्भूतं — ऐ.
[२] ०स्थण्डिलसंकल्प्य — ऐ.
[३] कुम्भसं० — ऐ.
[४] परिवारेषु — ऐ.
[५] ०शान्तिर्विशेषतः — ऐ.
[६] ०शान्ति — ऐ.
[७] ०कार्येण — ऐ.
[८] ०होममिति प्रोक्तं — ऐ.
[९] ०होमं ततो — ऐ.
[१०] ततः-उच्यते-तत उच्यते। ततः संधिरार्षः।
[१०] 'दिशाहोमं ततः शृणु ।
इन्द्राद्यैशानपर्यन्तमष्टदिक्षु च देवताः ॥
स्थण्डिलं सैकतं कृत्वा चतुरश्रं समन्ततः ।
शेषाण्यन्यानि कार्याणि अग्निकार्योक्तमाचरेत् ॥
दिग्देवान्पूजयेत्तत्र दिशाहोमं तु पूजयेत् ॥
(योगजे – २२.८-१० पू०)
[११] पूर्वतन्देवं यद्देवं — ऐ.
[१२] ०मूर्त — ऐ.
[१३] दुर्गायामुत्तरे — ऐ.

राजोपचारवत्पूज्य प्रत्येकमग्निकार्यकम्।
अश्वत्थं पूर्वदिग्भागे [1]वञ्चुलां दक्षिणे तथा॥३५॥
अपामार्गं तु पश्चिम्यां[2] मायूरमुत्तरे तथा।
गोधूमं पूर्वदिग्भागे दक्षिणे पञ्चगव्यकम्॥३६॥
पश्चिमे दधिसंयुक्तमुत्तरे घृतसंयुतम्।
अभावे [3]सर्वतो द्रव्यमश्वत्थं पञ्चगव्यकम्॥३७॥
प्रत्येकं षोडशं हुत्वा तत्संख्याहुतिमाचरेत्।
एकयामे[4] प्रकर्तव्यं [5]द्वियामे द्विगुणं हुनेत्॥३८॥
अष्टोत्तरशतं हुत्वा दिनान्ते चैव होमयेत्।
अर्धयामे विशेषेण [6]द्विगुणं चैव होमयेत्॥३९॥
तत्तद्देवं तु संपूज्य तत्तत्कुम्भाभिषेचनम्।
[7]दिशाशान्तिक्रमः प्रोक्तो मूर्तिहोमं ततः शृणु॥४०॥

[8][मूर्तिहोमः]

दिनशान्तावथो[9] वक्ष्ये [10]मूर्तिं सद्यः समाचरेत्।
शिवाग्रे स्थण्डिलं कल्प्य नवकोष्ठं प्रकल्पयेत्॥४१॥
तन्मध्ये [11]कुम्भान्संस्थाप्य [12]सूत्रवस्त्रादिसंयुतम्।
देवताभिमुखं कृत्वा नालिकेरं तु विन्यसेत्॥४२॥

---

[1] वञ्चला — ऐ.
[2] पश्चिमायामित्यत्र 'पश्चिम्यां' इति प्रयोगः।; रौरवोत्तरे १४.७ पू० टिप्पणी द्रष्टव्या।
[3] सर्वत द्रव्यं — ऐ.
[4] ०यामं — ऐ.
[5] द्वियामं — ऐ.
[6] द्विगुणस्यैव — ऐ.
[7] ....नशान्तिक्रमं प्रोक्तं — ऐ.
[8] 'अथातः संप्रवक्ष्यामि मूर्तिहोमविधिक्रमम्।
पूर्ववद्यागमध्ये च वेदिकां चतुरश्रकाम्॥
तत्पूर्वे कुण्डमेवोक्तं स्थण्डिलं वा प्रकल्पयेत्।
धान्यपुञ्जैरलंकृत्य पद्ममष्टदलं लिखेत्॥
शिवकुम्भं न्यसेन्मध्ये वर्धनीं वामपार्श्वके।
वज्रादि दिशि कुम्भांश्च स्थापयेत्पूजयेत्क्रमात्॥
अघोरास्त्रं समभ्यर्च्य रथाङ्गांश्च दशायुधान्।
आवाह्य गन्धपुष्पैश्च नैवेद्यं धूपदीपकम्॥
अग्निं पूर्ववदाराध्य अघोरास्त्रं समर्चयेत्।
आज्येन होमयेत्पश्चात्पलाशाद्यैर्हुनेत्ततः॥
क्षीरेण सहितं चैव तथैव तिलहोमकम्।
दूर्वायुक्तं हुनेच्चैव पयसा मिश्रितं हुनेत्॥
मधुयुक्तं घृतं क्षीरमिश्रितं चरुं होमयेत्।
सहस्रादि शतान्तं च यथाशक्त्या हुनेत्ततः॥
दशांशं होमयेच्चैव पूर्णाहुतिं समाचरेत्।
घटे संयोजयेत्पश्चादग्निमुद्वासयेत्ततः॥
प्रधानघटमादाय अम्भसा प्रोक्षयेदिति।
सर्वशान्तिकरं पुण्यं सर्वाभीष्टफलप्रदम्॥
सर्वव्याधिप्रशमनं सर्वदोषनिवारणम्।'
(उत्तरकारणे ४८.१-१० पू०)
[9] ०शान्तिमथो — ऐ.
[10] अत्र मूर्तिरित्यनेन मूर्तिहोमो लक्ष्यते।
[11] कुम्भसं० — ऐ.
[12] सूत्रादिवस्त्र० — ऐ.

ईशानमन्त्रं संपूज्य [१]भवादींस्तु विशेषतः ।
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥४३॥
पलाशसमिधा [२]युक्तं सद्येनैव तु [३]होमयेत् ।
आज्येनैव तु [४]संयुक्तं वामदेवेन [५]होमयेत् ॥४४॥
पञ्चगव्येन संयुक्तं शिवास्त्रेणैव होमयेत् ।
प्रत्येकं षोडशं हुत्वा यामान्ते द्विगुणं चरेत् ॥४५॥
ततः परं विशेषेण अष्टोत्तरशताहुतिः ।
[६]शिवसंकल्पसंयुक्तमावश्यं तु जपेद्बुधः ॥४६॥
उषःप्रातश्च मध्याह्ने सायाह्ने [७]चार्धयामके ।
जलसंप्रोक्षणे[८] चैव वास्तुहोमं तु कारयेत् ॥४७॥
दिशाशान्तिं च मूर्तिं च जपशान्तिं च कल्पयेत् ।

[९][जपशान्तिः]

जपशान्तिमथो[१०] वक्ष्ये [११]दैवज्ञगुरुसंयुतम् ॥४८॥
आगमोक्तप्रकारेण तत्काले जपमाचरेत् ।
वेदमन्त्रेण संयुक्तं जपं कृत्वा विशेषतः ॥४९॥
जपान्ते चैव पुण्याहं लिङ्गं तु प्रोक्षयेत्ततः ।
तत्काले शान्तिराचर्या[१२] दिनवारं विना सुधीः[१३] ॥५०॥
तत्काले त्याज्यसंयुक्तं विना शान्तिं समाचरेत् ।
शीघ्रं [१४]शान्तिः प्रकर्तव्या घटिकात्रयसंयुतम् ॥५१॥

**इति रौरवागमे क्रियापादे[१५] दिनशान्तिकल्पे वास्तुशान्तिशान्तिहोम-दिशाहोममूर्तिहोम[जपशान्ति]विधिः त्रिपञ्चाशः पटलः ।**

---

[१] भवादीनां विशेषतः — ऐ.
[२] हुत्वा — ऐ.
[३] हूयते — ऐ.
[४] हुत्वा तु — ऐ.
[५] हूयते — ऐ.
[६] **शुक्लयजुर्वेदे** ३४.५; **शिवसंकल्पोपनिषत्** — ५.
[७] चार्थयामके — ऐ.
[८] ०प्रोक्षणं — ऐ.
[९] 'अथ मन्त्रजपं कुर्यात्स्नानं चोदितभस्मना ।
मन्त्रकाय उदग्वक्त्रः पूर्वास्यो वाक्षमालिकः ॥
शिवाणुमथवाघोरं यद्वा पाशुपतं वरम् ।
अघोरास्त्रं शिवास्त्रं वा ब्रह्माण्यङ्गानि वा पुनः ॥
मेलामन्त्रं तु यद्वा स्यात्पराधान्तं शतादितः ।
जपेत्तदनुरूपेण मितग्रासो हविष्यभुक् ॥
अनाहारोऽथ भिक्षाशी चरुभुक् क्षीरपोऽपि वा ।
शाकयवकपिण्याककन्दमूलफलाशनः ॥
स्मरंस्तद्देवतारूपं जपं तस्मै निवेदयेत् ।
जप एवं समाख्यातः' ।
(**उत्तरकामिके** ३०.२७–३१)
[१०] ०शान्तिमहो — ऐ.
[११] देवज्ञ — ऐ.
[१२] शान्तिमाश्रित्य — ऐ.
[१३] ०वार विना सिधीः — ऐ.
[१४] शान्तिप्रकर्तव्यं — ऐ.
[१५] इति रौरवोक्तप्रकारेण उपागमयुक्ते क्रियापादे — ऐ.

## चतुःपञ्चाशः पटलः

### [1]सर्वशान्तिः

**[2]गर्भार्धमण्डपे चैव द्वारे च बलिपीठके।**

---

[1] अयं पटलः आर. इ. २५११८ मातृकायां २२८ पत्रे दृश्यते। एतस्मिन्विषये **उत्तरकामिके** ३०, ३१; **पूर्वकारणे** १४४; **वीरे** ८७; **संतानसंहितायां** ५६, ६६; **सुप्रभेदे** क्रियापादे ५५; **सूक्ष्मे** ४६ पटला द्रष्टव्याः।

[2] 'प्रासादे च सभास्थाने गोपुरे मण्डपे तथा।
परिवारालये चैव मधुनीडसमुद्भवे॥
ग्रामस्य नाशनं चैव नृपतेर्मरणं ध्रुवम्।
व्यपोह्य मधुनीडं तत्प्रोक्षयेच्छुद्धवारिणा॥
शिवं संपूज्य विधिवद्दिशाहोमं तु कारयेत्।
मध्वाज्यपयसा धीमान्स्नापयेत्परमेश्वरम्॥
समिद्भिर्निम्बसंभूतैः शान्तिहोमं तु कारयेत्।
तदन्ते स्नपनं कुर्यादेवं सप्ताहमाचरेत्॥
उत्सवं कारयेदन्ते सप्ताहं त्रियहं तु वा।
(**सूक्ष्मे** ४६, १२८ उ०–१३२);
प्रासादमण्टपाद्येषु वल्मीकं यत्र दृश्यते।
रक्तकन्यासमुत्पन्ने प्रासादे मधुसंश्रिते॥
प्रविष्टे पिपीलिकोलूके प्रासादाभ्यन्तरे तथा।
तत्प्रदेशं खनित्वा तु पूरयेच्छुद्धपांसुभिः॥
पञ्चगव्येन संप्रोक्ष्य पुनः शान्ति तु कारयेत्।
(**सुप्रभेदे** क्रियापादे ५५. ५३उ०–५५);
'देवालयोपरिष्टात्तु नृपस्य भवनोपरि।
श्वारोहे तत्र रुदिते राजा मरणमाप्नुयात्॥
तं हत्वात्र विसृज्याथ पुण्याहं वाचयेद्बुधः।
अश्वत्थसमिधा चैव शान्तिहोमं च कारयेत्॥
ब्राह्मणान्भोजयेत्तत्र कुर्यात्तु स्नपनं महत्।
तदन्ते चोत्सवं कुर्याद्वास्तुदेवान्प्रपूजयेत्॥'
(**पूर्वकारणे** १४४. १४२–१४४);
'देवानामालये वाथ नृपस्यैव गृहे तथा।
विद्याभियोगशालायां सभास्थाने च चत्वरे॥
मठे तटाकतीरे च रथ्यायां कूपतीरके।
प्रतिक्रिया च कर्तव्या रक्तकन्यासमुद्भवे॥
देवानामालये जाते राजा मरणमाप्नुयात्।
संजाते राजभवने तद्राष्ट्रस्यैव नाशनम्॥
विद्याभियोगशालायां रक्तकन्यासमुद्भवे।
तदा मुञ्चति तद्ग्रामं वाग्देवता प्रजापते॥
सभास्थाने समुत्पन्ने ग्रामनाशो न संशयः।
चत्वरे च समुत्पन्ने प्राणिनां नाशनं भवेत्॥
मठे चैव समुत्पन्ने ग्रामदूषणमादिशेत्।
तटाकतीरे संजाते तदा मुञ्चति पद्मजा॥
रथ्यासमुद्भवे स्त्रीणां बालानां नाशनं भवेत्।
कूपतीरे तु संजाते दुःखार्ता ग्रामवासिनः॥
तत्प्रदेशं खनित्वा तु पूरयेच्छुद्धवालुकैः।
पुण्याहं वाचयित्वा तु ब्राह्मणांस्तत्र भोजयेत्॥
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन्।
शान्तिहोमं ततः कृत्वा पलाशसमिधा पुनः॥
तदन्ते स्नपनं कुर्यादेवं सप्ताहमाचरेत्।'
(**पूर्वकारणे** – १४४.१३०–१३९ पू०);
'कुक्कुरैः कुक्कुटैश्चैव खरसूकरवानरैः।
स्पर्शिते लिङ्गबिम्बे च प्रविष्टे गर्भगेहके॥
प्रवर्तते महामारी तद्ग्रामं च विनश्यति।
मृद्भाण्डानि विसृज्याथ स्थानशुद्धिं ततः कुरु॥
गोमयालेपनं कृत्वा प्रोक्षयेत्पञ्चगव्यकैः।
स्नपनं कारयित्वा तु शान्तिहोमं ततः कुरु॥
लिङ्गं वा प्रतिमा स्पृष्टमृतुस्त्रीभेकतस्करैः।
गर्भगेहप्रविष्टे वा जनानां नाशनं भवेत्॥
मृद्भाण्डानि विसृज्याथ गोमयेनोपलेपयेत्।
पर्यग्निकरणं कृत्वा पुण्याहं वाचयेत्ततः॥
स्नपनं कारयेत्पश्चाद्बिल्वपत्रेण घर्षयेत्।
मूर्तिहोमं ततः कृत्वा ब्राह्मणान्भोजयेत्ततः॥
अन्तर्मण्डलशालादिरभिस्पृष्टो विशेषतः।
संप्रोक्ष्य पञ्चगव्येन पुण्याहं वाचयेत्ततः॥'
(**पूर्वकारणे** १४४.५६–६२);

परिवारालये चैव [1]ध्वजस्तम्भस्य देशके ॥१॥
पचनालयदेशे तु सभास्थाने तु गोपुरे ।
शिखरे मण्डपे चैव कूपतीरे तटाकके ॥२॥
[2]धामवृक्षे तु शालायां द्रव्यकोशे वृषेऽथवा ।
प्रासादे भित्तिदेशे तु उपगोपुर एव[3] च ॥३॥
[4]उत्सवमण्डपे चैव तीर्थमण्डप [5]अङ्गणे ।
सोपाने दीपदेशे तु अन्यदेवालयेऽपि वा ॥४॥
गोमायु[6]शिथिले चैव वल्मीके मधुपञ्जरे ।
श्वारोहे रुदिते तत्र कृकलासे तु [7]कच्छपे ॥५॥
रक्तकन्याश्वेत[8]कन्यामण्डूकश्वेतवायसैः[9] ।
गर्दभैः कुक्कुटैश्चैव सूकरैर्वनचारिभिः ॥६॥
[10]अन्यैस्तु दुष्टे[11] जन्तूनां शान्तिं तत्रैव कारयेत् ।
पूर्वे तु द्रव्यनाशः[12] स्यादाग्नेय्यामग्निदग्धकम्[13] ॥७॥
दक्षिणे कलहं विद्यान्नैर्ऋते राक्षसाद्भयम्[14] ।
वारुणे वर्ष[15]नाशः स्याद्वायव्ये चण्डमारुतः[16] ॥८॥
सौम्ये तु धननाशः[17] स्यादैशान्ये गेहनाशनम् ।
मध्ये तु राजदोषः[18] स्यादन्तराले महद्भयम्[19] ॥९॥
[20]कच्छपे जलसंजाते तत्र दोषो[21] न विद्यते ।
तद्दोषशमनार्थाय पुण्याहं पञ्चगव्यकैः ॥१०॥
स्नपनं शान्तिहोमं च वञ्जुलासमिधा हुनेत् ।
[22]गुडूचीसमिधा चैव [23]दग्धे तु [24]लवणं हुनेत् ॥११॥

---

'सितकाकसमुद्भूते राष्ट्रक्षोभो भवेत्सदा ।
स्नपनं तत्र कुर्वीत ब्राह्मणान्भोजयेत्ततः' ॥
(पूर्वकारणे १४४. ६७)

[1] ध्वजकम्बस्य — ऐ.
[2] धर्मवृक्षे — ऐ.
[3] ०गोपुरमेव — ऐ.
[4] उत्सवे — ऐ.
[5] अङ्कणे — ऐ.
[6] ०शिथिली — ऐ.
[7] कृश्रपे — ऐ.
[8] ०कन्यमण्डूक — ऐ.
[9] ०वायसे — ऐ.
[10] अन्ये तु दुष्टजन्तूनां — ऐ.
[11] दुष्टे-दूषिते अन्तर्भावितणिजर्थः ।
[12] ०नाशं — ऐ.
[13] दग्धकम् — दाहः भावे क्तप्रत्ययः ।
[14] राक्षसा भयम् — ऐ.
[15] ०नाशं स्याद् — ऐ.
[16] ०मारुतम् — ऐ.
[17] ०नाशं — ऐ.
[18] ०दोषं — ऐ.
[19] 'महद्भयम्' इति न समस्तम् 'महद् भयम्' इति व्यस्तं पदम् ।
[20] कश्चपे — ऐ.
[21] दोषं — ऐ.
[22] गलूचि — ऐ.
[23] दग्धे - दाहे भावे क्तप्रत्ययः ।
[24] लवणे — ऐ.

कार्पासबीजसंयुक्तं सर्षपं मधुसंयुतम् ।
सहस्रमुपचारेण स्नपनं च विशेषतः ॥१२॥
तत्स्थाने [1]मार्जनं प्रोक्ष्य पञ्चगव्यं प्रपूरयेत् ।
[2]शिवसंकल्पसंयुक्तं स्वस्तिवाचकसंयुतम् ॥१३॥
तत्तत्स्थाने तु संयुक्तं शान्तिहोमं तु कारयेत् ।
शिवं संपूज्य विधिवद्ब्राह्मणान्मिष्टभोजनम्[3] ॥१४॥
गन्धमाल्यैरलंकृत्य श्वेतताम्बूलसंयुतम् ।
नववस्त्रेण संयुक्तं शक्त्या वित्तानुसारतः ॥१५॥

इति रौरवे क्रियापादे[4] सर्व[5]शान्ति [विधिः] चतुःपञ्चाशः पटलः ।

---

[1] मार्जन० — ऐ; 'मार्जनं' मार्जनोदकमित्यर्थः ।; 'गोक्षुरं सहदेवी च विष्णुक्रान्तिः कृताञ्जलिः । शिरीषेन्दीवरं रात्रिरेभिर्मार्जनमुच्यते ॥' (उत्तरकामिके ४.११० उ०, १११ पू०)

[2] शुक्लयजुःसंहिता ३४.५; शिवसंकल्पोपनिषत् — ५.

[3] ब्राह्मणान् विधिवत्संपूज्य तेभ्यो मिष्टभोजनं देयमिति व्याख्येयम् ।

[4] इति रौरवोक्तप्रकरणे — ऐ.

[5] ०शान्त्यर्थपटलः — ऐ.

## पञ्चपञ्चाशः पटलः

### [1] जीर्णोद्धारविधिः

[2] भ्रूरेखा पक्ष्मरेखा च आस्यरेखा च नासिका।
सर्वाङ्गानां क्षयं दृष्ट्वा प्रतिमां च विसर्जयेत् ॥१॥
लोहजानां तु सर्वेषामङ्गहीने तु संभवे।
तद्वदङ्गं पुनः कार्यं मुखहीने[3] न कारयेत् ॥२॥
[4] नाभिमध्यमहीने तु संधानं न समाचरेत्।
मृण्मये [5] वर्णहीने चेत्पुनः कृत्वा समारभेत् ॥३॥
छिन्नं भिन्नं पुनर्ग्राह्यं जीर्णं चेत्तु नवीकृतम्।
[6] प्रतिमे शूलहीने[7] तु जीर्णोद्धारं तु कारयेत् ॥४॥

---

[1] अयं पटलः आर्. इ. २००५२ इत्यङ्किते तालपत्रकोशे १३ पत्रे; आर्. इ. २००५८ इत्यङ्किते तालपत्रकोशे (टि. ७६६) ४३, ४४ पृष्ठयोर्दृश्यते। एतस्मिन्विषये **अंशुमत्काश्यपे** ९६; **अंशुमदागमे** ५६; **पूर्वकारणे** १३४; **सुप्रभेदे** क्रियापादे ५४; **सूक्ष्मे** ४८ पटला द्रष्टव्याः।

[2] 'लोहजानां तु बिम्बानामङ्गहीने तु संभवे।
तदङ्गं पूर्ववत्कृत्वा स्थापनं सम्यगाचरेत् ॥
हिक्कादूर्ध्वे तु विच्छिन्ने त्यक्त्वान्यं परिपठ्यते।
नलकादिषु विच्छिन्ने पादयोर्हस्तयोस्तु वा ॥
तेनैव जीर्णलोहेन पूर्ववद्बिम्बमाचरेत्।
अब्दत्रयं तु तल्लोहं खात्वा भूमौ विशेषतः ॥
पश्चादग्नौ द्रुतं कृत्वा पुनर्बिम्बं समाचरेत्।
मृण्मये वर्णहीने तु पुनः कृत्वा तु पूर्ववत् ॥
कल्करज्जुमृदो वापि भिन्नछिन्नादिसंभवे।
तत्तदङ्गं पुनः कार्यं शूलं चैव तथैव हि ॥
दारुशूलेष्टका वापि शूलदोषविहीनकम्
तदेव संग्रहेद्धीमान्दोषाढ्यं परिवर्जयेत्।'
(**अंशुमत्काश्यपे** ९६.१४–१९);
'जीर्णितस्यैव बिम्बस्य उद्धारं चाधुना शृणु।
शिरोबाहू तथा पादौ हीनौ चेत्परिवर्जयेत् ॥
जीर्णे लोहे तु तत्कार्यं तत्प्रमाणेन पूर्ववत्।
कृत्वा तु स्थापयित्वा तु पूर्ववत्सम्यगर्चयेत् ॥
भ्रूरेखा पक्ष्मरेखा च आस्यरेखा च नासिका।
एतासां च क्षयं दृष्ट्वा प्रतिमां परिवर्जयेत् ॥
तद्बेरं तु परिग्राह्य समुद्रे तु विनिक्षिपेत्।'
(**पूर्वकारणे** १३४.२९–३२ पू०);
'प्रतिमानां ततः शृणु।
भ्रूरेखा पक्ष्मरेखा च चक्षूरेखा च नासिका ॥
सर्वाङ्गानां क्षयं दृष्ट्वा प्रतिमां च विसर्जयेत्।
लोहजानां तु सर्वेषामङ्गहीने तु संभवे ॥
तद्वदङ्गं पुनः कार्यं मुखहीनं न कारयेत्।
नाभिमध्यमहीने तु संधानं न समाचरेत् ॥
मृण्मये वर्णहीने चेत्पुनः कृत्वा समारभेत्।
छिन्नं भिन्नं पुनर्ग्राह्यं जीर्णं चेत्तु नवीकृतम् ॥
प्रतिमं शूलहीनं चेज्जीर्णोद्धारं तु कारयेत्।'
**सुप्रभेदे** (आर्. इ. २००५२) १९ पत्रे

[3] ०हीनं — ओ, औ.

[4] नाभी० — ओ.

[5] वज्रहीने — औ.

[6] प्रतिमं — ओ; प्रतिमा — औ; प्रतिमाशब्दस्यात्र क्लीबे प्रयोगः।

[7] ०हीनं — ओ, औ.

[1]शैलजं ध्रुवबेरं यदङ्गहीनं भवेद्यदि।
तद्बेरं च समादाय समुद्रे प्रक्षिपेत्तथा ॥५॥
शिलामन्यां[2] गृहीत्वाथ[3] शिलाग्रहणमार्गतः।
स्थापयित्वा विशेषेण पूर्ववत्कारयेद्बुधः ॥६॥
मृण्मयं दारुजं वापि लोहजं तु शिलामयम्।
स्थापितं पूजितं बेरं जीर्णं वा हीनमेव वा ॥७॥
छिन्नं वाप्यग्निदग्धं वा दृष्ट्वा बेरं न पूजयेत्।
पूजयेद्यदि मोहेन राजराष्ट्रं विनश्यति ॥८॥
तस्माद्बेरं समुद्धृत्य जले वापि स्थलेऽपि वा।
प्रक्षिप्यात्र समाच्छाद्य [4]प्रतिमां स्थापयेन्नवाम्[5] ॥९॥
मृण्मयं चेन्मृदा[6]कुर्याद्दारुश्चेद्दारुणा[7] कुरु।
लोहजं यदि लोहेन [8]शिलया शैलजं कुरु[9] ॥१०॥

**इति रौरवे क्रियापादे जीर्णोद्धारविधिः पञ्चपञ्चाशः पटलः।**

---

[1] 'शैलं च ध्रुवबेरं यदङ्गहीनं भवेद्यदि।
तद्बेरं च समादाय समुद्रे प्रक्षिपेत्ततः ॥
शिलामन्यां गृहीत्वा तु शिलासंस्थापनं यदि।
स्थापयित्वा उपाङ्गं तु पूर्ववत्कारयेद्बुधः ॥'
(**ललितागमे** आर्. इ. २००५२) १८ पत्रे);
'मृण्मयं दारुजं वापि लोहजं वा शिलामयम्।
स्थापितं पूजितं बेरं जीर्णं वा हीनमेव वा ॥
छिन्नं वाप्यग्निदग्धं वा दृष्ट्वा बेरं न पूजयेत्।
पूजयेद्यदि मोहेन राजा राज्यं विनश्यति ॥
तस्माद्बेरं समुद्धृत्य जले वापि स्थलेऽपि वा।
प्रक्षिप्य मृद्भिराच्छाद्य प्रतिमां कारयेन्नवाम् ॥
मृण्मयं चेन्मृदा कुर्याद्दारु चेद्दारुणा कुरु।
लोहजं यदि लोहेन शिलायां शैलजं यदि ॥'
(**बिम्बागमे** (आर्. इ. २००५२) ७ पत्रे);
मृण्मयं दारुजं वापि लोहजं वा शिलामयम्।
स्थापितं पूजितं बेरं जीर्णं वा भिन्नमेव वा ॥
छिन्नं वाप्यग्निदग्धं वा दृष्ट्वा बेरं न पूजयेत्।
पूजयेद्यदि मोहेन राजराष्ट्रं विनश्यति ॥
तस्माद्बेरं समुद्धृत्य जले वापि स्थलेऽपि वा।
प्रक्षिप्य मृद्भिराच्छाद्य प्रतिमां कारयेन्नवाम् ॥
मृण्मयं च मृदा कुर्याद्दारु चेद्दारुणा कुरु।
लोहजं यदि लोहेन शिला चेच्छैलजं स्वयम् ॥
(**सूक्ष्मे** ४८.११–१४)

[2] शिलामान्यां — ओ; शिलामन्यं — औ.

[3] गृहीत्वर्थं — ओ, औ.

[4] प्रतिमं — ओ; प्रतिमा — औ

[5] ०न्नवम् — ओ, औ.

[6] कार्या — ओ.

[7] दारुजेद्दारुणा — औ.

[8] शिलायां — ओ; शिलाया — औ.

[9] 'ओ' मातृकायां '५–१०' श्लोकाः 'रौरवे' इति निर्दिश्य मयमते उद्धृता इति लिखिताः।

## षट्पञ्चाशः पटलः

### [1]प्रायश्चित्तविधिः

[2]अथातः संप्रवक्ष्यामि प्रायश्चित्तविधिक्रमम् ।

[3][प्रायश्चित्तशब्दार्थः]

प्रायो [4]विनाश इत्युक्तश्चित्तं [5]संधानमुच्यते ॥१॥
अन्तःकरणजादत्र[6] प्रायश्चित्तमिति स्मृतम् ।
अकृत्यो[7]द्भव एवं च [8]विधिनैव समाचरेत् ॥२॥

---

[1] अयं पटलः टि० १८१ इत्यङ्किते हस्तलिखित-कोशे १६४, १७०–१७२ पत्रेषु दृश्यते। एत-द्विषये **अंशुमदागमे** ३७; **उत्तरकामिके** ३०; **पूर्वकारणे** १४४ **संतानसंहितायां** ५६; **रौरवे** क्रियापादे ४४; **सुप्रभेदे** क्रियापादे ५५ पटला द्रष्टव्याः ।

[2] अथ वक्ष्ये विशेषेण प्रा० — 'क' पाठान्तरम् ।

[3] 'प्रायो विनाश इत्युक्तश्चित्तं संधानमुच्यते ।
विनाशस्य च संधानं प्रायश्चित्तमिति स्मृतम् ॥'
(**अंशुमदागमे**, ३७, १ उ०, २ पू०);
'प्रायो विनाश इत्युक्तश्चित्तं संधार्यते तु यत् ।
तद्विना न समाधानात्प्रायश्चित्तमिति स्मृतम् ॥'
(**अचिन्त्यविश्वसादाख्ये** ७२.१);
'प्रायश्चित्तविधिं वक्ष्ये श्रूयतां द्विजसत्तमाः ।
विधिर्निषेध इत्येवं चोदना स्याद्द्विधा मता ॥
अनुष्ठितायां तस्यां स्याद्यथावद्धर्मसंग्रहः ।
वैपरीत्ये त्वधर्मः स्यात्तेन पापं महद्भवेत् ॥
तेनाधोगमने प्राप्ते कर्तुरूर्ध्वं परं पदम् ।
यत्कर्म नयतीत्युक्तं प्रायश्चित्तमिहागमे ॥
प्रकृष्टायाः समानत्वाद्दोषः प्रायः प्रकीर्तितः ।
चिदात्मा कथितः शास्त्रे तरणं तु तकारतः ॥
सदोषस्यात्मनो यस्मात्तरणं पततो ह्यधः ।
तस्मात्प्रकीर्तितं विप्राः प्रायश्चित्तं शिवाश्रिताः ॥
विधिर्निषेधो वा नास्ति यस्मिन्कर्मण्यनुष्ठिते ।
तस्मिन्पुण्यं च पापं वा नेति शास्त्रार्थनिश्चयः ॥
आवश्यके कृते पूर्वमुखेनैव प्रतिक्रिया ।
कर्तव्या पश्चिमास्येन कोणेशास्येन वेति च ॥'
(**उत्तरकामिके** ३०.१–७);
'प्रायो विलय इत्युक्तश्चित्तं राहित्यकृत्ततः ।
लयराहित्यहेतुत्वात्प्रायश्चित्तमिति स्मृतम् ॥'
(**पूर्वकारणे** १४४, १उ०, २पू०)

[4] विनाशमित्युक्तं — क;
विनाशमिति प्रोक्तं — 'क' पाठान्तरम् ।

[5] संतानमुच्यते — क;
तस्यैव नाशनम् — 'क' पाठान्तरम् ।

[6] ०करणजत्रैव — क;
०करणाद्यत्रैव — 'क' पाठान्तरम् ।

[7] ०द्भवमेवं च — क.

[8] तुण्डेनैव — क.

[1][प्राकारादिषु चण्डालप्रवेशे]

**[2]वेशयेद्यदि चण्डालो [3]मर्यादादौ च यत्र हि।**
**मृद्भाण्डानि विसृज्याथ पर्यग्निकरणं कुरु[4]॥३॥**
**स्नपनं मूर्तिहोमं च कारयेद्देशिकोत्तमः।**
**आगतो यदि चण्डालो [5]मध्यहारे ततो यदि॥४॥**
**[6]स्थानशुद्धिं ततः कृत्वा मृद्भाण्डानि विसर्जयेत्।**
**पुनः पुण्याहकं कार्यं स्नपनं मूर्तिहोमकम्॥५॥**

---

[1] 'प्रविशेद्यदि चण्डालो मर्यादादौ तु पञ्चमे।
मृद्भाण्डानि विसृज्याथ पर्यग्निकरणं कुरु॥
स्नपनं मूर्तिहोमं च कारयेद्देशिकोत्तमः।
आगतो यदि चण्डालो मध्यहारे ततो बुधः॥
स्थानशुद्धि ततः कृत्वा मृद्भाण्डानि विसर्जयेत्।
पुनः पुण्याहकं कार्यं स्नपनं मूर्तिहोमकम्॥
अन्तर्हारं विशेद्यस्तु गोपुराभ्यन्तरेऽपि वा।
मृद्भाण्डानि विसृज्याथ स्थानशुद्धिं ततः कुरु॥
पर्यग्निकरणं कृत्वा पुनः पुण्याहमाचरेत्।
धामशुद्धिं ततः कृत्वा प्रोक्षयेच्छङ्खतोयकैः॥
[धेनुवैरं ततः कृत्वा] द्विजभोजनमाचरेत्।
स्नपनं मूर्तिहोमं च कारयेद्देशिकोत्तमः॥
चण्डालश्चागतश्चेद्धि चान्तर्मण्डलके ततः।
[गोभि]राक्रमणं कृत्वा सप्त[शुद्धि]मथाचरेत्
मृद्भाण्डानि विसृज्याथ पर्यग्निकरण कुरु।
धामशुद्धि ततः कृत्वा प्रोक्षयेच्छङ्खतोयकैः॥'
(**चिन्त्ये** (टि. ३४१) १४०, १४१ पृष्ठयोः);
'प्रविशेद्यदि चण्डालो मर्यादादौ तु पञ्चमे।
मृद्भाण्डानि विसृज्याथ पर्यग्निकरणं कुरु॥
स्नपनं मूर्तिहोमं च कारयेद्देशिकोत्तमः।
आगतो यदि चण्डालो मध्यहारे ततोऽपि यः॥
स्थानशुद्धि ततः कृत्वा मृद्भाण्डानि विसर्जयेत्।
पुनः पुण्याहकं कार्यं स्नपनं मूर्तिहोमकम्॥
अन्तर्हारं विशेद्यस्तु गोपुराभ्यन्तरेऽपि वा।
मृद्भाण्डानि विसृज्याथ स्थानशुद्धिं ततः कुरु॥
पर्यग्निकरणं कृत्वा पुनः पुण्याहमाचरेत्।
धामशुद्धिं ततः कृत्वा प्रोक्षयेत्पञ्चगव्यकैः॥
धेनुवैरं ततः कृत्वा द्विजभोजनमाचरेत्।
स्नपनं मूर्तिहोमं च कारयेद्देशिकोत्तमः॥
चण्डालश्चागतश्चेद्धि चान्तर्मण्डलके ततः।
गोभिराक्रमणं कृत्वा सप्तशुद्धिमथाचरेत्॥
मृद्भाण्डानि विसृज्याथ पर्यग्निकरणं कुरु।..
धामशुद्धिं ततः कृत्वा प्रोक्षयेच्छङ्खतोयकैः॥
पञ्चगव्यावगाहं च कृत्वा संप्रोक्षणं कुरु।
व्यञ्जने मण्टपे गर्भे चण्डालः संविशेद्यदि॥
गोभिराक्रमण कृत्वा धेनुवैरं समाचरेत्।
मृद्भाण्डानि विसृज्याथ सप्तशुद्धिं समाचरेत्॥
पर्यग्निकरणं कृत्वा पुनः पुण्याहमाचरेत्।
द्विजभोजनकं कृत्वा पश्चात्पुण्याहमाचरेत्॥
धामशुद्धिं ततः कृत्वा प्रोक्षयेच्छङ्खतोयकैः।
बेरशुद्धिं ततः कृत्वा घृतधूपैश्च धूपयेत्॥
पञ्चगव्यावगाहं च कारयेत्पूर्ववत्सुधीः।
संप्रोक्षणं ततः कृत्वा शुद्धस्नपनमाचरेत्॥
(**स्वायंभुवे** (टि० २०३) १७६–१७८ पृष्ठेषु)

[2] वेशयन्ति यदि — क; अत्र वेशयेदिति स्वार्थे णिच्।

[3] मर्यादौ च — क.

[4] कृतम् — क.

[5] मध्यरात्रे — क.

[6] 'स्थानशुद्धिमथाचरेत्।
तालमुद्रात्रयं कृत्वा प्राकारं हेतिना स्मरेत्॥
तद्बहिः परिघां ध्यात्वा कवचेनैव मन्त्रतः।
अस्त्रजालं तु तद्बाह्ये न्यसेद्विघ्नापनुत्तये॥
दिव्यं धाम विचिन्त्याथ'
(**पूर्वकामिके** ४.१९९उ०–२०१);
एतद्विषये पुनः **अजिते** २०.१०८उ०–११० पू०; **रौरवे** क्रियापादे १०.६उ०, ७पू० श्लोकास्तदीयटिप्पण्यश्च द्रष्टव्याः।

[1]अन्तर्हारे विशेत्तत्र [2]गोभिराक्रमणं कुरु।
मृद्भाण्डानि विसृज्याथ स्थानशुद्धिं ततः कुरु ॥६॥
पर्यग्निकरणं कृत्वा पुनः पुण्याहमाचरेत्।
[3]धेनुवैरं ततः कृत्वा [4]द्विजभोजनमाचरेत् ॥७॥
स्नपनं मूर्तिहोमं च कारयेद्देशिकोत्तमः।
चण्डालश्चागतश्चेद्धि[5] ह्यन्तर्मण्डलके[6] ततः ॥८॥
[7]गोभिराक्रमणं कृत्वा [8]सप्तशुद्धिमथाचरेत्।
मृद्भाण्डानि विसृज्याथ पर्यग्निकरणं [9]कुरु ॥९॥
धेनुवैरं ततः कृत्वा पुनः पुण्याहमाचरेत्।
[10]द्विजभुक्तिं ततः कृत्वा पश्चात्पुण्याहमाचरेत् ॥१०॥
बेरशुद्धिं ततः [11]कृत्वा ह्यष्टगन्धं समाचरेत्।
[12]अन्तरितक्रमं कृत्वा शुद्धस्नपनमाचरेत् ॥११॥
[13]चण्डालश्चैव यत्रैव ह्यागतो मण्डपद्वयोः।
गोभिराक्रमणं कृत्वा सप्तशुद्धिमथाचरेत् ॥१२॥
पञ्चगव्यावगाहं च कृत्वा संप्रोक्षणं कुरु।
धेनुवैरं ततः कृत्वा मृद्भाण्डानि विसर्जयेत् ॥१३॥
पर्यग्निकरणं कृत्वा पुनःपुण्याहमाचरेत्।
पञ्चगव्यावगाहं च कृत्वा संप्रोक्षणं कुरु ॥१४॥
[14]व्यञ्जने मण्डपे गर्भे चण्डालो [15]वेशयेद्यदि।
गोभिराक्रमणं कृत्वा धेनुवैरं समाचरेत् ॥१५॥

---

[1] अन्तर्हते — क.
[2] गोहिनाक्रमणं कृतम् — क.
[3] धेनुवैरं—धेनूनां परस्परं विरोधः।; धेनूनां परस्परं वैरेण युद्धं कारयित्वा तत्स्थले धूल्युत्थापनेन शुद्धिः कार्येत्यर्थ इति भाति।
[4] द्विभोजनमथाचरेत् — क.
[5] ०श्चागतो वेद्धि — क.
[6] स्यर्धमण्डलके — क.
[7] गोहिणाक्रमणं त्वा — क.
[8] 'खननात्पूरणाद्दाहाद्दर्भघर्षणलेपनात्।
गोभिराक्रमणात्कालाद्भूमिः शुद्धयति सप्तभिः ॥'
(प्रायश्चित्तसमुच्चये (टि.१०६०) ८२ पृष्ठे)
[9] कृतम् — क.
[10] द्विभोजनं ततः – क.
[11] कृत्वाष्टगन्धं — क.
[12] 'आवर्तं चेत्यनावर्तं पुनरावर्तनं तथा।
ततोऽन्तरितकं चेति प्रोक्षणं तु चतुर्विधम् ॥'
'ततोऽन्तरितकं विप्राः संक्षेपेण वदाम्यहम्।
रत्नन्यासाक्षिमोक्षौ च जले चैवाधिवासनम् ॥
शय्याधिवासनं विप्रा विना वै बेरकर्मणि।
नववस्त्रेण संवेष्टच बेरस्य सकलाङ्गकम् ॥
प्रागुक्तविधिना कुम्भन्यासहोमं च कारयेत्।
स्नपनं कारयेदन्ते चान्यत्सर्वं समानकम्' ॥
(उत्तरकामिके ३४.१ उ०, २ पू०; १३–१५)
[13] चण्डालाश्चैव यत्रैवागते — क.
[14] 'व्यञ्जने' इत्यस्य लक्षणया व्यञ्जनस्थापनयोग्ये इति व्याख्येयम्।
[15] 'वेशयेत्' इति स्वार्थे णिजन्तः।; वेशयेद्यथा — क

गृद्भाण्डानि विसृज्याथ पर्यग्निकरणं[1] कुरु।
सप्तशुद्धिं ततः कृत्वा द्विजभोजनमाचरेत् ॥१६॥
अङ्कुरं पूर्ववत्कृत्वा बेरशुद्धिमथाचरेत्।
अष्टगन्धं समालिप्य [2]धूलनेनाभिवर्धयेत् ॥१७॥
पञ्चगव्यावगाहं च कारयेत्पूर्ववत्सुधीः।
संप्रोक्षणं ततः कृत्वा शुद्धस्नपनमाचरेत् ॥१८॥

[गर्भगेहादौ सुरामांसरुधिरप्रवेशे,
श्वानादितिर्यग्जातीनां प्रवेशे तेषां मृतौ प्रसूतौ च]

[3]सुरा मांसं च रुधिरं श्वानकुक्कुटवानराः[4]।
खरश्च सूकरश्चैव तिर्यग्जातीयकास्ततः[5] ॥१९॥

---

[1] कृतम् — क.

[2] धूलेनामपि वर्ध० — क.

[3] 'सुरामांसास्थिविष्ठाद्यैः श्वानगर्दभकुक्कुटैः।
गर्भगेहे प्रविष्टे च स्पृष्टे लिङ्गे च कौतुके॥
नृपवाहविनाशः स्यात्तद्राष्ट्रे शोकमाविशेत्।
संप्रोक्षणं ततः कृत्वा शताष्टकलशान्वितम्॥
वक्त्रमण्टपके वापि प्रतिमामण्टपेऽपि वा।
ग्रामश्रीस्त्वन्यथा भूयाद्धामश्रीस्त्वन्यथा भवेत्॥
स्थानशुद्धिं ततः कृत्वा तन्त्रादींश्च समाचरेत्।
स्नपनं शान्तिहोमं च जपेत्पाशुपतं शतम्॥
कौतुकस्यान्यदेवानां स्नपनं कारयेद्बुधः।
स्नानमण्टपसंवेशे पुण्याहैर्गव्यसेचनैः॥
शान्तिहोमैश्च शुद्धिः स्यात्स्नपनं कारयेच्छिवे।
अन्तर्मण्टपसालादेरभ्यन्तरनिवेशने॥
संमार्जनविलेपाद्यैः पुण्याहैः पञ्चगव्यकैः।
अन्नपूर्णेश्वरीं तत्र स्नापयेत्प्रोक्ष्येद्बुधः॥
अग्निं निकेतनात्त्यक्त्वा पुनः संधानमाचरेत्।
पञ्चसंस्कारमार्गेण हुनेत्पाशुपतं शतम्॥'
'वक्त्रादिसर्वशालासु रुधिरस्रावके सति।
राक्षसानां भयं चैव शीघ्रं रक्तं निघट्टयेत्॥
व्यपोह्य वास्तुशुद्धिं च देवस्य स्नपनं कुरु।'
(**स्वायम्भुवे** (टि. २०३) १७३–१७५ पृष्ठेषु)
'श्वानसूकरचण्डालमार्जारकपिकुक्कुटैः।
उलूकगृध्रकाकैश्च गर्दभैश्चैव चोरकैः॥'
'गर्भगेहे संप्रविष्टे स्पृष्टे लिङ्गे च कौतुके।
पञ्चशुद्धिक्रमात्कृत्वा प्रोक्षयेत्पञ्चगव्यकैः॥
पर्यग्निकरणं कृत्वा पुण्याहं वाचयेत्ततः।
लिङ्गं पीठं स्थलं सर्वं बिल्वपत्रेण घर्षयेत्॥
शान्तिहोमं ततः कृत्वा जपेत्पाशुपतं पदम्।
पश्चात्संप्रोक्षणं कुर्यात्प्रागुक्तविधिना सह॥
प्राकारे मण्टपे चैव परिवारालये तथा।
पचनालयदेशे वा तेषां पृष्टे [स्पर्शे ?] तथैव च॥
वर्जयेदत्र मृत्पात्रं पुण्याहं वाचयेत्ततः।
शान्तिहोमं ततः कृत्वा प्रोक्षयेत्तु शिवाम्भसा॥
ब्राह्मणान्भोजयेत्तत्र पुनः पुण्याहमाचरेत्।
अन्तर्मण्डलसालादौ प्रविष्टे त्वविचारतः॥
पुण्याहं वाचयित्वा तु शान्तिहोमं तु कारयेत्।'
'प्राकारेऽभ्यन्तरे चैव प्रासादे मण्डपेऽपि च॥
तिर्यग्जातेर्मृतौ सूतौ वाहनानां क्षयो भवेत्।
पूर्ववत्स्नापयेद्दुर्वीं पुण्याहं वाचयेत्ततः॥
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन्।
स्नपनं कारयेच्छम्भोः शान्तिहोमं तु कारयेत्॥'
(**योगजे** (टि. २०३) १७२, १७३, १७८ पृष्ठेषु)

[4] १९ श्लोकात्पूर्वं प्रथमश्लोको द्वितीयश्लोकस्य पूर्वार्धं च मातृकायां पुनर्लिखितम्। तस्य पाठान्तराणि पूर्वमेव निर्दिष्टानि।

[5] ०वानरैः — क.

[6] तिर्यग्जातयकस्ततः — क.

मृगपक्षि[1]मृतौ जातौ [2]गर्भगेहप्रवेशने।
[3]रथाद्याश्च विनश्यन्ति प्रायश्चित्तं तु कारयेत् ॥२०॥
[4]अन्तरितक्रमं कुर्याच्छताष्टकलशं [5]कुरु।
[6]व्यञ्जने मण्डपे चेद्धि महामण्डपके ततः ॥२१॥
[7]अन्तरितक्रमः [8]कार्यः कलशाः पञ्चविंशतिः।
पचनालयके चेद्धि योषितां नाशनं [9]द्रुतम् ॥२२॥
पुनरालेपनं कार्यं प्रोक्षयेच्छुद्धतोयकैः।
[10]प्रधानाग्निं विसृज्याथ पुनः संधानमाचरेत् ॥२३॥
पुण्याहं पञ्चगव्यं च स्नपनं च ततः कुरु।
अन्नपूर्णेश्वरीं ध्यात्वा ईशस्तम्भे सुयोजयेत् ॥२४॥

इति रौरवे क्रियापादे प्रायश्चित्तविधिः
षट्पञ्चाशः पटलः

---

[1] मृगे जाति — क.
[2] गर्भगृह प्रवेशयेत् — क.
[3] रथाद्यश्च — क.
[4] अन्तरीत० — क.
[5] कृतम् — क.
[6] 'व्यञ्जने' इत्यस्य लक्षणया व्यञ्जनस्थापनयोग्ये इति व्याख्येयम्।
[7] अन्तरीतक्रमं — क.
[8] कार्य कलशं — क.
[9] कृतम् — क.
[10] प्रधामाग्नि — क.

## सप्तपञ्चाशः पटलः

### [1]नागप्रतिष्ठाविधिः

[2][नागप्रतिष्ठायोग्यस्थानम्]

**महानागप्रतिष्ठां तु कुर्याद्देवालये बुधः।**
**देवालयं स्वयं कुर्याच्छिवविष्णवालयेऽपि वा ॥१॥**
**नदीतीरे तटाके वा तीर्थे वा शुद्धभूमिषु।**
**अश्वत्थसंनिधौ वापि कुर्यान्नागप्रतिष्ठितम्[3] ॥२॥**

[4][प्रतिष्ठाकालः]

**उत्तरायणकाले तु पुष्यफाल्गुनचैत्रके।**

---

[1] अयं पटलः टि. १२०.१३–३६ पृष्ठेषु दृश्यते। तथा टि. १२०.३७–७९ पृष्ठेषु रौरवागमपद्धतौ; आर्. इ. ३०८४१ इत्यङ्किते तालपत्रकोशे च दृश्यते। एतस्मिन्विषये **उत्तरकारणे** ४०३, ४०४ पृष्ठे; **कारणे** (टि. १२०) ८२–९० पृष्ठानि; **रौरवे** क्रियापादे ३८ पटलः; **वीरागमे** ९१ पटलः; **सूक्ष्मे** ८३, ८४ पटलौ; **सिद्धान्तदीपिकायां** (टि. १२०) ९८–१२८ पृष्ठानि च द्रष्टव्यानि।

[2] 'देवालये मठे वापि पर्वते तीर्थतीरके।
नन्दने शुक्ल[वृक्ष]मूले तु चैत्यवृक्षसमीपके ॥
एतेषु कारयेद्धीमानिष्टसिद्धिकरं भवेत्।
अष्टदिक्षु प्रकर्तव्यमालये तु विशेषतः ॥
आरोग्यं वारुणे चैव सोमे वित्तप्रदं भवेत्।
वह्निदेशे सुखं दद्याद्विजयं निर्ऋतौ तथा ॥
वायव्ये भयनाशार्थमैशान्यां पुत्रवर्धनम्।
एवं शिवस्य परितः प्राकारे स्थापयेत्क्रमात् ॥'
(**सूक्ष्मे** ८४.५–८);
'शिवालये नदीतीरे पिप्पलस्य च संनिधौ।
शिवालये विशेषेण काम्याद्यर्थस्य सिद्धये ॥
नद्यादौ दोषशान्त्यर्थं स्थानमेवं विधीयते।
आलये मण्डपादौ तु प्राकारे वा विशेषतः ॥
दिव्यवृक्षस्य मूले तु परिवारालयेषु च।
स्थानमेवं समाख्यातम्'
(**सिद्धान्तदीपिकायां** (टि. १२० पृ० १०३, १०४)

[3] प्रतिष्ठितमित्यत्र भावे क्तप्रत्ययः।

[4] 'अयने दक्षिणे नेष्टं प्रशस्तं चोत्तरायणम्।
शुक्लपक्षे च तत्रापि चैत्रवैशाखमुत्तमम् ॥
पुष्यफाल्गुनज्येष्ठं च मध्यमं समुदाहृतम्।
कार्तिकाश्वयुजे मासे श्रावणे चाधमं भवेत् ॥
मार्गशीर्षमथाषाढं माघप्रोष्ठं विवर्जयेत्।
शुक्लपक्षे शुभर्क्षे च सुतिथौ सुमुहूर्तके ॥
अयनं पक्षनक्षत्रं तिथिर्वारश्च राशयः।
मुहूर्तं तत्र संवीक्ष्य स्थापनं च समारभेत् ॥
पुष्यमासादि षाण्मासं देवानां तु दिवा स्मृतम्।
तत्राषाढादि षाण्मासं देवानां तु [निशा]स्मृता ॥
दिवाकाले प्रकर्तव्यं देवस्थापनमुत्तमम्।'
(**वीरे** ९२.३–८ पू०);
'उत्तरायणकाले तु शुक्लपक्षे शुभे दिने।
शुभवारादिभिर्युक्ते स्थापनं तु समारभेत् ॥'
(**कारणे** (टि १२०) ८३ पृष्ठे);
'उत्तरायणकाले च दक्षिणायनगे रवौ।
चैत्रे वैशाखमासे च फाल्गुने वा विशेषतः ॥

वैशाखे विधिवत्प्रोक्ता दक्षिणे [1]चाश्विमासके ॥३॥
[2]रोहिण्यश्विपुनर्वसू [3]तिष्यः श्रवणरेवती ।
स्वाति[4]चित्रे भगश्चैव मूला[5]श्लेषाश्च उत्तमाः ॥४॥
सोमे [6]सौम्ये भृगोर्वारे गुरोरादित्यहस्तके ।
भद्रादितिथयः प्रोक्ता नन्दा [7]रिक्ताश्च वर्जयेत् ॥५॥
[8]प्रतिष्ठा स्थिर[9]लग्ने तु [10]मध्यमा चोभयात्मके[11]।
[12]चतुर्थ्यां कार्तिके मासे शुक्लपक्षे शुभे दिने ॥६॥
नागप्रतिष्ठा कर्तव्या [13]चान्यकालेषु वर्जयेत् ।

### [14][नागप्रमाणं नागभेदस्तत्फलं च]

अरत्निद्वयमात्रं वा बाहुमात्रमथापि वा ॥७॥

---

मूढदोषादिरहिते मासि भाद्रभदे तथा ।
श्रावणे वा चाश्वयुजि कार्तिक्यां वा विशेषतः ॥
शुक्लपक्षे विशेषेण कृष्णेऽप्यापञ्चमीदिनात् ।
पञ्चमी नागराजस्य नागाना शान्तिवर्धनी ॥
पञ्चम्यां किल नागानां भवति ह्युत्सवो महान् ।
पञ्चम्यामेव कर्तव्या प्रतिष्ठा फलदायिनी ॥'
(**सिद्धान्तदीपिकायां** (टि. १२०) ९९ पृष्ठे)

[1] अत्र 'चाश्विनमासके' इति भवितव्यम् । वृत्तार्थ लुप्तनकारपदप्रयोग इति भाति ।

[2] रोहिण्यश्वपुनर्वस्सु — ख.

[3] तिष्यश्रवण० — ख.

[4] ०चैत्रभगश्चैव — ख.

[5] ०श्लेषां च उत्तमाः — ख.

[6] सौम्यभृगो० — ख.

[7] रिक्तं च — ख.

[8] प्रतिष्ठां — ख.

[9] ०लग्नं तु — ख.

[10] मध्यमं — ख.

[11] ०त्मकम् — ख.

[12] चतुर्थ्यां — ख.

[13] अन्येषां तु विवर्ज० — ख.

[14] 'नागरूपाकृतिं चैव श्रृणुष्व कमलासन ।
करमानसमं दीर्घं षोडशाङ्गुलविस्तरम् ॥
त्रियङ्गुलघनं प्रोक्तं मध्ये लिङ्गाकृतिर्भवेत् ।
एकाङ्गुलसुविस्तारं त्रियङ्गुलघनं तथा ॥
पुंस्त्रीरूपसमं चैव पार्श्वे वक्त्राकृतिर्भवेत् ।
द्विफणिं बन्धसंयुक्तं पञ्चसप्तफणीन्द्रकम् ॥
एतेषां लक्षणं प्रोक्तम्'
(**कारणे** (टि १२०) ८२ पृष्ठे);
'फणामण्डलशोभाढ्यं कारयेत्सर्पनायकम् ।
ब्राह्मणक्षत्रविट्शूद्राः स्त्रियो वाप्यन्यजातयः ॥
अभीष्टफलसिद्ध्यर्थं शेषस्थापनमाचरेत् ।
श्वेता रक्ता तथा पीता कृष्णा शैला चतुर्विधा ॥
ब्राह्मणादिक्रमेणैव संग्राह्या तु शिला शुभा ।
अभावे सर्ववर्णानां कृष्णशैला प्रशस्यते ॥
दशतालप्रमाणेन ब्राह्मणानां विधीयते ।
नवतालं क्षत्रियाणां वैश्यानामष्टतालकम् ॥
षट्तालं चैव शूद्राणां तत्तटस्थप्रमाणतः ।
हस्तमात्रशिला श्रेष्ठा तस्यां नागो विधीयते ॥
तदर्धा मध्यमा प्रोक्ता त्वधमा तु न विद्यते ।
सर्वलक्षणशोभाढ्या तत्तत्तालप्रमाणतः ॥
एकवक्त्रं पञ्चवक्त्रं द्विवक्त्रं वापि कल्पयेत् ।
एकवक्त्रं पञ्चवक्त्रं नागं वै मण्डलाकृतिम् ॥
कुर्यात्फणान्तरे लिङ्गं केवलं वा फणान्वितम् ।
अन्योन्यमुखसंयुक्तं द्विवक्त्रमिति कीर्तितम् ॥
द्वाभ्यां चैव तु नागाभ्यां वेष्टनं च द्विवक्त्रकम् ।
पञ्चवृत्तं त्रिवृत्तं वा फणामण्डलया सह ॥
ब्राह्मणानां पञ्चवृत्तमितरेषां त्रिवृत्तकम् ।

नागस्य भोगो विज्ञेयो बाहुवत्स्थूल उच्यते[1]।
एकवक्त्रं द्विवक्त्रं वा त्रिवक्त्रं पञ्चवक्त्रकम् ॥८॥
[2]एकवक्त्राद्राजवश्यं [3]द्विवक्त्राद्भोग एव च ॥
[4]त्रिवक्त्रात्पुत्रसिद्धिस्तु पञ्चवक्त्राद्यशो भवेत् ॥९॥
दम्पत्योः पुत्रसौभाग्यवश्यभोगयशो [5]भवेत्।
एकवक्त्रादिनागं तु [6]कृत्वा शिल्पिवरेण तु ॥१०॥
प्रतिष्ठाप्य शुभे देशे सर्वसिद्धिमवाप्नुयात्।

[7][आचार्यऋत्विजां वरणं वेदपारायणाय विप्रवरणं च]

प्रतिष्ठादिवसात्पूर्वं कृत्वा ब्राह्मणभोजनम् ॥११॥
आशिषो वाचयित्वा तु आचार्यं वरयेत्ततः।
आदिशैवकुलोद्भूत[8]मागमार्थविशारदम् ॥१२॥
शान्तं दान्तं जितक्रोधं [9]कुटुम्बिनमरोगिणम्।
वेदशास्त्रार्थकुशलं लौकिकेषु [10]विचक्षणम् ॥१३॥
आचार्यं वरयेत्पश्चाद्दीक्षायुक्तांस्तथेतरान्[11]।
अष्ट विप्रांश्च वरयेदृत्विजः शास्त्रवित्तमान् ॥१४॥
वेदपारायणार्थं च वरयेदष्टसंख्यकान्।

---

अन्योन्यमुखसंयुक्तो नागराजः शिलामये॥
वृत्तं प्रति च पद्मं स्याच्छिवलिङ्गं फणान्तरे।
पद्मं वापि प्रकर्तव्यं केवलं वापि सर्वशः॥
दोषपापक्षयार्थी तु पद्मं वा केवलं तु वा।
पुत्रार्थी चैव मोक्षार्थी लिङ्गं पद्मं च कल्पयेत्॥'
(**सिद्धान्तदीपिकायां** (टि. १२०) पृ० १००, १०१);

एतस्मिन्विषये पुनः रौरवे क्रियापादे ३८.३–१४ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।

[1] ०त्स्थूलमुच्यते — ख.

[2] एकवक्त्रं राज० — ख.

[3] द्विवक्त्रं भोगमेव — ख.

[4] त्रिवक्त्रं पुत्र० — ख.

[5] भवत् — ख.

[6] 'घ' मातृकायां दशमश्लोकचतुर्थपादप्रभृत्येव ग्रन्थो दृश्यते। एतत्पूर्वतनग्रन्था लुप्ताः। किं चात्र मातृकायामेतत्पटलस्थाः सर्वे श्लोका नोपलक्यन्ते। उपलभ्यमानानां श्लोकानां विषय एव पाठभेदोऽत्र प्रदर्श्यते।

[7] 'आचार्यं वरयेत्पूर्वमृत्विजस्तदनन्तरम्।
आदिशैवकुलोद्भूतं दीक्षितं वेदपारगम्॥
सर्वशास्त्रविचारज्ञं ज्ञानयोगविशारदम्।
क्रियापादेषु कुशलं सर्वावयवसुन्दरम्॥
ऋत्विजस्तत्कुलोद्भूतानष्टौ शैवान्विचक्षणान्।
जापकाञ्शैवसंभूतान्वैदिकान्वेदपारगान्॥
अष्टावष्टौ तु वरयेद्यथेष्टं वा स्वशक्तितः।
एवं वै वरयेत्कर्ता उपोष्य व्रतमाचरेत्॥'
(**सिद्धान्तदीपिकायां** (टि १२०) पृ० १०५, १०६)

[8] ०मागमार्थिविशारदम् — ख; ०मागमार्थ विशारदम् — घ.

[9] कुटिम्बिन० — ख; कुडुम्बिन० — घ.

[10] विचक्षणः — घ.

[11] ०द्दीक्षायुक्तं तथेतरम् — ख.

[१] [पुण्याहवाचनादि]

[२]पुण्याहं वाचयित्वा तु [३]द्रव्यशुद्धिं विधाय च ॥१५॥
कृत्वा तु सर्वकर्माणि देशिको ब्राह्मणैः सह।
आगमोक्तविधानेन मृत्संग्रहणपूर्वकम् ॥१६॥
वास्तुहोमं ततः कृत्वा अङ्कुरार्पणमेव च।
विष्णुक्रान्तिदलैः शुभ्रैर्बेरशुद्धिं च कारयेत्[४] ॥१७॥

[५] [नेत्रोन्मीलनम्]

[६]प्रक्षाल्य सर्पबेरं च पूजाकार्यार्थसिद्धये।

---

[१] 'ततः शिल्पिनमुद्वास्य पुण्याहं वाचयेत्ततः।
अङ्कुरानर्पयेत्पूर्वं पूर्वोक्तविधिमार्गतः॥
वास्तुशान्तिं ततः कृत्वा मण्डपं तेन वह्निना।
शुद्धिं कृत्वा ततः सम्यक् पुण्याहं वाचयेद्गुरुः।'
(**सिद्धान्तदीपिकायां** (टि. १२०) पृ० १०७, १०८)

[२] इदमर्धं 'घ' मातृकायासेव दृश्यते।

[३] एतद्विषये **अजिते** २०.११२–११५ श्लोकास्तदीयटिप्पणी, **रौरवे** क्रियापादे १०.७,८पू० श्लोकश्च द्रष्टव्याः।

[४] ०बेरशुद्धिर्विधीयते — घ.

[५] 'नयनोन्मीलनार्थाय त्वन्यदेवेशमण्डपे।
स्थण्डिलद्वितयं कार्यमेकत्रैवाधिदेवताम्॥
आवाह्य गन्धपुष्पाद्यैरभ्यर्च्य च यथाविधि।
तन्मध्ये नागराजं तु श्वेतवस्त्रोपरि न्यसेत्॥
स्वर्णसूच्यादिना शिल्पिनयनोन्मीलने तदा।
आचार्य उच्चरेन्मन्त्रं शिल्पी नेत्रस्य मोक्षणम्॥
कुर्यात्पटावृतं बिम्बमन्यो न च निरीक्षयेत्।
ज्योतिर्मण्डलमालिख्य कृष्णमण्डलमालिखेत्॥
शिल्पिनं पूजयेत्तत्र वस्त्राद्यैश्च स्वशक्तितः।
इतरस्थण्डिले बिम्बं संस्थाप्य च गुरूत्तमः॥
सौवर्णदूर्वया नेत्रं लिखेत्पूर्वाननस्तदा।
नेत्रमन्त्रं समुच्चार्य स्पृशेन्नेत्रं जपेन्मनुम्॥
दुग्धाज्यमधुधान्यानि पञ्चब्रह्ममनुस्मरन्।
दुग्धमाप्येति मन्त्रेण घृतं वै घृतमन्त्रतः॥
मधुवातेति मधु च त्विदं विष्णिवति धान्यकम्।
ब्रह्मजज्ञानमन्त्रेण ब्राह्मणान्दर्शयेत्सुधीः॥
गौर्धेनुभव्यमन्त्रेण सवत्सां गां प्रदर्शयेत्।
सुमङ्गलीति मन्त्रेण कन्यकां दर्शयेत्ततः॥
संशोध्य मृज्जलाभ्यां तं प्रक्षाल्य पयसा ततः।
शुद्धजलैस्तु संशोध्य तद्गायत्र्याभिषेचयेत्॥
हृदा संपूज्य नागेन्द्रं पञ्चब्रह्ममनुस्मरन्।
वस्त्रकूर्चेन संवेष्टय गन्धपुष्पादिभिर्यजेत्॥'
(**सिद्धान्तदीपिकायां**(टि १२०)पृ० १०८–११०);
एतस्मिन्विषये पुनः **रौरवे** क्रियापादे ३८.१५उ०–१७पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।

[६] 'ग' मातृकायामेतत्पटलस्थाः केचन श्लोका एवोपलभ्यन्ते। अत उपलभ्यमानश्लोकानामेवात्र पाठभेदः प्रदर्श्यते। नेत्रोन्मीलनविषयेऽस्यां मातृकायां १८–२० श्लोकानां स्थानेऽधोलिखितरीत्या सार्धश्लोकद्वयं दृश्यते–
'बिम्बशुद्धिं ततः कृत्वा रक्षाबन्धनमाचरेत्।
विश्वतश्चक्षुर्मन्त्रेण नेत्रोन्मीलनमाचरेत्॥
स्वर्णसूच्या तु मधुनोन्मीलनं तु घृतेन वा।
दर्पणं दर्शयेत्पश्चाद्गोविप्रादीन्यथाक्रमम्॥
नीराजनमथो कृत्वा बिम्बशुद्धिमथाचरेत्।'
इति।; 'घ' मातृकायामप्येतद्विषयेऽधोलिखितरीत्या श्लोकद्वयं दृश्यते —
'अर्घ्यजलैरभिषिच्य गन्धपुष्पं प्रकल्पयेत्।
बिम्बशुद्धिं ततःकृत्वा नेत्रोन्मीलनमाचरेत्॥
विश्वतश्चक्षुर्मन्त्रेण नेत्रोन्मीलनमाचरेत्।
स्वर्णसूच्या तु मधुनोन्मीलनं तु घृतेन वा।
इति।

अभिषिच्यार्घ्यतोयेन गन्धपुष्पाद्यलंकृतम्[1] ॥१८॥
नेत्रोन्मीलनमन्त्रेण नेत्रयुग्मं लिखेत्क्रमात् ।
[2]विश्वतश्चक्षुर्मन्त्रेण स्वर्णसूचिकया सह ॥१९॥
[3]मधु संतर्प्य मन्त्रेण मधुना स्वर्णदूर्वया ।
शिल्पिनं विसृजेत्पश्चाद्वस्त्रहेमाङ्गुलीयकैः ॥२०॥

[4][जलाधिवासनादि]

जलाधिवासनं पश्चाद्धान्यवस्त्राधिवासनम् ।
त्रिरात्रमेकरात्रं वा यामं [5]यामार्धमेव वा ॥२१॥
अधिवासनवेलायां [6]गङ्गादीश्च प्रपूजयेत् ।
[7]आचार्यजापकान् ऋत्विग्[8]वेदपारायणान्बहून् ॥२२॥
[9]उदकशान्ति [10]रुद्रसूक्तं [11]श्रीसूक्तं [12]रात्रिसूक्तकम् ।
[13]घृतसूक्तं [14]पुरुषसूक्तं [15]पञ्चशान्ति जपेत्क्रमात् ॥२३॥

---

[1] अत्र कुर्यादित्यध्याहृत्य व्याख्येयम् ।

[2] **तै. आरण्यके** १०.१.

[3] मधु सर्वेभ्यामिति मन्त्रेण—ख; मन्त्रेण—मधुमन्त्रेण; 'मधुवाता ऋतायेति मधुना तर्पयेद्बुधः' **रौरवे** क्रियापादे ३१.१४ पू०; **ऋग्वेदे** १.९०.६; **तै. संहिता** ४.२.९.७.

[4] जलाधिवासः —
'ग्रामप्रदक्षिणं कृत्वा स्वस्तिसूक्तसमन्वितम् ।
जलाशयं ततः प्राप्य जलमध्ये प्रपां कुरु ॥
तन्मध्ये शाययेद्बिम्बं जानुदघ्नजले ततः ।
तीरे च स्थण्डिलं कृत्वा इन्द्रादीन्पूर्ववद्यजेत् ॥
आचार्यः सह ऋत्विग्भिर्नागं स्पृष्ट्वा जपेत्तथा ।
मूलब्रह्माङ्गमन्त्रैश्च दिक्पालानां च मन्त्रतः ॥
अनन्तादिमहानागमन्त्रान्गायत्रिया सह ।
अष्टोत्तरशतं जप्त्वा ऋत्विग्भिर्ब्राह्मणैः सह ॥
भाष्योच्चारेण मन्त्रेण त्वेकवारं गुरुर्जपेत् ।
इदं सर्पेभ्यो मन्त्रेण नमो अस्त्विति मन्त्रतः ॥
आयुःश्रीभूमिसूक्तं च सौरं मृत्युजयं तथा ।
वेदादिमन्त्रं स्कन्दस्य सूक्तं वै पुरुषसूक्तकम् ॥
जपं समाप्य पश्चात्तु याममात्रावसानके ।
जलादुत्तीर्य बिम्बं तु वस्त्रकूर्चं व्यपोह्य च ॥
कुम्भाद्भिः प्रोक्षयेत्पश्चादन्यवस्त्रेण वेष्टयेत् ।
अभ्यर्च्य गन्धपुष्पाद्यैर्नैवेद्यं तु निवेदयेत् ॥
प्रदक्षिणक्रमेणैव यागशालां प्रवेशयेत्' ।
(**सिद्धान्तदीपिकायां** (टि. १२०) पृ० ११०, १११);
एतस्मिन्विषये पुनः **रौरवे** क्रियापादे ३८.१७उ०, १८ पू० श्लोकस्तदीयटिप्पणी च द्रष्टव्यौ ।

[5] यामार्थमेव — ख.

[6] गङ्गादीनां च — ख.

[7] आचार्यो जापकान् — ख.

[8] 'वेदपारायणान्' इत्यस्य पदस्य लक्षणया 'वेदपारायणकर्तॄन्' इत्यर्थो बोध्यः ।

[9] उदकशान्तिमन्त्राः; एतस्मिन्विषये **याजुषमन्त्ररत्नाकरे** २५–८० पृष्ठानि द्रष्टव्यानि ।

[10] रुद्रसूक्तम्; एतस्मिन्विषये **याजुषमन्त्ररत्नाकरे** ९० तमं पृष्ठं द्रष्टव्यम् ।

[11] **ऋग्वेदे** खिलभागे पञ्चममण्डलस्यान्ते विद्यमानः खिलभागः ।

[12] **ऋग्वेदे** १०.१२७

[13] **तै. आरण्यके** १०.१.

[14] **तै. आरण्यके** ३.१२.

[15] पञ्चशान्तिः; एतस्मिन्विषये **याजुषमन्त्ररत्नाकरे** १७५–१७७ पृष्ठानि द्रष्टव्यानि ।

[1]जलादुत्थाप्य बेरं च कृत्वा ग्रामप्रदक्षिणम्।
[2]क्षीराधिवासनं कुर्यात्पयःसूक्तेन[3] मन्त्रतः ॥२४॥
[4]धान्यसूक्तेन मन्त्रेण [5]शालिधान्याधिवासनम्।
[6]युवा सुवासाः परिवीतेति वस्त्राधिवासनम् ॥२५॥

[7][रक्षाबन्धनम्]

[8]त्रियम्बकेति मन्त्रेण रक्षासूत्रं तु [9]बन्धयेत्।
[10]बृहत्सामेति मन्त्रेण[11] भस्मरक्षां च कारयेत् ॥२६॥

[12][मण्डपस्तत्र वेदिकुण्डकल्पनं च]

षोडशस्तम्भसंयुक्तं वितानध्वजभूषितम्।

---

[1] जलादुद्धाप्य — ख.

[2] 'घ' मातृकायां (२४ उ०, २५) सार्धश्लोकस्य-स्थाने 'क्षीराभिषेकं कुर्याद्धान्यवस्त्राधिवासनम्।' इत्येकमेवार्धं दृश्यते।

[3] पयःसूक्तम्; **तै. संहिता** ४.२.७.

[4] धान्यसूक्तम्; **तै. संहिता** ४.२.६.

[5] शाल्या धान्याधिवासयेत् — ख;
धान्याधिवासः — 'अथ मम समस्तपापक्षयार्थं नागप्रतिष्ठाङ्गं नागबिम्बस्य धान्याधिवासं करिष्य इति संकल्प्य, पञ्चद्रोणपरिमितधान्यपरिपूरिते पात्रे नागबिम्बं धान्यमध्ये तिरोधाप्य पूर्ववन्मुहूर्तकालं नागराजगायत्रीं जपेत्।'
(**शान्तिकुसुमाकरे** पूर्वभागे पृ० २१);
'पश्चाज्जलाधिवासस्य धान्यवासं तु कारयेत्।
धान्यं संशोध्य विधिवत्प्रोक्ष्य पुण्याहवारिभिः॥
धान्येऽस्मिन्कण्ठदघ्ने तु स्त्रीबेरं निक्षिपेत्सुधीः।
पुंबेरं निक्षिपेत्तत्र स्तनान्तं देशिकोत्तमः॥
अष्टपुष्पं समभ्यर्च्य ताम्बूलादि निवेदयेत्।
एवं मुहूर्तं निक्षिप्य पश्चाद्ग्रामप्रदक्षिणम्॥'
(आर्. इ. १५५४० इत्यङ्किते तालपत्रकोशे २१ तमे पत्रे **प्रतिष्ठानुक्रमण्याम्**।)

[6] **तै. ब्राह्मणे** ३.६.१; इदं वस्त्राणि युग्मासु परिवित वस्त्राधि० — ख

[7] रक्षाबन्धं ततः कृत्वा पूर्वोक्तविधिना गुरुः।
(**सिद्धान्तदीपिकायां** (टि.१२०) १११पृ०)

[8] **तै. आरण्यके** १०.७४.

[9] बद्धायात् — घ.

[10] **सामवेदे** ८०९.

[11] मन्त्रतः — घ.

[12] 'देवाग्रे चोत्तरे वापि त्वैशान्यां वा विशेषतः;
नवहस्तप्रमाणेन मण्डपं चतुरश्रकम्॥
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव वा।
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्॥
वितानध्वजसंयुक्तं दर्भमालासमन्वितम्।
कूटं वापि प्रपाकारं मण्डपं कारयेत्सुधीः॥
मण्डपं नवधा भज्य मध्यभागे तु वेदिकाम्।
अरत्निमात्रसंयुक्तां दर्पणोदरसंनिभाम्॥
उपवेदिसमायुक्तां प्रकुर्यात्तु यथाविधि।
नवाग्न्यायतनं वापि पञ्चाग्न्यायतनं तु वा॥
एकाग्न्यायतनं वापि कुर्यात्पूर्वोक्तवर्त्मना।
नवाग्न्यायतने सर्वं पद्माकारं तु कुण्डकम्॥
पुरन्दरेशयोर्मध्ये वृत्तकुण्डं प्रधानकम्।
अथवा तु चतुर्दिक्षु चतुरश्रं विदिक्षु च॥
पद्मकुण्डं प्रधाने तु वृत्तं वा चतुरश्रकम्।
पञ्चाग्न्यातने दिक्षु पद्मं वृत्तं प्रधानकम्॥
एकाग्न्यायतने पूर्वे वृत्तं वा चतुरश्रकम्।

तन्मध्ये वेदिकां [१]कुर्याद्धस्तद्वयसमानकाम्[२] ॥२७॥
अष्टाङ्गु[३]लोच्छ्रितां कुर्यादुपवेदिसमन्विताम्[४] ।
दर्पणोदर[५]संकाशां शालिपिष्टेन रञ्जयेत् ॥२८॥
[६]तत्पूर्वे हस्तमानेन वृत्तकुण्डं प्रकल्पयेत् ।
नाभियोनिसमायुक्तं मेखलात्रयसंयुतम् ॥२९॥

[७][ शयनाधिवासः ]

[८]वेद्युपरि [९]विनिक्षिप्य चतुर्द्रोणप्रमाणतः ।
[१०]धान्यार्धतण्डुलैश्चैव [११]तदर्धैश्च तिलैरपि ॥३०॥
[१२]नागगायत्रिमन्त्रेण [१३]शयनानि प्रकल्पयेत् ।
[१४]अण्डजं मुण्डजं चैव रोमजं [१५]दारुजं तथा ॥३१॥
[१६]वामजं [१७]शयनं पञ्च वेद्यूर्ध्वे विन्यसेद्बुधः ।
[१८]नागगायत्रिमन्त्रेण शयने शाययेद्बुधः ॥३२॥

---

कुण्डं कृत्वा विधानेन गोमयेनानुलेपयेत् ॥
ततः शिल्पिनमुद्वास्य पुण्याहं वाचयेत्ततः ।'
(**सिद्धान्तदीपिकायां** (टि. १२०) पृ० १०६, १०७); एतद्विषये पुनः **रौरवे** क्रियापादे ३८.१८ उ०–२० पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[१] कृत्वा हस्त० — ख.

[२] ०समानकम् — ख.

[३] ०लोच्छ्रतं कृत्वा उप० — ख.

[४] ०समन्वितम् — ख.

[५] ०संकाशं — ख.

[६] एतदर्धस्थाने 'घ' मातृकायां 'कुम्भस्य पश्चिमे भागे होमकुण्डं तु कारयेत्' इति दृश्यते ।

[७] 'वेद्यूर्ध्वे स्थण्डिलं कृत्वा चाष्टद्रोणैश्च शालिभिः ।
तदर्धतण्डुलैश्चैव तदर्धैश्च तिलैरपि ॥
सप्तधान्यैश्च लाजैश्च दर्भैश्चैव परिस्तरेत् ।
पञ्चवर्णसमायुक्तं वस्त्रं तस्योपरि न्यसेत् ॥
तन्मध्ये शाययेद्बिम्बं प्राक्शिरश्चोर्ध्ववक्त्रकम् ।'
(**सिद्धान्तदीपिकायां** (टि. १२०) पृ० १११); एतस्मिन्विषये पुनः **रौरवे** क्रियापादे ३८.२० उ०–२३ श्लोका द्रष्टव्याः ।

[८] वेद्योपरि — ख, घ.

[९] विनिक्षिप्या — घ.

[१०] धान्यार्ध तण्डुलं चैव — ख; धान्यर्थतण्डुलं चैवा — घ.

[११] तदर्थैश्च — ख; तदर्धं तिललाजकैः — घ.

[१२] अस्मिन्पटले 'नागगायत्रिमन्त्रेण' इति ह्रस्वान्तगायत्रिपदसहितप्रयोगो बहुशो दृश्यते। स च प्रयोगो वृत्तार्थं कृत इति भाति। नागगायत्रीमन्त्रश्च ११२ पूर्वर्धानन्तरं प्रोच्यते।

[१३] शयनादीन् प्र० — ख; शयनादि प्रगन्तु — घ.

[१४] अण्डजादिशयनविषये **रौरवे** क्रियापादे २८.३९ उ०; ४०पू० श्लोकः; **रौरवोत्तरे** १६.२८उ०, २९ पू० श्लोकस्तदोयटिप्पण्यश्च द्रष्टव्याः ।

[१५] धातुजं — ख;
"दारुजं चर्मजं चैव रोमजं पक्षजं तथा ।
उपर्यास्तरणोपेतं शयनं पञ्चधा भवेत् ॥
दारुजं फलकं ज्ञेयं क्षीरवृक्षसमुद्भवम् ।'
(**अजिते** ४०.५१ उ०; ५२)

[१६] वर्मजं — ख; 'कौशेयं वामजं प्रोक्तम्' **सुप्रभेदे** क्रियापादे ३६.४४ पू० ।

[१७] शयने — ख.

[१८] एतस्मिन्विषये ३१ श्लोकपूर्वार्धटिप्पणी द्रष्टव्या ।

[1][कुम्भस्थापनम्]

[2]पद्ममष्टदलं लिख्य [3]तन्मध्ये स्थापयेद्घटान्।
[4]साम्रपत्रनालिकेरान्सरत्नान्सूत्रवेष्टितान्[5] ॥३३॥
[6]सकूर्चान्रक्तवस्त्रांश्च [7]सुगन्धवारिपूरितान्[8]

[9][स्वर्णनागप्रतिमा]

दशनिष्कसुवर्णेन तदर्धार्धेन वा पुनः ॥३४॥
स्वर्णेन नागप्रतिमां कुर्यात्तद्वेररूपिणीम्।
प्रधानप्रतिमाद्वयंशे [10]एकांशे पञ्चधा कृताम् ॥३५॥

[मण्डपपूजा]

आचार्य [11]ऋत्विजैः सार्धं [12]स्नातैर्वस्त्रोत्तरीयकैः।
[13]पञ्चमुद्रासमायुक्तः कर्णाङ्गुलिविभूषणः ॥३६॥
[14]नित्यां नैमितिकीं संध्यां संध्यायां तु विशेषतः।

---

[1] 'नागस्यैव शिरोदेशे प्रधानं द्रोणपूरितम्।
नवरत्नसमायुक्तं चूतपत्रैरलंकृतम् ॥
वस्त्रयुग्मेन संवेष्टय वेदिमध्ये तु विन्यसेत्।
तस्याग्रे शिवलिङ्गस्य फणामध्यस्थितस्य च ॥
विन्यसेत्कुम्भमेकं तु पूर्वोक्तेनैव वर्त्मना।
तस्याग्रे नागराजस्य बिम्बं निष्कसुवर्णकम् ॥
कृत्वा कुम्भस्य चाग्रे च वस्त्रोपरि च विन्यसेत्।
परितः कलशानष्टौ ससूत्रान्सापिधानकान् ॥
सवस्त्रान्हेमसंयुक्तान्कूर्चपल्लवसंयुतान्।
सरत्नान्प्रतिमायुक्तान्सर्वलक्षणसंयुतान् ॥
इन्द्रादीशानपर्यन्तं दलाग्रे विन्यसेत्क्रमात्।'
(**सिद्धान्तदीपिकायां** (टि १२०) पृ० ११२, ११३);
एतस्मिन्विषये पुनः रौरवे क्रियापादे ३८.२४, २५ श्लोकौ तदीयटिप्पणी च द्रष्टव्याः।

[2] पदमष्टदलं विलिख्य — घ.

[3] कुम्भानां स्थापनोपरि — घ.

[4] साम्रपत्राम्रालि – ख; आम्रतपत्रं नालिकेरं – घ.

[5] सरक्तं सूत्रवेष्टितम् — घ.

[6] सकूर्च रक्तवस्त्रं च — घ.

[7] सुगन्धान्वारि० — ख; सुगन्धं वारि० — घ.

[8] ०पूरितम् — घ.

[9] 'निष्कादिदशनिष्कान्तहेम्ना वापि सलक्षणा।
दशादिशतनिष्कान्तरौप्येणापि विनिर्मिता ॥
पलादितिथिसंख्यान्तताम्रेणापि विनिर्मिता।
प्रतिमा स्वार्थकृत्येषु दानेषु च विधीयते ॥'
(**सिद्धान्तदीपिकायां** (टि. १२०) पृ० १०३)

[10] येकांशे — ख.

[11] ऋत्विक्शब्दस्याकारान्ततया प्रयोग इति भाति।

[12] स्नातवस्त्रो० — ख.

[13] पञ्चमुद्राः —
'रुद्राक्षमुपवीतं च उष्णीषं चोत्तरीयकम्।
भस्म चैवादिशैवानां पञ्चमुद्राः प्रकीर्तिताः ॥'
(**'शैवागमपरिभाषामञ्जर्याम्** ५.१७५ उ०, १७६ पू०)

[14] नित्यनैमिकं संध्या — ख;

**विशेषेण च संकल्प्य पुण्याहं वाचयेत्क्रमात् ॥३७॥**

[1][सूर्यपूजादि]

**सूर्यपूजां ततः कृत्वा गणेशं पूजयेत्ततः ।**
**प्राणसंयमनं कृत्वा सकलीकरणं चरेत् ॥३८॥**

[द्वारदेवतापूजा]

**सामान्यार्घ्यं च संसाध्य प्रोक्षयेद्द्वार[तो]रणान् ।**
**[2]शान्तिभूतिबलारोग्यं न्यसेत्पूर्वादितोरणे[3] ॥३९॥**
**[4]दुर्गासरस्वतीलक्ष्मीर्द्वारस्योर्ध्वे समर्चयेत् ।**
**द्वारस्य उत्तरे पार्श्वे सहस्रशिरसे नमः ॥४०॥**
**तद्द्वारदक्षिणे पार्श्वे आदिशेषं समर्चयेत् ।**
**दक्षिणे द्वारपूर्वे तु [5]भूमिधारणं पश्चिमे ॥४१॥**
**[6]फणामणिमण्डितं च [7]पश्चिमद्वारदक्षिणे ।**
**[8]तक्षकं पूजयेत्पश्चादुत्तरे [9]मणिगर्भितम् ॥४२॥**
**उत्तरद्वार[10]पश्चिम्यां महानागं तु पूर्वके ।**
**[11]महानालं च संपूज्य द्वाराणामुभयपार्श्वयोः[12] ॥४३॥**

---

'आचार्यो मूर्तिपैः सह सायं संध्यां विशेषसंध्यां च निर्वृत्य, परिजनैः स्वस्तिमङ्गलवाचकैः सहितं यागशालां प्रदक्षिणक्रमेण पूर्वद्वारेणान्तः प्रविश्य, कूर्मासनोपरि सौम्यास्य उपविश्य, संकल्प्य, सकलीकृत्य, सामान्यार्घ्यं संस्थाप्य, तिरःपवित्रे विघ्नेश्वरपूजां विधाय, पुण्याहवाचनं कृत्वा तदम्भसा मण्डपं संप्रोक्ष्य'
(**शिवागमशेखरे** द्वितीयभागे पृ० ६९)

[1] 'भान्वादिगुरुपर्यन्तमर्चनोक्तं समाचरेत् ।
अभ्यर्च्य गन्धपुष्पाद्यैर्नैवेद्यान्तं समाप्य च ॥'
(**सिद्धान्तदीपिकायां** (टि. १२०) पृ० ११२)

[2] शान्तिभूतबलारोग्यान् — ख;
'शान्तिभूतिबलारोग्यं तोरणेषु प्रकल्पयेत्'
(**पूर्वकारणे** २५.५० उ०);
'प्लक्षोदुम्बराश्वत्थवटजास्तोरणाः क्रमात् ।
पूर्वादितो विधातव्या यद्वाद्यन्तविपर्ययः ॥
शान्तिभूतिबलारोग्यनामान्येषां यथाक्रमम् ।
(**'सोमशम्भुपद्धतौ** ३.२.३६, ३७ पू०)

[3] 'घ' मातृकायां ३९ श्लोकस्योत्तरार्धानन्तरं —
'मण्डपे लोकपालानां तत्तत्स्थाने तु पूजयेत्'
इत्यर्धमेकमधिकतया दृश्यते । लोकपालार्चनस्य ५२ पूर्वार्धे वक्ष्यमाणत्वादत्रेदमर्धं पाठतया न संघटितम् ।

[4] दुर्गासरस्वतीपूजा द्वारपार्श्वे तु पूजयेत् — घ.

[5] भूमिधारणपश्चिमे — ख.

[6] भणामणिमण्डितश्च — ख.

[7] पश्चिमे द्वार — ख.

[8] तक्षं पूज — ख.

[9] माणि — ख.

[10] ०पश्चम्य महा० — ख; 'पश्चिमायाम्' इत्यत्र 'पश्चिम्याम्' इति प्रयोगः । एतद्विषये **रौरवोत्तरे** १४.७ पूर्वार्धटिप्पणी द्रष्टव्या ।

[11] अत्र 'महापालं' इति पाठो युक्त इति भाति ।

[12] ०मुभपार्श्वयोः – घ.

[1]नित्यवत्पश्चिमद्वारे दृष्टया दिव्यान्तरिक्षकान्[2]।
[3]नैर्ऋते वास्तुनाथं च पूजयेदुपचारकैः ॥४४॥
[4]पूर्वादिदिग्ध्वजे [5]पूज्या वज्रादिक्रमदेवताः[6]।
[7]कुमुदादीन्पताकासु [8]हेतुघ्नाद्यष्टकं यजेत् ॥४५॥

---

[1] 'नित्यवत्' इत्यस्यानन्तरं 'संपूज्य' इत्यध्याहृत्य व्याख्येयम्।;
'पश्चिमद्वारमाश्रित्य पुष्पक्षेपं विधाय च।
अस्त्रेण पार्ष्णिघातस्य त्रयं कृत्वाथ भूगतान्॥
कृत्वा तालत्रयं मन्त्री विघ्नानाकाशवर्तिनः।
छोटिकात्रयतो विघ्नान्धाम्नः प्रोत्सारयेद्बहिः॥
दक्षजङ्घां समुत्क्षिप्य वामशाखाश्रयी विशेत्।
अस्त्रेणोदुम्बरे पुष्पं क्षिप्त्वा धाम्नश्च मध्यमे।'
(**उत्तरकामिके** २०.७–९);
'पश्चिमद्वारमारुह्य नित्यद्वारादिकं यजेत्।
दिव्यान्तरिक्षभूमिष्ठान्विघ्नानुत्सार्य बुद्धिमान्॥
दक्षजङ्घां समुत्क्षिप्य वामशाखां विशेषतः।
अस्त्रेणोदुम्बरे पुष्पं द्वारं प्रति विचक्षणः॥'
(**पूर्वकारणे** ५८.३९ उ०–४१ पू०);
'तत्त्वदृष्टयावलोक्य शेषद्वाराणि घट्टयन् नित्यवद् द्वारपालान् पश्चिमद्वारे संपूज्य'।
'न्यस्तमूलेन चक्षुषोर्ध्वं विलोक्य दिव्यान् ओं हः अस्त्राय फड् इति, ज्वलन्नाराचमुद्रया पुष्पं क्षिप्त्वान्तरिक्षगान्, 'ओं हुं फड्' इति पाशुपतास्त्रेण दक्षिणपार्ष्णिघातत्रयेण भूमिष्ठांस्त्रिविधान्विघ्नानुद्वास्य'।
(**अघोरशिवकृतशिवप्रतिष्ठाविधौ** पृ० ११५)

[2] अत्र 'भूमिष्ठांश्च विघ्नान्प्रोत्सार्य' इति पदत्रयमध्याहृत्य व्याख्येयम्।; अत्र **अजिते** २०.१२८ उ०, १२९ पू० श्लोको द्रष्टव्यः।; दिव्यन्तरिक्षके — ख.

[3] 'वास्तोष्पतये चेति ब्रह्मणे नम इत्यपि। — संपूज्य गन्धपुष्पाद्यैर्ब्रह्माणं निर्ऋतिगोचरे॥'
(**पूर्वकारणे** ५८.४१ उ०, ४२ पू०);
'प्रादक्षिण्येन गत्वा नैर्ऋते —
हंसस्थं तुन्दिलं गौरं सश्मश्रुचतुराननम्।
दधानं दक्षिणे वामे दण्डाक्षस्रुक्कमण्डलुम्॥
ओं हां वास्त्वधिपतये ब्रह्मणे नम इत्यभ्यर्च्य'
(**अघोरशिवकृतशिवप्रतिष्ठाविधौ** ११७);

[4] 'वज्रं शक्तिं च दण्डं च खड्गं पाशं तथा गुरुः।'
'गदां त्रिशूलं चक्रं च पद्मं चेति दशायुधम्॥
पूर्वादिदिक्पताकादौ पूजयेत्तु दशायुधम्।'
(**पूर्वकारणे** ५८.३३ उ०, ३४);
दशायुधपूजाविषये **अघोरशिवाचार्यविरचित शिवप्रतिष्ठाविधौ** १९५–१९८ पृष्ठानि द्रष्टव्यानि।

[5] पूज्य वज्रा० — ख.

[6] ०देवतान् – ख.

[7] 'कुमुदः कुमुदाक्षश्च पुण्डरीकश्च वामनः।
शङ्कुकर्णस्तथा शर्वस्त्रिणेत्रः सुप्रतिष्ठितः॥
पूर्वादिध्वजाष्टवामानां[पालांस्तु?]समभ्यर्च्य यथाक्रमम्।'
(**पूर्वकारणे** ५८.३५, ३६ पू०);
'द्वारोपरिस्थितध्वजे ओं हां कुमुदासनाय नमः। ओं हां कुमुदमूर्तये नमः —
कुमुदं पूर्वदिग्भागे सितवर्णं विभावयेत्।
द्विलोचनं द्विबाहुं च दण्डाभयकरान्वितम्॥
ओं हां कुमुदाय नमः, अग्निकोणध्वजे ओं हां कुमुदाक्षासनाय नमः। ओं हां कुमुदाक्षमूर्तये नमः —
आग्नेय्यां कुमुदाक्षं च दशभानुसमप्रभम्।
द्विलोचनमहं वन्दे दण्डाभयकरान्वितम्॥
ओं हां कुमुदाक्षाय नम इत्येवं पूर्वद्वारदेवानाराध्य सर्वोपचारैः संपूज्य'
'द्वारोपरिस्थितध्वजे ओं हां पुण्डरीकासनाय नमः। ओं हा पुण्डरीकमूर्तये नमः —
भृङ्गाभं पुण्डरीकाख्यं दक्षिणस्यां दिशि ध्वजे।
द्विलोचनमहं वन्दे दण्डाभयकरान्वितम्॥
ओं हां पुण्डरीकाय नमः।

**[1]मण्डपोर्ध्वे स्थिते [2]कम्पे पृथ्व्यादिब्रह्मपञ्चकम्।**
**[3]वेदिदक्षिणपार्श्वे तु [4]व्याघ्रचर्मासनोपरि ॥४६॥**
**स्थित्वा देवस्य [5]दक्षिण्यां [6]करन्यासं समाचरेत्।**

---

निर्ऋतिकोणध्वजे ओं हां वामनासनाय नमः। ओं हां वामनमूर्तये नमः—
वामनं नैर्ऋते देशे भिन्नाञ्जनसमद्युतिम्।
द्विलोचनमहं वन्दे दण्डाभयकरान्वितम्॥
ओं हां वामनाय नम इत्येवं दक्षिणद्वारदेवानाराध्य सर्वोपचारैः संपूज्य'
'द्वारोपरिस्थितध्वजे ओं हां शङ्कुकर्णासनाय नमः। ओं हां शङ्कुकर्णमूर्तये नमः—
वारुण्यां दिशि नक्षत्रसंनिभं शङ्कुकर्णकम्।
द्विलोचनमहं वन्दे दण्डाभयकरान्वितम्।
ओं हां शङ्कुकर्णाय नमः।
वायुकोणध्वजे ओं हां शर्वनेत्रासनाय नमः। ओं हां शर्वनेत्रमूर्तये नमः—
वायव्यां शर्वनेत्रं वै रक्तवर्णं महाबलम्।
द्विलोचनमहं वन्दे दण्डाभयकरान्वितम्।
ओं हां शर्वनेत्राय नम इत्येवं पश्चिमद्वारदेवानाराध्य सर्वोपचारैः संपूज्य'
'द्वारोपरिस्थितध्वजे ओं हां सुमुखासनाय नमः। ओं हां सुमुखमूर्तये नमः—
सुमुखं षट्पदप्रख्यं कौबेरदिशि संस्थितम्।
द्विलोचनमहं वन्दे दण्डाभयकरान्वितम्॥
ओं हां सुमुखाय नमः।
ईशानकोणध्वजे ओं हां सुप्रतिष्ठितासनाय नमः। ओं हां सुप्रिष्ठितमूर्तये नमः—
शशाङ्कधवलं ध्यायेदीशाने सुप्रतिष्ठितम्।
द्विलोचनं द्विबाहुं च सरत्नमकुटान्वितम्॥
ओं हां सुप्रतिष्ठिताय नम इत्येवमुत्तरद्वारदेवानाराध्य सर्वोपचारैः संपूज्य भवद्भिर्यज्ञरक्षकत्वेन स्थातव्यमाहितादरैरिति विज्ञाप्य'। (**अघोरशिवविरचितशिवप्रतिष्ठाविधौ** पृ०१०३, १०७, ११०, १११, ११४)

[6] हेतुकाद्यष्टकं-ख;
'हेतुघ्रस्त्रिपुरघ्नश्च वेतालश्चाग्निजिह्वकः।
कालः कराली भीमश्च एकपादस्तथैव च॥
पूर्वादीशानपर्यन्तं पूजयेत्तु यथाक्रमम्।'
(**पूर्वकारणे** ५८.३६ उ०; ३७);
'पूर्वादिदिक्षु ओं हां हेतुघ्राय नमः। ओं हां त्रिपुरघ्राय नमः। ओं हां वह्न्यास्याय नमः। ओं हां यमजिह्वाय नमः। ओं हां कालाय नमः। ओं हां करालिने नमः। ओं हां एकाङ्घ्रये नमः। ओं हां भीमाय नम इति क्षेत्रपालान् संपूज्य संतुष्टान्परिभाव्य'
(**अघोरशिवाचार्यविरचितशिवप्रतिष्ठाविधौ** पृ० ११४)

[1] 'यागमण्डपकम्पेषु पृथिवीतत्त्वकं यजेत्।
तृणेषु जलतत्त्वं च बन्धेषु चाग्नितत्त्वकम्।
वंशेषु वायुतत्त्वं च स्थूणासु गगनं यजेत्॥'
(**पूर्वकारणे** ५८.४२ उ०; ४३);
'सदाशिवतत्त्वान्तव्याप्तिकं मण्डपं विभाव्य'
(**अघोरशिवाचार्यविरचितशिवप्रतिष्ठाविधौ** पृ० ११७)

[2] कप्यां — ख.

[3] 'उपविष्ट उदग्वक्त्रो भूतशुद्धिं समाचरेत्।
सकलीकरणं कृत्वा कृतान्तर्यजनो गुरुः॥
(**उत्तरकामिके** २०.११ उ०, १२ पू०);
'पश्चाद्वेदीदक्षिणतः कूर्मासने व्याघ्राजिनादौ रुचिरासनः सन्नुदङ्मुखः समुपविश्य, भूतशुद्ध्यन्तर्यजनहवनध्यानस्थानशुद्धिविशेषार्घ्यकरणद्रव्यमन्त्रशोधनपञ्चगव्यसाधनानि कुर्यात्।'
(**अघोरशिवाचार्यविरचितशिवप्रतिष्ठाविधौ** पृ० ११७)

[4] व्याघ्रस्यादासनोपरि — ख.

[5] 'दक्षिणायाम्' इत्यत्र 'दक्षिण्याम्' इति प्रयोगः।; एतद्विषये **रौरवोत्तरे** १४.६ पू० टिप्पणी द्रष्टव्या।

[6] एतद्विषये **अजिते** २०.७३पू०—८०पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।

[1]भूतशुद्धिं ततः कृत्वान्तर्यजनमाचरेत्[2] ।।४७।।
[3]स्थानशुद्धिं ततः कृत्वा [4]मन्त्रशुद्धिं समाचरेत् ।
[5]दण्डभङ्ग्या मुण्डभङ्ग्या कलाभङ्ग्या च विन्यसेत् ।।४८।।
[6]विशेषार्घ्यं च संसाध्य [7]पञ्चमुद्राश्च धारयेत् ।
[8]पञ्चगव्यं च संसाध्य शालादीन्प्रोक्षयेत्कुशैः ।।४९।।
[9]विकिरान्विक्षिपेदस्त्रैः सर्वविघ्नापनुत्तये ।

---

[1] एतद्विषये **अजिते** २०.५१ – ७३ पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[2] एतद्विषये **अजिते** २०.११० उ०; १११ पू० श्लोकस्तदीयटिप्पणी च द्रष्टव्यौ ।; 'ग, घ' मातृकयोः ४७ तमश्लोकोत्तरार्धस्य स्थाने —
'द्वारपूजां समारभ्य भूतशुद्ध्यन्तमेव च ।
अन्तर्यजनमार्गेण अन्तर्यागं समाचरेत् ।।'
इत्यर्धद्वयं दृश्यते । यद्यप्युभयोरपि मातृकयोर्द्वारपूजाविषयकग्रन्थः प्रायेण नोपलभ्यते । तथापि 'द्वारपूजां समारभ्य' इत्यनेन विषयोऽयं सूचित इति भाति ।

[3] एतद्विषये **अजिते** २०.१०८ उ० – ११० पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[4] एतद्विषये **अजिते** २०.११८ श्लोकस्तदीयटिपणी च द्रष्टव्ये ।

[5] दण्डभङ्ग्यादिन्यासविषये **अघोरशिवाचार्यविरचितशिवप्रतिष्ठाविधौ.** १७५–१७८ पृष्ठानि द्रष्टव्यानि ।

[6] 'विशेषार्घ्यं ततः कुर्याद्यवसिद्धार्थकाक्षतैः ।
अद्भिस्तिलकुशाग्रैश्च क्षीरपुष्पैः समन्वितम् ।।
(**उत्तरकामिके** २०.१२ उ०; १३ पू०)

[7] पञ्चमुद्रां च — ख; पञ्चमुद्राविषयेऽस्मिन्पटले ३६ तमश्लोकोत्तरार्धटिप्पणी द्रष्टव्या ।

[8] 'कल्पयेत् पञ्चगव्यं तु तद्विधानमिहोच्यते ।
मण्डपस्य शुभे भागे क्षेत्रे नवपदीकृते ।।
पञ्चतत्त्वकृतन्यासे पञ्चपात्राणि विन्यसेत् ।
शिवे सदाख्ये विद्यायां काले पुंसि च देशिकः ।।
सुप्रतिष्ठं सुशान्तं च तेजोवदमृतात्मकम् ।
रत्नोदकं च संकल्प्य क्षीरं दधि घृतं न्यसेत् ।।
गोमयं चैव गोमूत्रमीशानाद्यैस्तु मन्त्रितम् ।।
एकद्वित्रिचतुष्पञ्चवारैः षड्भिः कुशोदकम् ।।
अमृतीकृत्य संपूज्य शिवेनैकत्वमाचरेत् ।'
मण्डपं तेन संप्रोक्ष्य'
(**उत्तरकामिके** २०.१६ उ० – २१ पू०);
एतद्विषये पुनः **अजिते** २२.६ – १४ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।; पञ्चगव्यमथः कृत्वा — ग, घ.

[9] 'विकिरानभिमन्त्रयेत् ।
लाजचन्दनसिद्धार्थभस्मपुष्पकुशाक्षताः ।।
हेतयोऽस्त्रेण सप्तैते विधातव्या विमिश्रिताः ।
नैर्ऋत्यां मण्डपे स्थित्वा संस्कृतीर्मण्टपस्य तु ।।
कुर्यादीशानवक्त्रस्तु संस्कारैर्वीक्षणादिभिः ।
कुण्डस्येव पुरास्यापि गुरुरष्टादशात्र तु ।।
विकीर्य विकिरानीशे कुशकूर्च्या समाहरेत् ।
वेद्यां वा मण्टपे वापि ईशाने वापि पश्चिमे ।।
हेमाद्येकतमं कुम्भमानीय गलिताम्भसा ।
पूरितं पल्लवोपेतं स्वर्णवस्त्रादिसंयुतम् ।।
संहृतौ विकिरास्त्राणामासनं तु चलाचलम् ।
संकल्प्य मूर्तिमन्त्रेण मूर्तीभूतं घटं न्यसेत् ।।
वर्धनीं सोदकां वस्त्रसूत्रवर्णादिसंयुताम् ।
विन्यसेदस्त्रभूतां तां प्रत्यङ्नालसमन्विताम् ।।
संपूज्य गन्धपुष्पाद्यैर्घटास्त्राल् गुरूत्तमाः ।
(**उत्तरकामिके** २०.२१ – २८ पू०);
'लाजचन्दनसिद्धार्थभस्मदूर्वाक्षतान् कुशान् ।
विकिराञ्शुद्धलाजान्वा सप्तधास्त्राभिमन्त्रितान् ।।
अस्त्राम्बुप्रोक्षितानेतान्कवचेनावकुण्ठितान् ।
नानाप्रहरणाकारान्विघ्नौघविनिवारकान् ।।'
'अर्घ्याम्बुपञ्चगव्याभ्यां संप्रोक्ष्य मखमण्टपम् ।
चतुष्पथान्तसंस्कारैः संस्कुर्याद्वीक्षणादिभिः ।।

कुश[1]कूर्च्योपसंहृत्य [2]वर्धन्या आसने[3] बुधः ॥५०॥
[4]नैर्ऋते वास्तु संपूज्य [5]पश्चिमे नागकन्यकाम्।
[6]ऐशान्यां चैव [7]यागेशीं यागेश्वरं च पूजयेत् ॥५१॥

---

विक्षिप्य विकिरांस्तत्र कुशकूर्च्योपसंहरेत्।
तानीशदिशि वर्धन्या आसनायोपकल्पयेत् ॥'
(**सोमशम्भुपद्धतौ** २.१.२०, २१; २९ उ०–३१ पू०);

'पञ्चगव्येन संप्रोक्ष्य मण्टपं चार्घ्यवारिणा।
वीक्षणाद्यैश्च संस्कारैः कुण्डोक्तैः सचतुष्पथैः ॥
संस्कृते मण्डपे तत्र विकिरानस्त्रतः क्षिपेत्।
विकिरांस्तान्समाहृत्य कुशकूर्चेन देशिकः ॥
वर्धन्याद्यासनं कुर्याद्विद्यूर्ध्वे चेशकोणके।
शिवकुम्भं न्यसेत्तत्र सप्तधान्यकृतासने ॥
त्रिसूत्रवेष्टितं रक्तं पञ्चरत्नोदकान्वितम्।
पल्लवोत्तमकूर्चाढ्यं वस्त्रयुग्मविभूषितम् ॥
गन्धपुष्पाक्षतोपेतं सापिधानं सलक्षणम्।
कुम्भदक्षिणदिग्भागे वर्धनीं विकिरासनाम् ॥
वस्त्रसूत्रयुगच्छन्नां सापिधानां सलक्षणाम्।
स्वर्णमध्यमकूर्चाम्बुगन्धपुष्पस्रगन्विताम् ॥
प्रत्यङ्नालां न्यसेद्रक्तां चूतपल्लवशोभिताम्।
नैर्ऋत्यामर्चयेद्देवांस्तोरणाधिपतींस्तथा ॥
(**सिद्धान्तशेखरे** ३.८.४३–४९);

'अर्घ्यपञ्चगव्याभ्यां यागमन्दिरं संप्रोक्ष्य, निरीक्षणादिभिर्यागमन्दिरं संस्कृत्य, हुंफडन्तास्त्रेण नानास्त्ररूपान् पूर्वाभिमन्त्रितलाजादीनन्तरायध्वंसकान्विकीर्य, हृदयेन कुशकूर्चिकया विकीर्णाल्लाँजादीन् समूह्य वर्धन्यासनार्थमीशाने विन्यसेत्।'
(**क्रियादीपिकायाम्** पृ० १४६)

[1] कूर्चोपसंहृत्य — ख.

[2] वर्धन्यासनया बुधः — ख.

[3] अत्र 'उपकल्पयेत्' इत्यध्याहृत्य आसनविषये उपकल्पयेदिति व्याख्येयमिति भाति।

[4] 'नैर्ऋते निर्ऋतिपूर्वकुम्भे ओं हां ब्रह्मासनाय नमः। ओं हां ब्रह्ममूर्तये नमः —
हंसस्थं तुन्दिलं गौरं सश्मश्रुचतुराननम्।
दधानं दक्षिणे वामे दण्डाक्षस्रक्कमण्डलून् ॥
ओं हां वास्त्वधिपतये ब्रह्मणे नमः।'
**अघोरशिवाचार्यविरचितशिवप्रतिष्ठाविधौ** पृ० १४६);

'तदनु नैर्ऋते अक्षतैर्वास्तुमण्डलमालिख्य तत्र वास्त्वधिपतिं सावरणं पूजयेत् 'अथ वास्त्वधिपतये ब्रह्मणे सावरणाय नमः' इति।
(**क्रियादीपिकायाम्** पृ० १४६)

[5] 'वायोर्दक्षिणकुम्भे ओं हां महालक्ष्म्यासनाय नमः। ओं हां महालक्ष्मीमूर्तये नमः —
द्वारस्य संमुखीं श्यामां पुष्परत्नौघवर्षिणीम्।
ध्यात्वावाह्य यजेद्विद्वान्स्मरेन्मण्डपरूपिणीम् ॥
ओं हां महालक्ष्म्यै नम इति संपूज्य, तां शक्तिमण्टपरूपिणीमनुसंधाय'
(**अघोरशिवाचार्यविरचितशिवप्रतिष्ठाविधौ** पृ० १४६);

'कलशे स्थण्डिले वा संपूज्य सिंहस्थां मण्टपाकारां सर्वरत्नैर्मखालयं पूरयन्तीं महालक्ष्मीं पूजयेत्।'
(**क्रियादीपिकायाम्** पृ० १४६);

[6] ऐशान्याः पद — ख.

[7] वागीशी वागीश्वरं — ख; मण्डपार्चनविषये आगमान्तरेषु पद्धतिषु च वागीशीवागीश्वरपूजनविषयस्यादृष्टत्वात्, चिन्त्यागमे मण्टपार्चनविधौ — 'यागेश्वरस्य कुम्भस्य वर्धन्याश्च यथाविधि। वसुप्रस्थकशाली च' (१७.६४), 'यागेश्वरस्य कुम्भस्य वर्धनीमुत्तरे न्यसेत्। नालं चोत्तरदिग्भागे' (१७.७६) इति यागेश्वरकुम्भवर्धन्योःपूजाविषयकग्रन्थस्योपलभ्यमानत्वात्, 'घ' मातृकायां प्रकृतविषये 'यागेश्वरान् प्रपूजयेत्' इति पाठस्योपलभ्यमानत्वाच्चात्र पाठः 'यागेशीं यागेश्वरं' इति साधितः। यागेश्वरार्चनं च **अघोरशिवाचार्यविरचितशिवप्रतिष्ठाविधौ** १५४–१६५ पृष्ठेषु दृश्यते।

[1]इन्द्रादिलोकपालांश्च यथाविधि समर्चयेत्।
[2]वायव्यां तु गणेशं च [3]ऐशान्यां तु गुरून्यजेत् ॥५२॥

[4][कुम्भार्चना]

प्रधान[5]कलशे स्तुत्वा महानागस्वरूपकम्।

---

[1] 'इन्द्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा।
वायुं सोमं तथैशानं पूजयेत्प्राग्दिगादितः॥
विरिञ्चिमीशदक्षस्थं विष्णुं निर्ऋतिवामगम्।
घटस्थं कलशस्थं वा कुण्डस्थं वा यजेद् गुरुः॥
तथैव वज्रशक्त्यादिदशास्त्राण्यपि पूजयेत्।'
(**उत्तरकामिके** २०.२८ उ०–३०);
अस्मिन्विषये **अघोरशिवाचार्यविरचितशिवप्रतिष्ठाविधौ** १४७–१५४ पृष्ठानि द्रष्टव्यानि।; लोकपालान् ततः पूज्या यथाविधी सम० — घ.

[2] 'वायुदिक्पूर्वपदकुम्भे षडुत्थासनपूर्वं ओं हां विघ्नविनायकासनाय नमः। ओं हां विघ्नविनायकमूर्तये नमः —
लम्बोदरं श्यामतनुं गणेशं
कुठारमक्षस्रजमूर्ध्वगाभ्याम्।
सलड्डुकं दन्तमधःकराभ्यां
वामेतराभ्यां च दधानमीडे॥
ओं हां विघ्नविनायकाय नम इत्यावाह्य सर्वोपचारैः संपूज्य
यत्सुरेशाध्वरोऽस्माभिः प्रतिष्ठाविधिहेतवे।
प्रवर्तितः प्रयात्वन्तमविघ्नं तव संनिधौ॥
इति विज्ञाप्य'
**अघोरशिवाचार्यविरचितशिवप्रतिष्ठाविधौ** पृ० १६४

[3] 'ऐशान्यां तत्पश्चिमपदकुम्भे —
सदाशिवस्तु श्वेताभः अनन्तः श्यामलाकृतिः।
श्रीकण्ठः शुक्लवर्णः स्यादम्बिका नीलवर्णिनी॥
गुहः पीतनिभो विष्णुः कृष्णो रक्तस्तथा विधिः।
ओं हां सदाशिवादिसप्तगुर्वासनाय नमः। ओं हां सदाशिवादिसप्तगुरुमूर्तिभ्यो नम इत्यावाहनादिसर्वोपचारैः संपूज्य'
(**अघोरशिवविरचितशिवप्रतिष्ठाविधौ** पृ० १६४, १६५.)

[4] 'मध्यकुम्भे शेषराजमिन्द्रादिषु यथाक्रमम्।
अनन्तं वासुकिं तक्षं कार्कोटं पद्ममेव च॥
महापद्मं च शङ्खं च गुलिकं च यजेद्गुरुः।
मध्ये शक्तयादिपद्मान्तमासनं मूर्तिमूलकम्॥
शेषराजं महाकायं सर्वाभीष्टप्रदायकम्।
पञ्चवक्त्रसमायुक्तं फणामण्डलमण्डितम्॥
ध्यायामि कुम्भमध्ये तु सर्वाभीष्टप्रसिद्धये।
इति तन्मूलमन्त्रेण तद्गायत्र्या तु योजयेत्॥
प्रणवं पूर्वमुच्चार्य त्वष्टवर्गस्य चादिकम्।
आदिवर्गद्वितीयेन तच्चतुर्दशसंयुतम्॥
बिन्दुनादसमायुक्तं शेषराजस्य मन्त्रकम्।
पञ्चभूतं च पञ्चास्यं वेदशास्त्रं वपुस्तथा॥
कला दन्ताश्च जिह्वाश्च मारुताग्नी सुनासिके।
कर्णौ कुबेरनैर्ऋत्यौ चरणा इति चन्द्रमाः॥
पुच्छं समस्तदेवाश्च शेषरूपं शुभात्मकम्।
एवं ध्यात्वा विशेषेण कुम्भमध्ये प्रपूजयेत्॥
आवाहयेत्ततो धीमांस्तत्सद्यादिक्रमेण तु।
स्थापनं संनिधानं च संनिरोधनमेव च॥
अवकुण्ठनं धेनोश्च मुद्रां चैव प्रदर्शयेत्।
पाद्यं च पादयोर्दद्यान्मुखेष्वाचमनं तथा॥
अर्घ्यं च शिरसि दद्यान्नमःस्वाहास्वधान्तकैः।
मूलेन गन्धपुष्पं च नैवेद्यं धूपदीपकम्॥
कृत्वा सर्वोपचारैश्च पूजयेच्छेषनायकम्।
पञ्चब्रह्मषडङ्गैश्च तत्तत्स्थाने न्यसेद्गुरुः॥
अक्षराणि न्यसेन्मूलं मन्त्रेणैवाञ्जलित्रयम्।
दत्त्वा तु धूपदीपं तु अभीष्टं प्रार्थयेद्गुरुः॥
शक्तयादिशक्तिपर्यन्तं साङ्गं संपूजयेच्छिवम्।
धूपदीपादिनैवेद्यैरुपचारैर्यजेच्छिवम्॥
(**सिद्धान्तदीपिकायाम्** (टि. १२०) पृ. ११३–११५)

[5] ०कलशेष्वत्र — ख.

ध्यात्वा नागेश[1]बीजं तु विन्यसेद्घटमध्यमे ॥५३॥
शक्त्यादिशक्तिपर्यन्त[2]मर्चयेदष्टकन्यकाः[3]।
कमला उत्पला [4]पद्मा नागकन्या [5]च श्यामला ॥५४॥
[6]देहिनी पादसर्पा च शेषबालाष्टशक्तयः।
सूर्यसोमाग्नि[7]शक्तीनां मण्डलानां चतुष्टये ॥५५॥
ब्रह्म[8] विष्णू च [9]रुद्रं च महानागं यजेत्क्रमात्।
[10] एकत्रिंशत्कलान्यासं न्यसेन्नागेश्वरे[11]क्रमात् ॥५६॥
आवाहनादि[12]संस्कारांस्तत्तन्मन्त्रैः प्रपूजयेत्।
हेमवर्णं महानागं [13]कुण्डलाभरणोज्ज्वलम् ॥५७॥
कृताञ्जलिपुटोपेतं ध्यात्वा [14]नागेश्वरं यजेत्।
[15]श्रीदेवीं भूमिदेवीं च [16]यजेत्तद्दक्षवामयोः ॥५८॥
श्यामवर्णनिभां भास्वद्राजीवसमलोचनाम्।
हेमयज्ञोप[17]वीतां च द्विभुजां च द्विलोचनाम् ॥५९॥
सर्वावयवसंयुक्तामेवं ध्यात्वा सुयोजयेत्।
धूप[18]दीपं च नैवेद्यं ताम्बूलाद्युपचारकैः[19]॥६०॥

---

[1] ०बिम्बं तु — ख.
[2] ०मासनाद्युपचारतः — ग, घ.
[3] ०कन्यकाम् — ख.
[4] पत्नि — ख.
[5] श शामलाम् — ख.
[6] देहिनि — ख.
[7] ०शक्ति च मण्डलां च चतुष्टयेत् — ख.
[8] ०विष्णुश्च — ख.
[9] रुद्रश्च — ख.
[10] सैकत्रिंश० — ख;
एकत्रिंशत्कलान्यासः —
'अष्टत्रिंशत्कलान्यासं प्रागेव प्रतिपादितम्।
एकत्रिंशत्कलान्यासे विशेषः कश्चिदिष्यते ॥
एकमेव शिरो वक्त्रं महेशे रुद्रविग्रहे।
तत्रेशानेन वक्त्रेण मनुना सकलेन च ॥
मालात्मना विशिष्टं तु पूर्ववत्परिकल्पयेत्।'
(**उत्तरकामिके** २.२३–२५ पू०)
[11] ०न्नागेश्वरं — ख.
[12] ०संस्कारं तत्तन्मन्त्रैः — ख, घ; संस्कारं तत्तन्मन्त्रेण — ग.
[13] कुण्डलाभरणं तथा — ग, घ.
[14] 'नागदेवस्तथोच्यते।
त्रिणेत्रश्चतुर्भुजः सौम्यो रक्ताभश्च सिताम्बरः ॥
अभयवरदोपेतः परहस्ते तु नागधृक्।
करण्डमकुटोपेतः नागः पञ्चफणान्वितः ॥
सर्वाभरणसंयुक्तः पद्मपीठोपरि स्थितः।
(**काश्यपशिल्पशास्त्रे** ४८.१३६–१३८ पू०)
[15] श्रीदेविभूमिदेवि — ख; श्रीदेवि भूमिदेवि — ग;
श्रीदेवीलक्षणविषये **अजिते** ३६.३५०, ३५१ पू० श्लोकौ तदीयटिप्पणी च द्रष्टव्याः।; भूदेवीलक्षणविषये
'श्यामवर्णनिभा भास्वद्राजीवसमलोचना।
हेमयज्ञोपवीता च द्विभुजा च द्विनेत्रका ॥
सर्वाभरणसंयुक्ता करण्डमकुटान्विता।
रक्ताम्बरधरा चैव दक्षहस्तोत्पलान्विता ॥
धरण्याकृतिरेवं स्यात्'
(**पूर्वकारणे** १२.११२–११४ पू०); श्लोका द्रष्टव्याः।
[16] यजेद्दक्षिणवामयोः — ग, घ.
[17] ०वीतं च — ख.
[18] ०दीपादि नैवेद्यं — घ.
[19] ०द्युपचारतः — घ.

[1]ऐशान्यां [2]वर्धनीं स्थाप्य ध्यात्वा [3]नागेश्वरीं यजेत् ।[4]
संपूज्य गन्धपुष्पाद्यैरासनाद्युपचारतः[5] ॥६१॥
[6]आवाहनादिभिर्मन्त्रैः प्रत्येकं तु विशेषतः ।
एवं संपूज्य सर्वेषां षडङ्गन्यासपूर्वकम् ॥६२॥
मातृकान्याससमन्त्रेण पादादि [7]च शिरोऽन्तकम् ।
[8]नागगायत्रिमन्त्रेण जपमष्टोत्तरं शतम् ॥६३॥

[स्वर्णनागप्रतिमापूजनम्]

[9]स्वर्णेन नाग[10]प्रतिमां [11]कृतां तद्वेर[12]रूपिणीम् ।
[13]संपूज्य [14]सर्पसूक्तेन [15]मूलमन्त्रेण वा पुनः ॥६४॥
[16]प्रधानकुम्भे निक्षिप्य पूजां [17]कुर्याद्यथोक्तवत् ।

[अष्टनागपूजा]

[18]परिवारघटेष्वेताननन्तादीन्यजेत्क्रमात् ॥६५॥
[19]अनन्तं पूर्वकुम्भे तु आसनाद्युपचारकैः ।

---

[1] ऐशानां — घ.
[2] वर्धनि — ख, ग, घ.
[3] नागेश्वरं — ख, ग.
[4] ६१ पूर्वार्धानन्तरं 'ख, ग, घ' मातृकात्रयेऽपि यद्यपि 'अनन्तादीन्घटेष्वेतांस्तत्तन्नाम्ना प्रपूजयेत्' इत्यर्धमेकमधिकतया दृश्यते। तथापि ६५ श्लोकोत्तरार्धेऽयं विषयो वक्ष्यत इति नात्र पाठतया संघटितम् ।
[5] ०द्युपचारकैः — ग.
[6] आवाहनादि प्रत्येकं पूजां कृत्वाधिशेषतः — ग.
[7] शिरशान्तकम् — ख.
[8] नागगायत्रीमन्त्रः; अस्मिन्विषये ३१ श्लोकपूर्वार्धटिप्पणी द्रष्टव्या.
[9] स्वर्णनागप्रतिमाकरणं ३४ उ०, ३५ श्लोकयोरुक्तम् ।
[10] ०प्रतिमं — घ.
[11] कृत्वा — ख, घ.
[12] ०रूपिणम् — घ.
[13] संपूज्या — घ.
[14] **याजुषमन्त्रप्रश्ने** २.१७.
[15] 'प्रणवं पूर्वमुच्चार्य त्वष्टवर्गस्य चादिकम् ।
आदिवर्गद्वितीयेन तच्चतुर्दशसंयुतम् ॥
बिन्दुनादसमायुक्तं शेषराजस्य मन्त्रकम् ।
(**सिद्धान्तदीपिकायाम्** पृ० ११४)
[16] वेद्योपरि विनिक्षिप्य — ख.
[17] कुर्यात् स देशिकः — घ.
[18] 'पूर्वादारभ्य चैशान्तमष्टनागान् प्रपूजयेत् ।
(**सिद्धान्तदीपिकायाम्** (टि. १२०) पृ० ११५)
[19] पूर्वे ओं हां अनन्तासनाय नमः । ओं हां अनन्तमूर्तये नमः —
रत्नकुण्डलकेयूरकिरीटमकुटान्वितम् ।
स्वर्णच्छायं द्विहस्तं च ह्यनन्तेशं नमाम्यहम् ॥
ओं हां अनन्ताय नम इत्यावाहनादिसर्वोपचारैः संपूज्य'
(**सिद्धान्तदीपिकायाम्** (टि. १२०) पृ० ११५);
'घ' मातृकायां ६६—७८ पूर्वार्धान्तश्लो-

अनन्तस्य स्वरूपं तु [1]द्विवक्त्रं च चतुष्करम् ॥६६॥
अभयं वरदं चैव [2]अक्षमालां च पद्मकम्[3]।
[4][वासुकिमाग्नेयकुम्भे[5] पूजयेदुपचारकैः ॥]६७॥
[6]वासुकिं रक्तवर्णं [7]तु त्रिवक्त्रं च चतुष्करम्।
अभयं वरदं चैव अक्षमालां च [8]कुण्डिकाम् ॥६८॥
तक्षकं [9]दक्षिणे कुम्भे [10]पूजयेदुपचारकैः।
तक्षकं नीलवर्णं च एकवक्त्रं द्विहस्तकम् ॥६९॥
जटामकुट[11]संयुक्तं विचित्रफणसंयुतम्।
[12]कार्कोटो [13]नैर्ऋते पूज्यः सर्वद्रव्योपचारकैः ॥७०॥
[14]कार्कोटको धूम्रवर्णः [15]पञ्चवक्त्रो द्विहस्तकः।
[16]भूम्याधार[17]स्वरूपश्च [18]कृताञ्जलिपुटो भवेत् ॥७१॥
[19]पश्चिमे [20]पद्मकुम्भं तु [21]ध्यायेदेवं मनोहरम्।

---

कानां स्थाने —
'अनन्तं पूर्वकुम्भे तु अनले वासुकिं यजेत्।
तक्षकं दक्षिणे कुम्भे कार्कोटकं तु नैर्ऋते ॥
पश्चिमे पद्मकुम्भं तु महापद्मं तु वायवे।
उत्तरे शङ्खकुम्भं तु ऐशान्यां गुलिकं यजेत् ॥'
इति श्लोकद्वयमेव दृश्यते।

[1] द्विकं च चतुष्करम् — ख.

[2] अक्षमालास्वरूपकः — ख.

[3] अत्र 'दधत्' इति पदमध्याहृत्य व्याख्येयम्।

[4] पूर्वोत्तरग्रन्थानुसारेणेदमर्धमधिकतया योजितम्।

[5] 'आग्नेये ओं हां वासुक्यासनाय नमः। ओं हां वासुकिमूर्तये नमः —
प्रसन्नवदनप्रख्यं सकुमारं सुयौवनम्।
फणामणिसुशोभाढ्यं वासुकिं तं नमाम्यहम् ॥
ओं हां वासुकये नम इत्यावाहनादिसर्वोपचारैः संपूज्य'
(**सिद्धान्तदीपिकायाम्** (टि. १२०) पृ० ११५–११६)

[6] वासुकी — ग.

[7] च — ग.

[8] पद्मकम् — ग; अत्र 'वहन्तम्' इति पदमध्याहृत्य व्याख्येयम्।

[9] 'याम्ये ओं हां तक्षकासनाय नमः। ओं हां तक्षकमूर्तये नमः —
इन्द्रादित्यसखं शुभ्रं नीलग्रीवाङ्गभूषणम्।
माणिक्यमौक्तिकनिभं तक्षकं तमहं यजे ॥
ओं हां तक्षकाय नम इत्यावाहनादिसर्वोपचारैः संपूज्य'
(**सिद्धान्तदीपिकायाम्** (टि० १२०) पृ० ११६)

[10] पूजयेद्युप० — ख.

[11] ०संयुक्तमेवं ध्यात्वा सुयोजयेत् — ग.

[12] कार्कोटकं नैर्ऋते पूज्य सर्व० — ख.

[13] 'नैर्ऋते ओं हां कार्कोटकासनाय नमः। ओं हां कार्कोटकमूर्तये नमः —
तेजोराशिसमाकीर्णं विषज्वालामुखोद्गतम्।
कृष्णवर्णं द्विबाहुं च कार्कोटकमनुस्मरन् ॥
ओं हां कार्कोटकाय नम इत्यावाहनादिसर्वोपचारैः संपूज्य'
(**सिद्धान्तदीपिकायाम्** पृ० ११६, ११७)

[14] कार्कोटकं धूम्रवर्णं च — ख; कार्कोटं धूम्रवर्णं च — ग.

[15] पञ्चवक्त्रं द्विहस्तकम् — ख, ग.

[16] भूमिधारणरूपं तु — ग.

[17] ०स्वरूपं च — ख.

[18] ध्यात्वा देवं सुयोजयेत् — ग.

[19] पश्चिमवायूत्तरदिक्षु कुम्भाधिपविषये 'घ' मातृकां तथा सिद्धान्तदीपिकां चानुसृत्य पाठः साधितः।; 'वारुणे ओं हां पद्मासनाय नमः। ओं हां पद्ममूर्तये नमः —

[1]पद्मं तु श्वेतवर्णं तु एकवक्त्रं द्विहस्तकम् ॥७२॥
सर्वाभरणसंयुक्त[2]मभयवरदान्वितम् ।
[3]महापद्मं तु [4]वायव्ये पूज्य संस्कारकैर्यजेत् ॥७३॥
[5]महापद्मं श्वेतवर्णं दशवक्त्रं महाभुजम् ।
सर्वाभरण[6]संयुक्तं [7]ध्यायेच्छेषं महाबलम् ॥७४॥
[8]शङ्खपालं चोत्तरे[9] तु पूजयेद्गन्धपुष्पकैः ।
[10]शङ्खपालस्वरूपं[11] तु एकवक्त्रं द्विहस्तकम् ॥७५॥
[12]मौञ्जीकृष्णाजिनधरं नागयज्ञोपवीतकम् ।
[13]ऐशान्यां [14]गुलिकः पूज्यः सर्वद्रव्योपचारकैः ॥७६॥
गुलिकं पञ्चवक्त्रं तु [15]द्विभुजं रक्तवर्णकम् ।
[16]ऊर्ध्वदंष्ट्रासमायुक्तं [17]क्रूरवक्त्रसमन्वितम्[18] ॥७७॥
एवं ध्यात्वा महानागानष्टदिक्षु यजेत्क्रमात् ।
संपूज्य गन्धपुष्पाद्यैरासना[19]द्युपचारतः ॥७८॥

---

विशालाक्षं गदाहस्तमम्बुदाकारवर्चसम् ।
पीनोरुचारुवक्षाढ्यं पद्मं वन्द्यमहं भजे ॥
ओं हां पद्माय नम इत्यावाहनादिसर्वोपचारैः संपूज्य' (**सिद्धान्तदीपिकायाम्** (टि. १२०) पृ० ११७)

[20] शङ्खकुम्भं — ख.

[21] ध्यायेदेव — ख.

[1] शङ्खस्य स्वेत० — ख, शङ्खस्य श्वेत० — ग.

[2] ०मभयं वरान्वितम् — ख; ०मभयं वर — ग.

[3] पद्मं तु वायव्ये पूज्य संस्कारो रक्षकं यजेत् — ख.

[4] 'वायव्ये ओं हां महापद्मासनाय नमः। ओं हां महापद्ममूर्तये नमः —
गदाहस्तं विशालाक्षं कर्णोद्गतविषाकुलम् ।
सौम्यं द्विहस्तं सुशुभं महापद्मं यजेत्सुधीः ॥
ओं हां महापद्माय नम इत्यावाहनादिसर्वोपचारैः संपूज्य'
(**सिद्धान्तदीपिकायां** (टि. १२०) पृ० ११७)

[5] पद्मस्य श्वेतवर्णं तु दश० — ख; पद्मस्य श्वेतवर्णं तु सप्तवक्त्रं — ग.

[6] संयुक्तमेवं ध्यात्वा सुयोजयेत् — ग.

[7] ध्याये शेषं — ख.

[8] बालं तु उत्तरे पूज्य पूज० — ख.

[9] 'कौबेरे ओं हां शङ्खपालासनाय नमः। ओं हां शङ्खपालमूर्तये नमः —
त्रिशूलाभयपाणिं च स्वर्णवर्णं किरीटिनम् ।
सर्वालंकारशोभाढ्यं शङ्खपालं तमाश्रये ॥
ओं हां शङ्खपालाय नम इत्यावाहनादिसर्वोपचारैः संपूज्य'
(**सिद्धान्तदीपिकायाम्** (टि. १२०) पृ० ११७,११८)

[10] एकवक्त्रं बाल्यरूपं द्विहस्तं हेमवर्णकम् — ग.

[11] महाबालस्वरूपं — ख.

[12] मौञ्जि० — ग.

[13] 'ईशाने ओं हां गुलिकासनाय नमः। ओं हां गुलिकमूर्तये नमः —
कुब्जं कुमुदकुन्दाभं मुखोद्गीर्णविषानलम् ।
बाणाकारद्विरसनं गुलिकं तं नमाम्यहम् ॥
ओं हां गुलिकाय नम इत्यावाहनादिसर्वोपचारैः संपूज्य'
(**सिद्धान्तदीपिकायाम्** (टि. १२०) पृ० ११८)

[14] गुलिकं पूज्य सर्व० — ख.

[15] भास्वरं रक्त० — ग.

[16] ऊर्ध्वदंष्ट्रसमा० — ख, ग.

[17] भूम्यामावाहनधारिणम् — ग.

[18] ०वक्त्रं समन्वितम् — ख.

[19] ०द्युपचारतम् — ख.

[1]आवाहनादिभिः सर्वैः पूजां कृत्वा विशेषतः ।
[2]एवं संपूज्य [3]देवांस्तान् [4]षडङ्गन्यासपूर्वकम् ॥७९॥
[5]पादादिशिर[6]पर्यन्तं [7]पूजयित्वा यथाविधि ।
[8]नागगायत्रिमन्त्रेण जपमष्टोत्तरं [9]शतम् ॥८०॥
कल्पोक्तेन च संपूज्य सर्वद्रव्योपचारकैः ।

[10][होमः]

अग्निकार्योक्तमार्गेण शिवाग्निं च प्रकल्पयेत् ॥८१॥

---

[1] आवाहनादि प्रत्येकं पूजां — घ.
[2] एं संपूज्य — ख; एवं संपूज्या — घ.
[3] ते देवान् — ख; देवान्स्वान् — ग; देवांस्थान् — घ.
[4] षडङ्गं न्यास० — ख.
[5] पादादि शिरसि पर्यन्तं — घ.
[6] ०पर्यन्तमधाङ्गो न्यासमाचरेत् — ख.
[7] पूजां कृत्वा — घ.
[8] अस्मिन्विषये ३१ तमश्लोकपूर्वार्धटिप्पणी द्रष्टव्या ।
[9] कृतम् — घ.
[10] 'ततः कुण्डान्तिकं गत्वा सामान्यार्घ्यकरो गुरुः ।
आधानादि विवाहान्तमग्निकार्योक्तमाचरेत् ॥
अग्नौ सावरणं शेषं समभ्यर्च्य गुरूत्तमः ।
नाडीसंधानमार्गेण त्वैक्यभावं प्रगृह्य च ॥
नवाग्न्यायतनं वापि पञ्चाग्न्यायतनं तु वा ।
पलाशोदुम्बराश्वत्थवटाः प्रागादिषु क्रमात् ॥
शमीखदिरबिल्वार्का विदिक्षु च यथाक्रमम् ।
प्रधाने तु पलाशं तु पञ्चाग्न्यायतने तथा ॥
पलाशं च शमीं पूर्वे यज्ञाङ्गं खादिरं यमे ।
पश्चिमेऽश्वत्थबिल्वौ च वटार्कौ चोत्तरे तथा ॥
पलाशं तु प्रधाने तु होमकुण्डं तु सर्वशः ।
शतत्रयं तदर्धं वा कुण्डं प्रति तदर्धकम् ॥
शेषादीनां तु सद्येन तत्तत्कुण्डेषु होमयेत् ।
शेषादीनां तु मूलेन आज्यं तु जुहुयात्क्रमात् ॥
तत्तन्मूलेन लाजं तु तद्वामेन प्रियङ्गुकम् ।
तद्वामेन तिलं हुत्वा सिद्धार्थं सर्षपं क्रमात् ॥
पाशुपतेन चास्त्रेण प्रतिकुण्डं हुनेत्तथा ।
माषं च शिरसा हुत्वा मुद्गं वै हृदयेन तु ॥
कुलुत्थं मूलमन्त्रेण शिम्बं नेत्रेण होमयेत् ।
व्रीहिमीशानमन्त्रेण यवं वै चास्त्रमन्त्रतः ॥
शिखामन्त्रेण शालिं च नीवारं चास्त्रमंन्त्रतः ।
गोधूममाढकं शिम्बं व्रीहिं वै चणकं तथा ॥
श्यामाकं चैव निष्पावं वेणुं दधि च मूलतः ।
पयश्चैव तु कस्तूरीं चन्दनं चन्द्रकान्तकम् ॥
गोरोचनं कुङ्कुमं च कृष्णगन्धं हिमाम्बु च ।
ह्रीबेरं च मदद्वन्द्वं गुग्गुलुं चैव मूलतः ॥
इक्षुखण्डं स्वादुकन्दं फलानि हृदयेन तु ।
सक्त्वपूपस्य निचयाञ्जुहुयात्कवचेन तु ॥
पृथुकं नालिकेरं च शिखामन्त्रेण होमयेत् ।
गुलान्नं चैव शुद्धान्नं माषान्नं कवचेन तु ॥
मुखवासमायुक्तं ताम्बूलं मूलमन्त्रतः ।
एतानि होमद्रव्याणि जुहुयात्तु शतत्रयम् ॥
शतमर्धं तदर्धं वा तदर्धं वा विशेषतः ।
भाष्योच्चारेण मन्त्रेण समिदादीन्प्रधानके ॥
यदन्तरिक्षं पृथिवीत्याज्येनैव च होमयेत् ।
सतिलाज्यैश्च सर्पेभ्यः स्वाहेति तदनन्तरम् ॥
पालाशं दन्दशूकेभ्यः स्वाहेति च ततः परम् ।
पक्वमन्नं तदाश्लेषाभ्यः स्वाहेति ततो गुरुः ॥
गुडूच्यपूपलाजांश्च सर्पसूक्तेन होमयेत् ।
अष्टोत्तरसहस्रं वा त्वष्टोत्तरशतं तु वा ॥
समिद्भिश्चरुणाज्येन प्रत्येकं जुहुयात्पुनः ।
नमो अस्त्विति मन्त्रेण त्वाज्येनैव शताहुतिम् ॥
हुत्वा पूर्णाहुतिं कुर्यात्परिषिच्य बलिं ददेत् ।

वक्त्रैकी[1]करणादिष्टदीपनान्तं तु होमयेत्।
नागस्य [2]मूलमन्त्रेण पलाशैर्होमयेच्छतम्॥८२॥
[3]नागगायत्रिमन्त्रेण [4]गुडूचीं वैतसीमपि।
दूर्वाहोमं तु मूलेन प्रत्येकं तु शतं शतम्॥८३॥
पञ्चब्रह्मषडङ्गैश्च लाजसर्षपमाषकान्[5]।
[6]निष्पावं मुद्गबीजं च तिलगोधूमव्रीह्यवान्॥८४॥
चरूंश्च [7]सक्तून् द्रव्याणि प्रत्येकं तु शतं शतम्।
पलाशमीशमन्त्रेण वटं पुरुषमन्त्रतः॥८५॥
अघोरेण [8]शमीं हुत्वा खादिरं वामेन होमयेत्।
औदुम्बरं तु सद्येन दूर्वां हृदयमन्त्रतः॥८६॥
अर्कं तु शिरसा[हुत्वा][9]शिखयाश्वत्थमेव च।
कवचेन कुशं हुत्वा अपामार्गं तु नेत्रतः॥८७॥
[हुत्वा चैवं देशिकस्तु] बिल्वमस्त्रेण होमयेत्।
मूलेनाज्येन हुत्वा तु प्रत्येकं तु शतं शतम्॥८८॥
नमोऽस्तु सर्पेभ्य इति हुत्वाज्येन सहस्रकम्।
मूलेनैव सहस्रेण [10]तदर्धं वा [11]तदर्धकम्॥८९॥
स्पृष्ट्वा स्पृष्ट्वा तु जुहुयाद्द्रव्यं प्रति विशेषतः।
व्याहृतिभिश्च हुत्वा तु हव्य[12]वाहेन मन्त्रतः॥९०॥
पञ्चगव्यं [13]चरुं प्राश्य दन्त[14]धावनमाचरेत्।
आचार्यो यजमानश्च रात्रौ जागरणं चरेत्॥९१॥

### [15][अपरेद्युः करणीयविधिः]

प्रभाते विमले स्नात्वा नित्यकर्मादिकं चरेत्।[16]

---

मूर्तिपाः स्वस्वकुण्डेषु पूर्णाहुत्यादिमाचरेत्॥
आचार्यो मूर्तिपैः सार्धं पञ्चगव्यादिकं पिबेत्।
रात्रिशेषं व्यपोह्याथ'
(**सिद्धान्तदीपिकायाम्** (टि. १२०) पृ० १२०–१२३);
अस्मिन्विषये पुनः **रौरवे** क्रियापादे ३८.२६–२८ पृ० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।

[1] ०करणादिष्ट दीपनां तन्तु — ख.

[2] मूलमन्त्रविषये ६४ श्लोकस्योत्तरार्धटिप्पणी द्रष्टव्या॥

[3] अस्मिन्विषये ३१ श्लोकपूर्वार्धटिप्पणी द्रष्टव्या।

[4] गलुचि वैतसिमपि — ख.

[5] ०माषक — ख.

[6] निष्पावमुद्भिम्बं च — ख.

[7] सक्तुद्रव्याणि — ख.

[8] शमि — ख.

[9] शिखायाश्वत्थ — ख.

[10] तदर्थं — ख.

[11] तदर्थकम् — ख.

[12] तै० ब्राह्मणम् २.४.४

[13] चरू — ख.

[14] ०दावनमाचरेत् — ख.

[15] 'प्रभाते मूर्तिपैः सह।

आचार्य ऋत्विजैः [1]सार्धं यागमण्डपमाविशेत् ॥९२॥
पूर्वोक्तद्वारपूजादिदीपनान्तं [2]यथाक्रमम् ।
बिम्बशुद्धिं ततः [3]कुर्यात्स्नानवेद्युपरि न्यसेत् ॥९३॥
पञ्चत्वग्मृत्तिकाम्भोभिः [4]पल्लवैः पञ्चगव्यकैः ।
[5]सस्यौषध्युदकैर्गन्धबिल्वपुष्प[6]हिरण्यकैः ॥९४॥
[7]धान्योदैश्चैव रत्नोदैरेतद्द्रव्यैस्तु घर्षयेत् ।
स्नापयेन्मन्त्रतोयेन [8]पञ्चशान्तीर्जपेत्ततः ॥९५॥
शयने शाययेद्बिम्बमण्डजाद्यासनोपरि ।
गृहोपकरणादीनि पाददेशेषु निक्षिपेत् ॥९६॥

---

स्नानादिनित्यकर्मान्तकर्म निर्वर्त्य पूर्ववत् ।
यागपूजां च होमं च सर्वं पूर्ववदाचरेत् ॥
मूलब्रह्माङ्गमन्त्रैश्च जुहुयात्तदनन्तरम् ।
शिवास्त्रेण शतं हुत्वा पूर्वादिषु यथाक्रमम् ॥
पाशुपतेन चास्त्रेण त्वघोरास्त्रेण वा गुरुः ।
प्रत्यङ्गिरेण चास्त्रेण क्षुरिकास्त्रेण होमयेत् ॥
शेषगायत्रिमन्त्रेण प्रत्येकं शतसंख्यया ।
हुत्वा पूर्णाहुतिं पश्चाज्जयादि परिषेचनम् ॥
कृत्वा त्वग्निस्थशेषं च कुम्भस्थे योजयेद्गुरुः ।
शयनाद्बिम्बमुत्थाप्य अभिषेकं समाचरेत् ॥
ग्रामप्रदक्षिणं कृत्वा आलयादौ निवेशयेत् ।
भिन्नपीठे तु रत्नानां न्यासं कृत्वाष्टबन्धनम् ॥
पञ्चगव्येन संस्नाप्य पवमानमुदीरयन् ।
अक्षराणि न्यसेत्पश्चात्पञ्चावरणमार्गतः ॥
अभ्यर्च्य गन्धपुष्पाद्यैर्नैवेद्यान्तं समाप्य च
(**सिद्धान्तदीपिकायाम्** (टि. १२०) पृ० १२३–१२५)

[11] 'ग' मातृकायां ८१ श्लोकोत्तरार्धात्प्रभृति ९२ पूर्वार्धपर्यन्तभागेऽधोलिखितरीत्या सार्धपञ्चकश्लोका एव दृश्यन्ते —
'अग्निकार्योक्तमार्गेण दीपनान्तं यथाविधि ।
पलाशसमिधो हुत्वा गुडूचीं वैतसीमपि ॥
दूर्वाहोमं ततः कृत्वा लाजसर्षपमाषकम् ।
निष्पावं मुद्गबीजं च तिलगोधूमव्रीह्यवम् ॥
होमद्रव्याणि संप्रोक्ष्य मूलमन्त्रैर्हुनेत्क्रमात् ।
नागाधिराजमन्त्रेण हुत्वा शतसहस्रकम् ॥
शतमर्धं तदर्धं वा हुत्वा तत्षोडशावधि ।
स्पृष्ट्वा तु जुहुयाद्द्रव्यं यामान्प्रति विशेषतः ॥
एवं यामचतुष्केऽपि पूजां कृत्वा यथाविधि ।
व्याहृतिभिर्घृतं हुत्वा हव्यवाहं समाहरेत् ॥
रात्रौ जागरणं कृत्वा प्रभाते स्नानमाचरेत् ।'
इति ।; पूर्वोक्तस्थले 'घ' मातृकायामधोलिखितरीत्या सार्धपञ्चकश्लोका एव दृश्यन्ते —
'अग्निकार्योक्तमार्गेण दीपनान्तं यथाक्रमम् ।
पालाशसमिधो हुत्वा गुडूचीं वेतसीमपि ॥
दूर्वाहोमं ततः कृत्वा लाजसर्षपमाषकम् ।
निष्पावं मुद्गबीजं च तिलगोधूमव्रीह्यवम् ॥
होमद्रव्याणि संप्रोक्ष्य मूलमन्त्रैर्हुनेत्क्रमात् ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं हुनेत् ॥
नागाधिराजमन्त्रेण हुत्वा शतसहस्रकम् ।
शतमर्धं तदर्धं वा हुत्वा तत्षोडशाहुतीः ।
स्पृष्ट्वा स्पृष्ट्वा तु जुहुयाद्द्रव्यं प्रति विशेषतः ।
व्याहृतिभिः शतं हुत्वा हव्यवाहं समाहरेत् ॥
रात्रौ जागरणं कृत्वा प्रभाते स्नानमाचरेत् ।'
इति ।

[1] सार्थं — ख; सत्धं — घ.
[2] तथा क्रमम् — ग.
[3] कृत्वा स्नान — ख.
[4] पल्लवः पञ्चगव्यकम् — ख.
[5] सस्योषध्योदकं गन्ध — ख.
[6] ०हिरण्यकम् — ख.
[7] धान्योश्चैव रत्नोदं एतद्द्रव्येण खर्षयेत् — ख.
[8] शान्तिपञ्चकम् — (**याजुषमन्त्ररत्नाकरे** पृ० १७६–१७७); पञ्चशान्ति जपेत् — ख.

तत्त्वन्यास[1]क्रमार्थं च त्रिखण्डं परिकल्पयेत्।
न्यस्त्वा [2]तत्त्वत्रयं [3]शेषजानुकण्ठ[4]शिरोवधि ॥९७॥
पुष्पमालां ततः कृत्वा त्रिखण्डं परिकल्पयेत्।
पुनश्चाग्निं ततो गत्वा तत्त्वतत्त्वेश्वरान्हुनेत् ॥९८॥
शान्तिकुम्भे शतं जप्त्वा संपाताहुतिमाचरेत्।
बिम्बान्तिकं ततो गत्वा आत्मतत्त्वाधिपं यजेत् ॥९९॥
[5]शान्त्यम्भसा च संप्रोक्ष्य कुशमूलेन संस्पृशेत्।
आत्म[6]तत्त्वाधिपानन्त यावद्दोषसमुत्थितम्[7] ॥१००॥
[8]बिम्बे तावत्त्वयात्रैव स्थातव्यं संनिधानतः।
[9]इति विज्ञाप्य संस्पृश्य मूर्तिमूर्तीश्वरान्यजेत् ॥१०१॥
क्ष्मावह्नियजमानार्कजल[10]वाय्विन्दुखानि च।
[11]अनन्तं वासुकिं तक्षं [12]कार्कोटकं च पद्मकम् ॥१०२॥
[13]महापद्मं[14]तथा शङ्खपालं गुलिकसंज्ञकम्।
[15]एतान्मूर्तीश्वरान्पूज्य [16]प्रकृत्यन्तं च तत्त्वकम् ॥१०३॥
पुनश्च वह्निमासाद्य तत्त्वतत्त्वेश्वरान्हुनेत्।
मूलेनाज्येन जुहुयादष्टोत्तरशतं हुनेत् ॥१०४॥
शान्तिकुम्भेऽभिमन्त्र्याथ बिम्बं संपूज्य यत्नतः।
[17]कण्ठदेशे तु संपूज्य [18]विद्यातत्त्वे त्वनन्तरम् ॥१०५॥
कुशमध्येन संस्पृश्य प्रोक्षयेदस्त्रमन्त्रतः।
[19]विद्यातत्त्वाधिप तक्ष यावद्दोष[20]समुत्थितम् ॥१०६॥
[21]बिम्बे तावत्त्वयात्रैव स्थातव्यं संनिधानतः।

---

[1] ०क्रमादैश्च — ख.
[2] तत्त्वत्रियं — ख, ग; तत्रयं — घ.
[3] शेषं जानुखण्ड० — ख; शेषं जानुकर्ण — घ.
[4] ०शिख न्यसेत् — ग; शिघा न्यसेत् — घ.
[5] शान्ति भसा — ख.
[6] ०तत्त्वाधिपः प्रोक्तः अनन्त — ख; ०तत्त्वाधिप ब्रह्मन् — ग.
[7] 'समुत्थितम्' इत्यत्र भावे क्तप्रत्ययः; समुत्थितिरित्यर्थः।; ०द्दोषैः समुत्थितम् — ग.
[8] बिम्बं — ख; नागं — ग.
[9] स्पृशेदिति विज्ञाप्य — ख, ग; त्रिखण्डन्यासं विन्यस्य मूर्तिमूर्तीश्वरं न्यसेत् — घ.
[10] ०वातेन्दुखानि — ग, घ.
[11] अनन्तवासुकितक्षा — ख; अनन्तवासुकितक्ष० — ग, घ.
[12] ०कार्कोटकमुखांस्तथा — ग; ०कार्कोटक यथा तथा — घ.
[13] पद्ममहापद्मं च शङ्खबालं च गुलिका — घ.
[14] च शङ्खं च पालं गुलिक — ख; च पद्मं च शङ्खं च कुलिकं तथा — ग.
[15] एते मूर्ती — ख; एवं मूर्त्यधिपान् — ग, घ.
[16] प्रत्येकमाहुतिः क्रमात् — ग, घ.
[17] कर्णदेशे — ख.
[18] विद्यातत्त्वेष्वनन्तकम् — ख.
[19] विद्यातत्त्वपदे विष्णु यावद्दोषैः समु० — ग.
[20] ०समुद्धितम् — ख; 'समुत्थितम्' इत्यत्र भावे क्तप्रत्ययः; 'समुत्थितिः' इत्यर्थः।
[21] बिम्बं — ख; नागं — ग.

क्षमादिमूर्तितदीशांश्च क्रमाद्विद्येश्वरान्यजेत् ॥१०७॥
अग्नौ हुत्वा तु मूलेन तत्त्वतत्त्वेश्वरान्हुनेत् ॥
शान्तिकुम्भेऽभिमन्त्र्याथ संपाताहुतिमाचरेत् ॥१०८॥
बिम्बे संपूज्य तत्त्वेशं तत्त्वतत्त्वेश्वरान्यजेत् ।
शिवतत्त्वाधिप नाग यावद्दोष[1]समुत्थितम् ॥१०९॥
[2]बिम्बे तावत्त्वयात्रैव स्थातव्यं संनिधानतः ।
क्षमादिमूर्तितदीशांश्च क्रमाद्विद्येश्वरान्यजेत् ॥११०॥
[3]स्पृष्ट्वा स्पृष्ट्वा [4]तु जुहुयात्प्रत्येकमाहुतित्रयम्[5] ।
नागस्य [6]मूलमन्त्रेण सहस्रं वा [7]तदर्धकम् ॥१११॥
पूर्णाहुतिं ततः [8]कुर्यान्नागगायत्रिमन्त्रतः[9] ।

[गायत्री]

[10]महानन्ताय विद्महे [11]महानागाय धीमहि ।
[12]तन्नः शेषः प्रचोदयात् ।

[13]ओं महानागाय स्वाहा । [14]ओं अनन्ताय स्वाहा । [15]इत्यादिनाष्टोत्तरशतं हुनेत् ।

देशिकस्य [16]नियोगेन [17]मूर्तिपास्तदनन्तरम् ॥११२॥
[18]नागगायत्रिमन्त्रेण [19]प्रत्येकाष्टोत्तरं शतम् ।
दर्भाग्रेण तु [20]संस्पृश्य [21]जपित्वा [22]ऋत्विजैः सह ॥११३॥

---

[1] 'समुत्थितम्' इत्यत्र भावे क्तप्रत्ययः, समुत्थितिरित्यर्थः ।

[2] विम्बं — ख.

[3] हुत्वा जप्त्वा तु संधाया क्रमाद्विद्येश्वरान्यजेत् — ख.

[4] च — घ.

[5] ०माहुतिक्रमात् — घ.

[6] एतद्विषये ६४ श्लोकोत्तरार्धटिप्पणी द्रष्टव्या ।

[7] तदर्थकम् — ख.

[8] कुर्यान्नागस्य मूलमन्त्रतः — ख; 'नागगायत्रि' इति ह्रस्वान्तप्रयोगविषये ३१ पूर्वार्धटिप्पणी द्रष्टव्या ।

[9] ०मन्त्रैः — घ.

[10] महानागाय — ख; महानन्दाय — ग; घ.

[11] शङ्खपद्माय — ख.

[12] तन्नो — ख, ग, घ.

[13] 'घ' मातृकायामत्र 'ओं' इति न दृश्यते ।

[14] 'ग, घ' मातृकयोरत्र 'ओं' इति न दृश्यते ।

[15] इत्यादिरष्टोत्तर० — ख.

[16] नियोगेण — ख.

[17] मूर्तिवास्त० — ख; मूर्तिपा तदनन्तरम् — घ.

[18] एतद्विषये ३१ श्लोकपूर्वार्धटिप्पणी द्रष्टव्या ।

[19] प्रत्येकं चाष्टोत्तरं शतम् — ख, घ; शतमष्टोत्तरं हुनेत् — ग; अत्र 'जुहुयुः' इति पदमध्याहृत्य व्याख्येयम् ।

[20] संस्पृश्या — घ.

[21] जप्त्वा तु — ख.

[22] ऋत्विक्शब्दस्यात्राकारान्ते प्रयोगः ।

संपूज्याग्नौ[1] च [2]संतर्प्य प्रायश्चित्तं [3]ततश्चरेत्।
[4]मूलाघोरशिवास्त्रैश्च शतमष्टोत्तरं हुनेत्॥११४॥
ततः पूर्णाहुतिं हुत्वा तत्तन्मूलाणुना तथा[5]।
[6]पूर्वोक्तेन विधानेन [7]सर्पबेरं प्रतिष्ठितम्॥११५॥
शक्त्याद्यासनपर्यन्तं पूजयित्वा [8]यथाविधि।
[9]षडङ्गन्यासमन्त्रेण [10]न्यसेत्तं सर्पराजकम्॥११६॥

[11][प्राणप्रतिष्ठा कुम्भाभिषेकश्च]

प्राणप्रतिष्ठां कुर्वीत आगमोक्तविधानतः।
[12]अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य इत्यादि जपन्गायत्रिमार्गेण
[13]जीवन्यासं समाचरेत्।

---

[1] 'घ' मातृकायां चकारो न दृश्यते।
[2] संतर्प्या — ख, घ.
[3] ततः कुरु — ख, ग, घ.
[4] मूलमन्त्रशि० — ख.
[5] ०न्मूलाणुनां तथा — ख; मूलमन्त्रविषये ६४ उत्तरार्धटिप्पणी द्रष्टव्या।
[6] पूर्वोक्तविधिना स्थाने सर्प० — ग, घ.
[7] सर्वबेरप्रति० — ख; सर्पबेरप्रति० — घ.
[8] यथाविधिः — ख.
[9] षखङ्गन्यास० — ख.
[10] न्यसेत्वं — ख.
[11] मुहूर्ते समनुप्राप्ते यागशालां प्रविश्य च।
आचार्यो यजमानेन प्राङ्मुखोदङ्मुखोऽपि वा॥
उपविश्य च संकल्प्य ऋत्विग्भिर्ब्राह्मणैः सह।
यात्रादानं ग्रहप्रीतिदानं च दशदानकम्॥
यथाशक्त्या तु दत्त्वा च आचार्यो मूर्तिपैः सह।
कुम्भांश्च वाहयित्वाथ त्वालयस्य प्रदक्षिणम्॥
कृत्वा शेषसमीपं च गत्वा धूपादिकं ददेत्।
प्राणप्रकृतियोगं तु ज्ञात्वा कर्म समाचरेत्॥
कुम्भाद्वीजं समादाय शेषवक्त्रे तु योजयेत्।
बीजं च शिवकुम्भाच्च फणामध्यस्थलिङ्गके॥
विद्येशबीजमादाय तत्तत्स्थाने तु योजयेत्।
कुम्भाद्भिरभिषिच्याथ तैलादीनि यथाक्रमम्।
नैवेद्यं सोपदंशं तु पायसापूपसंयुतम्।
प्रियङ्गुपिष्टं मधुना ताम्बूलं च निवेदयेत्॥
धूपदीपादिकं दत्त्वा मन्त्रपुष्पं ददेद्गुरुः।
अभीष्टं यजमानस्य प्रार्थयेत्तदनन्तरम्॥'
(**सिद्धान्तदीपिकायाम्** (टि. १२०) पृ० १२५, १२६);
एतस्मिन्विषये पुनः **रौरवे** क्रियापादे ३८.२८ उ० —३६ श्लोकास्तदीयटिप्पण्यश्च द्रष्टव्याः।
[12] 'अस्य श्री प्राणप्रतिष्ठामहामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः। ऋग्यजुःसामाथर्वाणि छन्दांसि। सकलजगत्सृष्टिस्थितिसंहारकारिणी प्राणशक्तिः परा देवता। आं बीजम्। ह्रीं शक्तिः। क्रों कीलकम्। प्राणप्रतिष्ठापने विनियोगः। आम् अङ्गुष्ठाभ्यां नमः। ह्रीं तर्जनीभ्यां नमः। क्रों मध्यमाभ्यां नमः। आम् अनामिकाभ्यां नमः। ह्रीं कनिष्ठिकाभ्यां नमः। क्रों करतलकरपृष्ठाभ्यां नमः। आं हृदयाय नमः। ह्रीं शिरसे स्वाहा। क्रों शिखायै वषट्। आं कवचाय हुम्। ह्रीं नेत्रत्रयाय वौषट्। क्रोम् अस्त्राय फट्। भूर्भुवःसुवरोमिति दिग्बन्धः।
ध्यानम् —
रक्ताम्भोधिस्थपोतोल्लसदरुण-
सरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमलिगुण
मप्यङ्कुशं पञ्चबाणान्।

विसृज्याग्निस्थितं देवं कुम्भमध्ये तु योजयेत् ॥११७॥
[1]कुम्भानुद्धृत्य [2]नागस्य शिरःस्थानेऽभिषेचयेत् ।
शक्ति[3]कुम्भौ च तत्पार्श्वे [4]अनन्तादीन् [5]यथाक्रमम् ॥११८॥
अभिषिच्य यथान्यायं [6]पूजयेत्सर्पराजकम् ॥
[7]पञ्चामृतैः पञ्चगव्यैर्नारिकेलेक्षुसारकैः[8] ॥११९॥
गन्धोदकाद्यैः संपूज्य धूपदीपं प्रकल्पयेत् ।
जातिकुन्दादिपुष्पैश्च तुलसीकरवीरकैः ॥१२०॥

---

विभ्रणा स्रक्कपालं त्रिनयनलसिता
पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी
प्राणशक्तिः परा नः ॥
आं ह्रीं क्रोम् । क्रों ह्रीं आम् । य र ल व श ष स हों हंसः सोऽहं हंसः । अस्यां मूर्तौ प्राणास्तिष्ठन्तु । अस्यां मूर्तौ जीवस्तिष्ठतु ।
अस्यां मूर्तौ सर्वेन्द्रियाणि मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्थाख्यानि प्राणापानव्यानोदानसमानाश्चागत्य सुखं चिरं तिष्ठन्तु स्वाहा। असुनी ते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्। जोक्पश्येम सूर्यमुच्चरन्तमनुमते मृळया नः स्वस्ति। (गर्भाधानादिपञ्चदशसस्कारार्थं पञ्चदशवारं प्रणवजपं कृत्वा) आवाहनीयतत्तद्देवतामन्त्रैर्देवता आवाह्य निवेदनं कृत्वा, आवाहितो भव। स्थापितो भव। संनिहितो भव। संनिरुद्धो भव। अवकुण्ठितो भव। सुप्रीतो भव। सुप्रसन्नो भव। सुमुखो भव। वरदो भव। प्रसीद प्रसीद इति मुद्राः प्रदर्श्य, —
स्वामिन्सर्वजगन्नाथ यावत्पूजावसानकम् ।
तावत्त्वं प्रीतिभावेन बिम्बेऽस्मिन्संनिधिं कुरु ॥
इति प्रार्थयेत् । इति प्राणप्रतिष्ठा ।'
(**शान्तिकुसुमाकरे** पूर्वभागे पृ० १४, १५)

[13] 'गुरूपदेशात्कन्दादेर्मन्त्रमुच्चारयेच्छनैः ।
नादं शक्तिमयं सूक्ष्मं घण्टानादविसर्पिणम् ॥
कारणत्यागयोगेन ब्रह्मरन्ध्राद्विनिर्गतम् ।
दिवाकरसहस्राभं विद्युत्कोटिसमप्रभम् ॥
स्फुरद्रश्मिवितानेन प्रदीपितदिगन्तरम् ।
मन्त्रं च मनसाभिन्नं प्राप्तानन्दरसोद्गमम् ॥
द्वादशान्तात्समानीय निष्कलं व्यापकं शिवम् ।
अष्टत्रिंशत्कलोपेतं सहस्रकिरणोज्ज्वलम् ॥
सर्वशक्तिमयं साङ्गं ध्यात्वा स्वाञ्जलिसंगतम् ।
तेजोबिम्बं ललाटस्थघण्टिकाद्वारमानयन् ॥
सुषुम्नानिर्गतं ध्यात्वा स्फुरत्तारकसर्पिणम् ।
विशन्तं ब्रह्मरन्ध्रेण सकले व्यापकं न्यसेत् ॥
जीवन्यासो भवेदेवं लिङ्गे (बिम्बे) सर्वार्थसाधकः ।
स्थापनं संनिधानं च संनिरोधावकुण्ठने ।
मुद्रासंदर्शनं पाद्यमाचामार्घ्यप्रसूनकम् ॥
एभिः संस्कृत्य संपूज्य वस्त्रेणाच्छाद्य देशिकः ।
भस्मदर्भतिलैश्चापि प्राकारत्रितयं न्रेत् ।
पश्चाद्धूपदीपाचमनार्घ्याणि दत्त्वा निवेद्य'
(**अघोरशिवाचार्यविरचितशिवप्रतिष्ठाविधौ**) पृ० २४६, २४७)

[1] कुम्भानुद्धाय — ख; कुम्भानुत्थाय — ग, घ.
[2] देवस्य — ग, घ.
[3] ०कुम्भं च — ग.
[4] अनन्तादि — ख, घ.
[5] यथाक्रमात् — ग.
[6] प्रपूजयेत्सर्प० — घ.
[7] 'ग' मातृकायां ११९ उत्तरार्धस्य १२० पूर्वार्धस्य च स्थाने 'पञ्चामृतादिभिः पूज्य धूपदीपं प्रकल्पयेत्' इत्येकमेवार्धं दृश्यते।; पञ्चामृदै पञ्चगवै — ख.
[8] ०र्नारिकेलक्षुसारकैः — ख; नालिकेरेषुसरकैः— घ.

[1] [अङ्गपूजा]

[2] अङ्गपूजा [3] प्रकर्तव्या पादमारभ्य [4] बुद्धिमन्।

श्रीकृष्णाय नमः पादौ पूजयामि। विष्णवे नमः [5] गुल्फौ पूजयामि। हराय नमः [6] जङ्घे पूजयामि। [7] माधवाय नमः [8] जानुनी [पूजयामि]। ब्रह्मणे नमः ऊरू पूजयामि। भास्कराय नमः कटिं [पूजयामि]। ईश्वराय नमः नाभिं [पूजयामि]। विश्वरूपाय नमः उदरं [पूजयामि]। महाकालाय नमः [9] वक्षः [पूजयामि]। सृष्टि[10]स्थितिसंहारकारिणे नमः [11] बाहून् [पूजयामि]। विश्वमूर्तये नमः [12] कण्ठं [पूजयामि]। वासुदेवाय नमः मुखं [पूजयामि]। बलिबन्धनाय नमः शिरः पूजयामि। [13] त्रिविक्रमाय नमः पार्श्वौ [पूजयामि]। आदिशेषाय नमः सर्वाङ्गं पूजयामि इत्यङ्गानि संपूज्य महानैवेद्यमाचरेत्॥

[14] हस्तप्रक्षालनं धूपदीपनैवेद्यमेव च॥१२१॥
ताम्बूलं भस्मरक्षां च षोडशैरुपचारकैः।
प्रदक्षिण[15]नमस्कारैराशीर्वादपुरःसरम्॥१२२॥
[16] साष्टाङ्गं दण्डवत्प्रार्थ्य अभीष्ट[17]सिद्धये ततः।

---

[1] 'अथाङ्गपूजा — सर्पराजाय नमः पादौ पूजयामि। अनन्ताय नमः गुल्फौ पूजयामि। विश्वरूपाय — जानुनी। त्रैलोक्यनाथाय — ऊरू। जगन्नाथाय- कटिम्। काकोदराय – उदरम्। विश्वबाहवे — बाहून्। पन्नगाधिपतये — हृदयम्। विश्वरूपाय – नाभिम्। शिवभूषणाय – वक्षः। तुलसीमाला- धारिणे – कण्ठम्। अनन्ताय – मुखम्। सहस्र- नयनाय – –नेत्राणि। चक्षुःश्रवसे – श्रोत्राणि। नारायणाय – ललाटम्। सहस्रशिरसे – शिरांसि। नागलोकवासिने – सर्वाण्यङ्गानि पूजयामि।'
(**शान्तिकुसुमाकरे** पूर्वभागे पृ० २२)

[2] नागपूजा — ग.

[3] प्रकर्तव्य — ख; कर्तव्यं — घ.

[4] बुद्धिमान् — ख, ग, घ; 'बुद्धिमन्' इति संबोधनम्। 'हे बुद्धिमन् त्वया कर्तव्या' इति व्याख्येयम्।

[5] गुल्बौ — ख.

[6] जङ्घे — ख.

[7] शिवाय — घ.

[8] जानुनि — ख.

[9] वक्षसि — ख; वक्षौ — घ.

[10] ०स्तित्यन्तकारणाय — ख.

[11] बाहुं — घ.

[12] कण्ठौ — ख.

[13] श्रीविश्वनाथाय नमः सर्वाङ्गानि पूजयामि — घ.

[14] 'घ' मातृकायां १२१ उत्तरार्धस्य १२२ पूर्वार्ध- स्य च स्थाने 'धूपदीपाद्युपचारैस्ताम्बूलं तु निवेदयेत्' इत्येकमेवार्धं दृश्यते।

[15] ०नमस्कारमाशीर्वाद० — घ.

[16] साङ्गं दण्डवत्कृत्वा प्रार्थनाभीष्टसिद्धिता – घ.

[17] ०सिद्धयेत्ततः — ख.

## [1][आचार्यादिपूजा]

[2]आचार्यं [3]पूजयेत्पश्चाद्वस्त्रहेमाङ्गुलीयकैः ॥१२३॥
[4]गां दद्याद्गुरवे [5]प्रार्थ्य गोकुलस्याभिवृद्धये[6] ।
[7]ऋत्विग्भ्यो दक्षिणादींश्च [8]दद्याच्च जापकांस्तथा ॥१२४॥
[9]परिवारान्दक्षिणाद्यैः पूजयेच्च यथाविधि ।

## [10][दशदानादिकरणम्]

[11]दशदानादि कुर्वीत यथोक्तद्रव्यसंयुतम् ॥१२५॥
भूरिदानं विशेषेण ब्राह्मणाय प्रदापयेत् ।
ब्राह्मणान्भोजये[12]त्पश्चाद्भक्ष्यभोज्यसमन्वितम् ॥१२६॥
विवाहं कारयेत्पश्चात्स्वसूक्तेनैव [13]वर्त्मना ।

---

[1] 'कर्ता तु प्राङ्मुखो भूत्वा त्वाचार्यादीन्प्रपूजयेत् ।
आचार्यं गन्धपुष्पाद्यैरभ्यर्च्य च यथाविधि ॥
गोभूहिरण्यवस्त्रैश्च प्रतिमा च सदक्षिणा ।
आचार्याय प्रदातव्या अभीष्टफलसिद्धये ॥
ऋत्विग्भ्यश्च तथा दद्यात्प्रतिमां वस्त्रसंयुताम् ।
दक्षिणां च प्रदत्त्वाथ जापकेभ्यश्च दक्षिणाम् ॥
दद्याद्वै भूरिदानं च यथाशक्त्यनुसारतः ।
अधमा पञ्चनिष्का तु द्विगुणा मध्यमा भवेत् ॥
त्रिगुणा चोत्तमा ज्ञेया देशिकस्य तु दक्षिणा ।
ऋत्विग्भ्यो जापकेभ्यश्च तदर्धार्धा तु दक्षिणा ॥
ब्राह्मणान्भोजयेत्पश्चाच्छतसङ्ख्यान्यथाक्रमम् ।
(**सिद्धान्तदीपिकायाम्** (टि. १२०) पृ० १२६, १२७)

[2] कर्ता च स्वस्त्रिया युक्तो वस्त्रहेमाङ्गुलीयकैः — ग.

[3] पूजयेत्कर्ता वस्त्र० — घ.

[4] गा दद्या० — घ.

[5] सम्यगलकारयुतां ततः — ग; सम्यक् गोमूल्यमथा भवेत् — घ.

[6] ०भिवर्द्धये — ख.

[7] 'ग' मातृकायां १२४ उत्तरार्धस्य १२५ पूर्वार्धस्य च स्थाने 'ऋत्विजान् जापकान्पूज्य दक्षिणाद्यैः प्रपूजयेत्' इत्येकमेवार्धं दृश्यते। एवं 'घ' मातृकायां १२४ उत्तरार्धात्प्रभृति १२६ पर्यन्तश्लोकानां स्थाने —
'ऋत्विजां दक्षिणां दद्यात्साधकं पूजयेत्क्रमात् ।
जापकान्पूजयेत्पश्चाद्दश दानानि भूरिशः ॥
कृत्वा स्वशक्त्या विधिवद्ब्राह्मणान्भोजयेत्सुधीः ।'
इति सार्धश्लोक एव दृश्यते।; ऋत्विजान् दक्षिणा० — ख.

[8] दद्यात् जापकान् तथा — ख.

[9] परिवारांश्च दक्षिणां पूजये यथाविधि — ख.

[10] दशदानानि —
'गोभूतिलहिरण्याज्यवासोधान्यगुलानि च ।
रौप्यं लवणमित्याहुर्दशदानान्यनुक्रमात् ॥'
(**शैवागमपरिभाषामञ्जरी** १०.३६)

[11] 'ग' मातृकायां १२५ उत्तरार्धस्य १२६ पूर्वार्धस्य स्थाने —
'दशदानानि कृत्वाथ भूरिदानं विशेषतः ।'
इत्येकमेवार्धं दृश्यते।

[12] ०त्पश्चाद् षड्रसैश्च विशेषतः — ग.

[13] मन्त्रतः — ख.

## [दम्पतीब्रह्मचारिसुवासिनीपूजा]

[1] दम्पती पूजयेत्पश्चात्सर्वद्रव्योपचारकैः ॥१२७॥
[2] ब्रह्मचारि [3] सुवासिनीर्भोजयेत्परमान्नकैः ।

## [4] [नागराजप्रतिष्ठाफलम्]

एवं कृत्वा नागराजप्रतिष्ठां [5] प्रीतिसंयुतम् ॥१२८॥
[6] यं यं काममपेक्षेत [7] तं तमाप्नोति मानवः ।
भर्तारं लभते कन्या [8] पुत्रकामो लभेत्सुतम् ॥१२९॥
वश्यकामो लभेद्वश्यं जयकामो लभेज्जयम् ।
धनकामो धनं प्राप्य [9] मोदते दिवि देववत् ॥१३०॥

## [10] [प्रतिवर्षमाश्वयुजमासपूजाफलम्]

[11] आश्विनशुक्लपक्षे तु चतुर्थ्यां सर्पराजकम् ।

---

[1] दम्पति — ख.

[2] ब्रह्मचारिपूजाविषये —
'विष्णुलोके च ये सर्पा अनन्ताद्या महाबलाः ।
नमोऽस्तु तेभ्यः सुप्रीताः पन्नगाः सन्तु मे सदा ॥
ब्रह्मलोके च ये सर्पा वासुकिप्रमुखाः शुभाः ।
नमोऽस्तु तेभ्यः सुप्रीताः पन्नगाः सन्तु मे सदा ॥
इन्द्रलोके च ये सर्पास्तक्षकाद्या महाबलाः ।
नमोऽस्तु तेभ्यः सुप्रीताः पन्नगाः सन्तु मे सदा ॥
कैलासलोके ये सर्पाः कार्कोटकबलादयः ।
नमोऽस्तु तेभ्यः सुप्रीताः पन्नगाः सन्तु मे सदा ॥
पाताललोके ये सर्पा आदिशेषादयो वराः ।
नमोऽस्तु तेभ्यः सुप्रीताः पन्नगाः सन्तु में सदा ॥
द्वीपान्तरे च ये सर्पाः कालिन्दीनिलयास्तथा ।
नमोऽस्तु तेभ्यः सुप्रीताः पन्नगाः सन्तु मे सदा ॥
पर्वताग्रेषु ये सर्पाः शिलासंधिषु संस्थिताः ।
नमोऽस्तु तेभ्यः सुप्रीताः पन्नगाः सन्तु मे सदा ॥
ग्रामे वा यदि वारण्ये ये च सर्पा गृहेषु वा ।
नमोऽस्तु तेभ्यः सुप्रीताः पन्नगाः सन्तु मे सदा ॥
इति स्तुत्वा, अष्टानां ब्रह्मचारिणां वस्त्रापूपताम्बूलदक्षिणादीनि तत्संनिधावेव दत्त्वा, नागराजार्पितपुष्पाक्षतान्ब्राह्मणानुग्रहेण सपत्नीकः परिगृह्य'
(**शान्तिकुसुमाकरे** पूर्वभागे पृ० २५, २६)

[3] सुवासिन्यो भोज० — ख; सुवासिन्यो पूजयेद्भोजनादिभिः — घ.

[4] 'सर्वपापहरं पुण्यं सर्वव्याधिनिवारणम् ।
आरोग्यमायुः कीर्तिश्च धनधान्यसमृद्धिदम् ॥
पुत्रार्थी लभते पुत्रं सर्वसंपत्तिमेव च ।
इहैव सकलं प्राप्य परतो मोक्षमाप्नुयात् ॥
(**कारणे** (टि. १२०) पृ० ८२, ८३);
'एवं यः कुरुते शेषराजस्थापनमुत्तमम् ।
प्रतिबन्धनिवृत्त्याथ चिरायुः सुखितो भवेत् ॥
वन्ध्या स्वदोषनिर्मुक्ता जीवपुत्रा भवेद्ध्रुवम् ।
पूर्वोक्तविविधैः पापैर्मुच्यते नात्र संशयः ॥
न तस्य संततेर्हानिः सत्यं सत्यं मयोदितम् ।
इहैव सकलान्भुक्त्वा सोऽन्ते सायुज्यमाप्नुयात् ।
(**सिद्धान्तदीपिकायाम्** (टि. १२०) पृ० १२७)

[5] प्रीतिसंयुतः — घ.

[6] यत्कामनवाप्नोति — ख; यं यं कामयते कर्ता — ग.

[7] तत्कामं तत्क्षणेन वै – ख.

[8] पुत्रकामे — ख.

[9] मोदन्ते — ख, ग, घ.

प्रतिवर्षं यजेद्विद्वान्सर्वकामार्थसिद्धये[1] ॥१३१॥
ब्राह्मणान्परमान्नेन भोजयेदपरेऽहनि ।
[2]स्तोत्रैः स्तुत्वा तु नागेशं क्षमस्वेति [3]नमस्कृतीः ॥१३२॥
एवं यः कुरुते मर्त्यः पुत्रपौत्राभिवृद्धये[4] ।
सर्प[5]बाधाविरहितः प्राप्नुयात्परमं पदम् ॥१३३॥

इति रौरवाख्ये महातन्त्रे क्रियापादे नागप्रतिष्ठा[6]विधिः
सप्तपञ्चाशः पटलः ॥

---

[10] 'तथा चाश्वयुजे मासि पञ्चम्यां कुरुनन्दन ।
कृत्वा कुशमयान्नागान्गन्धाद्यैः संप्रपूजयेत् ॥
घृतोदकाभ्यां पयसा स्नपयित्वा विशांपते ।
गोधूमैः पयसा स्विन्नैर्भक्ष्यैश्च विविधैस्तथा ॥
यस्त्वस्यां विधिवन्नागाञ्शुचिर्भक्त्या समन्वितः ।
पूजयेत्कुरुशार्दूल तस्य शेषादयो नृप ॥
नागाः प्रीता भवन्तीह शान्तिमाप्नोति वा विभो ।
स शान्तिलोकमासाद्य मोदते शाश्वतीः समाः ॥
इत्येष कथितो वीर पञ्चमीकल्प उत्तमः ।
यत्रायमुच्यते मन्त्रः सर्वसर्पनिषेधकः ॥
ओं कुरुकुल्ले फट् स्वाहा ।'
(**भविष्यपुराणे** ब्राह्मपर्वणि ३८ तमोऽध्यायः);
'नागचतुर्थी तु मध्याह्नव्यापिनी पञ्चमीयुता ग्राह्येति निर्णयामृते माधवीये चोक्तम्'
(**जयसिंहकल्पद्रुमे** चतुर्थीव्रतनिर्णये पृ० १८४)

[11] आश्विजशुक्ल० — ख; आश्वयुक्शुक्ल० — ग; आश्विचशुक्लपक्षं — घ.

[1] ०सिद्धितम् — ग; ०सिद्धने — घ.

[2] स्तोत्रे — ख.

[3] नमस्कृतः — ख, ग, घ.

[4] ०पौत्राभिवन्धयेत् — घ.

[5] ०भाथविरभितः — ख; ०बाधा विनश्यन्ति — ग; ०भाथविरहितम् — घ.

[6] ०विधिसप्तविंशतिपटलः — ख; ०विधानो नाम सप्तमपटलः — ग, घ.

## अष्टपञ्चाशः पटलः

### [1] ज्ञानदीक्षाविधिः

### [दीक्षायोग्यस्थानम्][2]

नदीतीरे मठे वापि [3]स्वस्थाने गुरुमन्दिरे।
पर्वताग्रे [4]शुचिस्थाने [5]मण्डपं तत्र कारयेत् ॥१॥
परीक्ष्य [6]चतुरङ्गुल्या [7]चतुर्हस्तं [8]सुवेदिकम्।
चतुर्द्वारसमायुक्तं चतुस्तोरणसंयुतम् ॥२॥
दुकूलचित्रपट्टैश्च[9] मुक्तादामैरलंकृतम्।
ऊर्ध्वे [10]विमानकं कुर्यात्पुष्पदामैः सुगन्धिभिः ॥३॥

### [11][अधिवासः]

गोमयालेपनं कृत्वा पञ्चगव्यैरवोक्षणम्[12]।

---

[1] अयं पटलः **ज्ञानावरणविळक्के** ३८७–३९१ पृष्ठेषु; **क्रियादीपिकायाम्** २१८, २१९ पृष्ठयोः; **शैवसंन्यासपद्धतौ** १३१–१३३; १४४–१४८ पृष्ठेषु च दृश्यते।;

एतस्मिन्विषये **अचिन्त्यविश्वसादाख्ये** ३३ पटलः; **चिन्त्ये** ३३ पटलः; **उत्तरकामिके** (आर्. इ.३४०६५) १४४ तमपत्रं (टि. २९८(२) २०१, २०२ पृष्ठे); **सार्धत्रिशतिकालोत्तरे** ८. पटलः; **सुप्रभेदे** (टि. २४५) २६२–२६५ पृष्ठानि; **सूक्ष्मे** (टि. ११२) ५५२–५५६ पृष्ठानि च द्रष्टव्यानि।

[2] 'शिवालये गुरुस्थाने शक्तिपीठे मठे गृहे। शुद्धदेशे' (**उत्तरकामिके** टि.२९८ (२) २०१ पृ०)

[3] सुस्थाने — ङ. च.

[4] रुचिस्थाने — ङ.

[5] 'एकान्ते भवने रम्ये वितानध्वजभूषिते।
मण्टपं कारयित्वाथ रङ्गवल्याद्यलंकृतम् ॥'
(**सुप्रभेदे** (टि. २४५) २६३ पृ०);

'स्वगृहे मठे नदीकूले पर्वताग्रे गुरुमन्दिरे, शुचिस्थाने वा चतुरङ्गुलं खात्वा संशोध्य चतुर्हस्तं चतुरश्रं चतुर्द्वारं चतुस्तोरणं विमानाकारं क्षौमादिचित्रपटैः सुगन्धिपुष्पमालादिभिरलंकृतमण्टपं गोमयेनालिप्य पञ्चगव्येन प्रोक्ष्य गन्धोपलिप्तं कारयेत्।'
(**शैवसंन्यासपद्धतौ** पृ० १२९)

[6] 'चतुरङ्गुलं खात्वा संशोध्य' इत्यर्थे 'परीक्ष्य चतुरङ्गुल्या' इति प्रयुक्तमिति भाति।

[7] चातुर्हस्ता — ङ; चतुर्हस्ता — च; 'छ' पाठान्तरम्; चतुर्हस्तस्य वेदिका — छ.

[8] सुवेक्षता — ङ; सुवेदिका — च, छ.

[9] ०पटजैः — छ.

[10] विमानमाहृत्य — छ.

[11] 'ततः समयविशेषदीक्षानन्तरं निर्वाणदीक्षाकाङ्क्षिणः शिष्यस्य ज्ञानदीक्षां कुर्यात्। तद्यथा शुभनक्षत्रादियुक्तकालं निर्णीय, ततः पूर्वदिने शिष्यमेकभुक्तं कारयित्वायुतमघोरजपं कार-

स्थानमित्युक्तमाश्रित्य कालं [1]कल्पितमेव च ॥४॥
शुभनक्षत्र[2]युक्ते तु दीक्षा [3]ग्राह्या हि तद्दिने।
ज्ञानदीक्षासमायुक्तं [4]ज्येष्ठं कृत्वा पुरोहितम् ॥५॥
[5]पुरोदिने त्वेक[6]भुक्तिस्तद्रात्रौ गव्य[7]सेवनम्।
[8]तद्दिने [9]चोपवासी स्यात्स्नानशौचसमन्वितः ॥६॥

[10][ज्ञानदीक्षायां रात्रिकाल उत्तमः]

अशुद्ध[11]मायारूपेण कालरात्रिरुदाहृता[12]।
माया[13]तत्त्वान्तिमस्थाने [14]चिद्रूपस्य हि दर्शनम् ॥७॥
[15]चिद्रूपं शुद्धमायान्ते [16]वस्तुनिश्चायकं क्रमात्।
[17]मायाद्वयोर्विलयनमेकाकारस्य भावनम् ॥८॥
तिरोधानातिरोधानं [18]निर्दर्शनसुदर्शनम्।
एतैः संयुक्त[19]काला तु काल[20]रात्रिर्विशिष्यते ॥९॥
[21]क्षयकृत्येऽर्धरात्रिः[22] स्यान्नित्य[23]संहृन्निशि स्थिता[24]।

---

येत्'। 'ततो मण्टपात्पश्चिमभागे पूर्वादिपश्चिमान्तमण्डलत्रयमुत्पाद्य पश्चिममण्डले त्रैवर्णिकसंन्यासिनं प्रणवेन, चतुर्थं हंसेन उभावपि मुमुक्षू पञ्चाक्षरेण ब्रह्मकूर्चं प्राशयित्वा, मध्यममण्डले दन्तशोधनं पूर्वमण्डले पादप्रक्षालनं शुद्धाचमनं च कारयित्वा तदहरुपवासं कारयेद् इत्यधिवासविधिः।'

(**शैवसंन्यासपद्धतौ** पृ० १२७, १२८)

[12] पञ्चगव्येन प्रोक्षणम् — च; पञ्चगव्येन चोक्षणम् — छ.

[1] 'कल्पितम्' विहितम् इत्यर्थे प्रयुक्तमिति भाति।

[2] ०योगे स्याद्दीक्षा — ङ; ०योगः स्याद्दीक्षा — च.

[3] ग्राह्यास्य — च; कार्या शुभे दिने — छ.

[4] श्रेष्ठं — ङ.

[5] तद्दिने — छ.

[6] ०भुक्तिः स्यात्तद्रात्रौ — छ.

[7] ०मिश्रितम् — छ.

[8] पुनर्दिने तूपवसन् स्नान० — छ.

[9] 'उपवासः प्रकर्तव्यो विधिवत्स्नानमाचरेत्।
स्वात्मार्चनाग्निकार्यं च दिवा मौनं सुतृप्तये॥
(**सूक्ष्मे** (टि. ११२) ५५१ पृष्ठे)

[10] 'अर्धरात्रोपदेशेन ज्ञानदीक्षां समाचरेत्।'
(**सूक्ष्मे** (टि. ११२) ५५१ पृष्ठे);
'रात्रौ निशीथसमये एकान्ते भवने शुभे।'
(**सुप्रभेदे** (टि. २४५) २६२ पृष्ठे);
'एकान्ते निर्जने स्थाने मध्यरात्रावुपक्रमे।
सच्छिष्याणां सदाचार्यो बोधं कुर्याद्विशेषतः॥'
(**उत्तरकामिके** टि. २९८(२) पृ० २०१)

[11] ०मायास्वरूपं — छ.

[12] ०रात्रिसमन्वितम् — छ.

[13] ०तत्त्वान्तिके स्थाने — छ.

[14] चिद्रूपां दर्शयेत्क्रमात् — छ.

[15] तद्रूपं — ङ.

[16] वस्तु निश्चयतिक्रमात् — च, 'छ' पाठान्तरम्।; यस्तु निश्चय एव च — छ.

[17] मायाद्विलीनमत्पत्ति — छ.

[18] न दर्शन० — ङ; निदर्शन — छ.

[19] कालैश्च — ङ; कालश्च — च.

[20] ०रात्रिरिति स्थितम् — ङ, च.

[21] क्षयस्योरर्ध० — छ.

[22] ०रात्री — ङ.

[23] ०स्मसृन्निशि — ङ.

[24] स्थितौ — ङ, च.

**[1] देहेन्द्रियादिव्यापारो [2] रात्रौ संलीयते यतः [3] ॥१०॥**
**एतेन शास्त्रविदुषां [4] रात्रिः कालोत्तमा [5] भवेत् ।**

[6] [ गुरुपादाम्बुजपूजनम् ]

**[7] सुकाले मण्डपं वेश्य गन्धपुष्पादिषोडश [8] ॥११॥**
**पूजाद्रव्याणि संपाद्य [9] उत्तराभिमुखः स्थितः ।**
**भूत [10] शुद्ध्यात्मशुद्ध्यादि [11] कृत्वा त्वार्घ्यादिकं तथा ॥१२॥**
**[12] चतुस्तालं तु दीर्घं स्यात्षट्त्रिंशाङ्गुलमुन्नतम् ।**

---

[1] देहेन्द्रियस्य — छ.

[2] रात्र्यां तु लयनं व्रजेत् — छ; रात्र्यां तु विलयं व्रजेत् — 'छ' पाठान्तरम् ।

[3] 'छ' मातृकायां १० श्लोकानन्तरं 'निशासु दीपकाले वा ज्ञानदीपस्य दर्शनम्' — इत्यधिकम् ।

[4] रात्रिकालोत्तमं — ङ.

[5] कालोत्तमं — च.

[6] 'तदनु अर्धरात्रे ज्ञानदीक्षायुक्तं स्वज्येष्ठं पुरोहितं कृत्वा, मण्डपस्य दक्षिणभागे दर्भासने उदङ्मुख उपविश्य, भूतशुद्धिकरन्यासाङ्गन्यासकलान्यासानात्मपूजां च विधाय, पाद्याचमनार्घ्यपात्राण्यासाद्य, गन्धपुष्पादिपूजाद्रव्याणि संशोध्य चतुरश्रं षट्त्रिंशदङ्गुलोन्नतं गन्धानुलिप्तं क्षित्यादिकुटिलान्तमन्त्रसिंहासनं संपूज्य, गन्धोदकेन स्नातं सिंहासने उपविष्टं ज्ञानाचार्यं स्वामिन् भवन्तं पूजयामीति प्रार्थ्य, लब्धानुज्ञो घृतकाठिन्यवज्ज्ञानात्मानमेव शिष्यानुग्रहार्थं द्विभुजमेकवक्त्रं त्रिनेत्रं चन्द्रशेखरं स्फटिकाभं जातं ध्यात्वा शक्तिशिवात्मकं रक्तस्फटिकाभं पादाम्बुजद्वन्द्वं संगृह्य, गन्धादियुक्तजलेन शिवमन्त्रेणाभिषिच्य, दुकूलेन परिमृज्य, भूर्जपत्रे शिलावृत्ते सुगन्धानुलिप्ते प्रणवं लिखित्वा, तन्मध्ये तिरोधानमलरूपं नमः समालिख्य, ज्ञानाचार्यदक्षिणपादन्यासनं संक्षिपेत् ।

ततो दक्षिणामूर्तिरूपं वीरसिंहासनस्थितं दिव्यगन्धैः पुष्पादिभिर्भूषणैर्दिव्यवस्त्रकिरीटमकुटैश्च शिवमन्त्रेण संपूज्य, धूपदीपौ दत्त्वा, विधिवदुत्पन्नं स्थालीपाकं सव्यञ्जनं घृतक्षीरमधुशर्करापूपपानीयफलादिसहितं कनकादिपात्रे शिवमन्त्रेण स्वाहान्तेन निवेद्य, निवेदितमन्नमन्यत्र शुद्धदेशे पादाभिषेकजलं च निधाय, स्थलशुद्धिं कृत्वा, पाद्याचमनार्घ्याणि मुखवासं च दत्त्वा, धूपदीपारात्रिकच्छत्रचामरव्यजनदर्पणानि समर्पयेत् ।'
(**शैवसंन्यासपद्धतौ** १२९, १३० पृष्ठयोः)

[7] स्वकाले मण्डपे — ङ, च, छ.

[8] ०षोडशैः — ङ, च, छ.

[9] 'शिष्यः —
देहशुद्ध्यादिकं कृत्वा शुद्धवस्त्रैरलंकृतः ।
भस्मरुद्राक्षचिह्नाङ्गः शिवमन्त्रं समुच्चरन् ॥
गुरुसंनिधिं गत्वा च अञ्जलीहस्तसंयुतः ।
उत्तराभिमुखो भूत्वा स्थित्वा ज्ञानं प्रपूरयेत् ॥'
(**सूक्ष्मे** (टि. ११२) ५५२, ५५३ पृष्ठयोः)

[10] ०शुद्धिं चात्मपूजामर्घ्यत्रयं सुपूर्ववत् – छ.

[11] कृत्वा चार्यादिकं — च.

[12] 'गोमयेनोपलिप्योर्वीं पिष्टचित्रैरलंकृतम् ।
सिंहासनं तदूर्ध्वे तु स्थापयेल्लक्षणान्वितम् ॥
गन्धपुष्पैरलंकृत्य कबरीकेशसंयुतम् ॥
मुक्तादुकूलवसनं पद्मनीलोत्पलैर्युतम् ॥
आरग्वधैश्च बिल्वैश्च शमीदूर्वैरलंकृतम् ।'
(**सूक्ष्मे** (टि. ११२) ५५१, ५५२ पृष्ठयोः);
चतुः सालस्य दीर्घं — ङ; चतुस्तालस्य दीर्घं — च, छ.

गन्धानुलेपनं कुर्याद्विधि[1]वत्क्लृप्तमासनम् ॥१३॥
क्षित्यादिकुटिलाप्रान्तं मन्त्ररूपं समर्चयेत् ।
[2]गन्धोदकेन सुस्नातं रक्तपट्टाम्बरान्वितम् ॥१४॥
[3]अष्टात्रिंशत्कला[4]न्याससोऽहंभावनयान्वितम् ।
ज्ञानदेशिकमास्थाय दिव्यपादाम्बुजं [5]ग्रहेत् ॥१५॥
[6]शास्त्रोक्तगन्धद्रव्येण [7]ह्यभिषिच्य पदद्वयम्[8] ।
शुक्लवस्त्रेण संमृज्य [9]कुसुमानि समर्पयेत् ॥१६॥
भूर्जपत्रे शिलावृत्ते [10]सुगन्धेनानुलेपिते ।
प्रणवं च लिखित्वाथ [11]तन्मध्येऽथ लिखेन्नमः ॥१७॥
तिरोधानमलं ध्यात्वा गुरुपादासनं क्षिपेत् ।
[12]नानादिव्यसुगन्धैश्च [13]पुष्पदामैश्च पूजयेत् ॥१८॥
धूपदीपौ समारोप्य [14]स्थालीपाकं निवेदयेत् ।
दक्षिणामूर्तिरूपेण गुरुं शिष्यस्तु भावयेत् ॥१९॥
[15]इत्थं हि भावः शिष्यस्य [16]गुरुं पाशविमोचनम्[17] ।

[18][ज्ञानदीक्षाकरणप्रकारः तत्राध्वशोधनम्]

ईक्षणज्ञानदीक्षाभ्यां क्रमात्कृत्यं करोति सः ॥२०॥

---

[1] ०वच्चाप्तमासनम् — च; ०वच्चास्त्रमासनम् — छ.

[2] दुकूलवस्त्रैरलंकृत्य उष्णीषाद्युत्तरीयकैः ।
सर्वाभरणैः संभूष्य गन्धचन्दनलेपनः ॥
भस्मरुद्राक्षसंपन्नो योगपट्टविभूषितः ।
पुष्पमाल्यैरलंकृत्य मूर्तिभावमनुस्मरन् ॥
सिंहासनोपरि स्थाप्य लम्बपादसमन्वितः ।
दक्षिणाभिमुखो भूत्वा दक्षिणामूर्तिवद्गुरुः ॥
(सूक्ष्मे (टि. ११२) ५५२ पृष्ठे)

[3] अष्टात्रिंशत् — ङ.

[4] न्यासं सोऽहं — च, छ.

[5] गृहेत् — ङ.

[6] शास्त्रोपचारद्रव्येण — छ.

[7] अभिषेचनमन्त्रतः — छ.

[8] शिष्यः—
जान्वादिपादपर्यन्तं शुद्धाभिषेकमाचरेत् ।
पञ्चगव्याभिषेकं च पञ्चामृताभिषेचनम् ॥
शुद्धाभिषेकसंयुक्तं वस्त्रोद्वर्तनमेव च ।
गन्धचन्दनलेपैश्च अर्चयेद्विधिना पशुः ॥
पायसान्ननिवेद्यं च फलापूपगुलान्वितम् ।
निवेद्य विधिवच्छिष्यो धूपदीपार्घ्यसंयुतम् ॥
षोडशेनोपचारेण गुरुपादौ प्रपूजयेत् ।
आगामि दग्धं तत्काले शिष्यदेहस्थितिर्भवेत् ॥
(सूक्ष्मे (टि. ११२) ५५३ पृष्ठे)

[9] समत्वेकस्थिरासनम् — छ.

[10] सुगन्धमनुलेपनम् — छ.

[11] तस्य मध्ये नमो लिखेत् — छ.

[12] नानाद्रव्यसु० — च.

[13] पुष्पदामैरलंकृतम् — छ.

[14] स्थालीपाकशब्दस्य लक्षणया स्थालीपाककर्मणा निर्मितमन्नमित्यर्थः ।

[15] इदं हि भावं — ङ, च.

[16] गुरोः पाशविमोचनम् — ङ, च, छ.

[17] अत्र 'कारयति' इति पदमध्याहृत्य व्याख्येयम् ।

[1]ब्रह्माण्डस्य स्वरूपेण [2]पृथिवी जानुमात्रतः।

---

'छ' मातृकायां (१–२० पू०) श्लोकाः **'अचिन्त्यविश्वसादाख्ये'** इति निर्दिश्योद्धृताः।

[१८] 'आचार्यः सर्वदा शुद्धो भस्मोद्धूलितविग्रहः।
रुद्राक्षमालाभरणश्चीरकृष्णाजिनाम्बरः॥
स्वानुष्ठानं समाप्याथ शिवतत्त्वं विभावयन्।
कृपया वीक्षितं शिष्यं मण्डलत्रयसंस्कृतम्॥
पञ्चगव्यं प्राशयित्वा षडध्वन्यासशोधनम्।
स्थूलसूक्ष्मप्रभेदेन कृत्वा देहे शिवाणुना॥
पादाङ्गुष्ठादिमूर्धान्तं दिव्यदृष्ट्या विलोक्य च।
सौषुम्नेन पथा नीत्वा तज्जीवं द्वादशान्तकम्॥
स्वात्मना तु सुसंयोज्य तद्देहं च विशोध्य च।
रेचकादिभिराकृष्य तद्देहं च प्रवेश्य च॥
तद्द्वादशान्ते संस्थाप्य सुसंशोध्य शिवेन तु।
तदा समरसीभावं भावयन्नात्मजीवयोः।
आत्मानं शिवतत्त्वेन संयुक्तं हृदयेऽप्यसौ॥
संस्थाप्य मूलमन्त्रेण सदा सन्तुष्टमानसः।'
(**सुप्रभेदे** (टि. २४५) २६३ पृष्ठे);

'तत आचार्यः शिष्यसमर्पितपूजां शिवोऽहंभावनया स्वीकृत्य शिष्यस्य कलाः शोधयेत्।' 'तदनु मण्डले षडुत्थासने उदङ्मुखं शिष्यमवस्थाप्य, शिखादिपादान्तं शान्त्यतीतादिनिवृत्त्यन्तकलाभिर्मन्त्रपदवर्णभुवनतत्त्वरूपं व्याप्तं विभाव्य, मलमायाकर्माणि कलापञ्चकव्याप्तानि संचिन्तयेत्।'

'तदनु मन्त्रादीनां व्याप्यव्यापकभावमनुसंदध्यात्। तद्यथा मन्त्राः पदैर्व्याप्ताः। पदानि वर्णैः। वर्णा भुवनैः। भुवनानि तत्त्वैः। कर्मानुस्यूतानि तत्त्वानि मायाभ्याम्। ते च मलेन। मलं कलाभिरिति विभाव्य कलाः शोधयेत्।

तदनु शिष्यस्य नाभिकुण्डे वागीश्वरीवागीश्वरौ ध्यात्वा, समयाचाराधिकारी चेत्सबीजदीक्षया वर्तमानशरीरारम्भकधर्मादिष्टापूर्तादिकात्सानुषङ्गिकात्समयाचाराच्चान्यत्सर्वं कर्म युगपत्परिपक्वं कृत्वा, वागीश्वरीवागीश्वरसंयोगं विभाव्य, शिष्यस्यात्मानं तद्गर्भे स्थित्वा, युगपत्सर्वयोनिषु जातं संचिन्त्य, कालत्रयव्यापिधर्माधर्मात्मकं सर्वं कर्म युगपद्भोजयित्वा, मन्त्रौषधतिरोहितविषशक्तिवदज्ञानं प्रतिबन्धं विभाव्य, ब्रह्मादिकारणत्यागक्रमेण शिवपदे संयोज्य, सर्वज्ञतादिषाड्गुण्याभिव्यक्तिं प्रकाश्य, शिवसमत्वं प्रापयेत्।

समयाचारानधिकारी बालादिश्चेन्निर्बीजदीक्षया देहारम्भकधर्मादानुषङ्गिकाच्चान्यत्समयाचारसहितं सर्वं कर्म शोधयेत्।

बुभुक्षुश्चेत्कालत्रयव्यापिधर्मात्माकं सर्वं कर्म वर्तमानशरीरे भोगदायकं संभाव्यातिरिक्तं सर्वधर्मात्मकं शोधयित्वा, ब्रह्मादिकारणत्यागक्रमेण शुद्धविद्यातत्त्वे संयोज्य, शिष्यमस्तके शिवहस्तं निधाय, मात्रालक्षणसंयुक्तं सकलप्रासादमुपदिशेत्।

मुमुक्षुश्चेत्प्रारब्धकर्म विहाय धर्माधर्मात्मकं सर्वं कर्म शोधयित्वा, पूर्ववदज्ञानं प्रतिबन्धं विभाव्य, ब्रह्मादिकारणत्यागक्रमेण परशिवपदे पूर्ववच्छिवसमत्वे योजयित्वा, शिष्यमस्तके शिवहस्तं निधाय, मात्रालक्षणसंयुक्तं निष्कलप्रासादमुपदिशेत्। इति ज्ञानदीक्षाविधिः॥

शान्त्यतीतकलास्थितभुवनपर्यन्तगतभोगानपेक्षिणं तीव्रतरशक्तिनिपातयुक्तं शिष्यमाचार्यो मुहूर्तं परमानन्दनिमग्नो भूत्वानन्तरं पराशक्तिमयो भूत्वा, चक्षुषी उन्मील्य, प्रारब्धकर्म विहाय ज्ञानदृष्ट्यवलोकनोत्थिताग्निना निवृत्त्यादिकलासु स्थितं सर्वं कर्म दाहयित्वा, मन्त्रपदवर्णभुवनतत्त्वादिक्रमेण कलासु संयोज्य, कलाः पञ्च शक्तिषु नियुज्य, हस्तमस्तकसंयोगेन मायाद्वयं विसृज्याणवमलावृतस्य राहुग्रस्तचन्द्रवत्स्थितस्यात्मनो मलं ज्ञानक्रियाशक्तिभिरपसार्यात्मानं पराशक्त्यां संयोज्य, पुनरात्मानं पराशक्तिं चाद्वैतरूपपरशिवे नदीसमुद्रजलवत् क्षीरे क्षीरवद् घृते घृतवद्योजयेत्। मन्दमलपरिपाकश्चेत्पूर्ववदधिकारितारतम्येन योजयेत्। जीवपरयोरैक्यं प्रासादेन पञ्चाक्षरेण वोपदिशेत्॥' (**शैवसंन्यासपद्धतौ** पृ० १३०, १३३, १३७-१३९)

[1] ब्रह्मण्यस्य — ङ, ब्रह्मणेऽस्य — च.

[2] पृथ्वी जानुप्रभृत्यधः — छ.

पृथ्वीप्रकृति[1]पर्यन्तं [2]व्याप्तमप्तत्त्वं नाभितः ॥२१॥
पृथिवीश्वरतत्त्वान्तं[3] [4]व्याप्तश्चाग्निस्तु [5]कण्ठतः ।
पृथ्वीसदाशिवान्तं च[6] वायुतत्त्वं ललाटतः ॥२२॥
पृथिवी[7]शक्तितत्त्वं च आकाशं ब्रह्मरन्ध्रतः[8] ।
मन्त्रादिषड्विधं रूपं [9]भूतादिद्वन्द्वभावकम् ॥२३॥
एतैः [10]सुगर्भिते स्थाने निवृत्त्यादिकलाङ्गवित् ।
सोऽहं [11]भावित आचार्यस्त्वध्वसंचितकर्म च[12] ॥२४॥
[13]ज्ञानाग्निना दहेत्तत्तु [14]ह्यध्वसंशोधनं भवेत् ।
[15]शुद्धमायास्वरूपं चाप्याणवाख्यमलं तथा ॥२५॥
[16]आत्मशक्तिं निरुध्यैव तिष्ठत्येतदनादि च ।
[17]ज्ञानदृष्ट्या निरीक्षेत निर्मलस्त्वभिधीयते ॥२६॥
शिष्यस्य ब्रह्मरन्ध्रे तु स्वहस्त[18]तलमादिशेत् ।
[19]राहुमुक्तग्रहश्चन्द्रस्त्वत्यन्तं निर्मलो यथा ॥२७॥
शिवे[20]चैतन्यसंधानं शिवत्वव्यक्ति तत्पदम् ।
ततः शिवात्मनोरैक्यं मूलमन्त्रेण दर्शयेत्[21] ॥२८॥

---

[1] ०पर्यन्तव्याप्तिरप्तत्त्वं — ङ; ०पर्यन्तव्याप्तिरप्तत्वनाभि च — च.
[2] व्याप्ताप्तत्त्वेन नाभि च — छ.
[3] ०तत्त्वं च — ङ.
[4] व्याप्य चाग्निस्तु — ङ, च; व्याप्तमग्नि च — छ.
[5] कर्णयोः — छ.
[6] ०सदाशिवालीनं — ङ, छ.
[7] ०शक्तिबीजं च — छ.
[8] ०रन्ध्रवित् — 'छ' पाठान्तरम् ।
[9] भूतानि — च.
[10] सुगन्धिते — ङ, च, छ.
[11] ०भावितमाचार्य — च.
[12] ०कर्मणः — छ. —
[13] ज्ञानाग्निदाहमाश्रित्य — छ.
[14] अध्वसं० — ङ, च —
[15] 'छ' मातृकायां २५ उत्तरार्धस्थाने
'शुद्धमायास्वरूपेण शिष्यचैतन्यभावनम् ।
शिष्यचैतन्यमूढेन आणवादि तिरोहितम् ॥'
इत्यर्धद्वयं दृश्यते ।
[16] आत्मशक्तिनिरुद्धैव — ङ.
[17] 'ज्ञात्वा विलोक्य कृपया शिवहस्तं च दापयेत् ।
प्रणामं कारयेत्पश्चात्तस्य नाम च दापयेत् ॥'
(**अचिन्त्यविश्वसादाख्ये** ३६.३२);
'शिष्यं विनीतमाचार्यः कारुण्येनावलोकयेत् ।
कारुण्यदृष्टिमात्रेण सिद्धिर्भवति शिष्यके ॥'
(**चिन्त्ये**, ३३.२६);
'आचार्यः —
मूर्धादिपादपर्यन्तं ज्ञानदृष्ट्या निरीक्षयेत् ।
तत्काले संचितं दग्धं पश्चाच्छ्रीपादयोः क्रमात् ॥
शिष्यमूर्ध्नि शिवं हस्तं सूक्ष्ममन्त्रोपदेशयुक् ।'
(**सूक्ष्मे** (टि. ११२) ५५३, ५५४ पृष्ठयोः)
[18] ०तलसंस्पृशः — छ.
[19] राहुनिग्रहतश्चन्द्र — ङ; राहुनिग्रहणाच्चन्द्र — छ.
[20] वै तव संधानं — ङ.
[21] 'छ' कोशे २८ श्लोकानन्तरं —
'स्वयं संधानयोः शिष्य एकाग्रचित्तयोः स्थितम् ।
मात्रालक्षणसंयुक्तप्रासादसहिताक्षरम् ।
विध्युक्तेन प्रकारेण उपदेशं च कृत्य यत् ।
एषां कृत्यविशेषेण पाशं कालिङ्गसंभवम् ।
पाशच्छेदेन मुक्तिः स्यादतिरहस्यकर्मणि ।'
इत्यधिकं दृश्यते ।

[1] [शिष्यमूर्धादौ पादद्वयन्यासः, शिवज्ञानबोधनं च]

**[2] शिष्यं तु संमुखं कृत्वा [3] स्वस्य पादद्वयं च तत्।**
**शिवशक्तिस्वरूपेण मूर्धादौ विन्यसेद्गुरुः[4] ॥२९॥**
**[5] पृथ्व्यादिभूतसंचार[6] आकाशगुण उच्यते।**
**आकाशे ब्रह्मरन्ध्रेऽपि [7] निर्दग्धः कर्मनाशनः ॥३०॥**
**[8] ज्ञानेन्द्रियाणां सर्वेषामधिका चाक्षुषी भवेत्।**
**[9] तस्माद्दृष्टिद्वये[10] चैव युग्मपादस्पृशो[11] भवेत् ॥३१॥**
**कर्मेन्द्रियार्जितं दग्धं ज्ञानेन्द्रियस्य [12] संस्पृशात्।**
**मनो बुद्धिरहंकारः[13] [14] सर्वेन्द्रियप्रवर्तकम् ॥३२॥**

---

[1] 'अर्चापयेत्स्वपादाब्जं वस्त्रगन्धसुमादिभिः।
धूपं दीपं च नैवेद्यं कारयित्वा पदाम्बुजे॥
प्रणामं कारयित्वाथ तत्पदं तस्य मस्तके।
विनिक्षिप्य यथाशास्त्रमनारभ्य [स्त्रं समालभ्य?] कुशादिभिः॥
रात्रौ निशीथसमये एकान्ते भवने शुभे।
मुद्रया च महत्या वा शिष्यदेहं च संस्पृशन्॥
इच्छाज्ञानक्रियाशक्तिसंपन्नं मन्त्रमुत्तमम्।
एकाक्षरं महामन्त्रं सर्वसिद्धिप्रदायकम्॥
सकलं निष्कलं चैव निर्बीजं च सबीजकम्।
सर्वाधारं निराधारमनादि जगदादिकम्॥
एकाक्षरं महामन्त्रं ज्योतीरूपं परात्परम्।
शिष्यस्य कर्णमूले तु व्यादिशेत्सावधानतः॥
उपदिश्य शिवज्ञानं शिवरूपं च तत्त्वतः।
अनुगृह्य कृपादृष्ट्या विसृजेत्तं यथासुखम्॥'
(**सुप्रभेदे** (टि. २४५) २६३, २६४ पृष्ठयोः);
'आचार्यः —
पश्चाच्छ्रीपादं शिरसि मुखे हृदय एव च।
त्रिस्थाने शिवपादं स्थापितं [स्थापयेद्?] विधिवद्गुरुः॥
प्रारब्धमलमेवं तु सूर्याग्रे ग्रहदीपनात्।
अप्रकाशमयं कृत्वा तथैव मलमेव च॥
पश्चमलं क्रमाद्दग्धं शिवपादस्य स्थापनात्।
दशकार्यक्रमं चैव बोधयेच्छिष्यं सद्गुरुः॥
तस्य ज्ञानं महासूक्ष्मं वाङ्मनोतीतगोचरम्।
रहस्यमतिगुह्यं च सूक्ष्मात्सूक्ष्मं शिवं भवेत्॥'
(**सूक्ष्मे** (टि. ११२) ५५४ पृष्ठे);
'एवं योजितस्यात्मनः प्रारब्धकर्मभोगार्थं देहे स्थितत्वात्पञ्चभूतपञ्चेन्द्रियान्तःकरणबाधानिवृत्त्यर्थं समाधिसामर्थ्यार्थं च ब्रह्मरन्ध्रचक्षुर्हृदयभ्रूमध्यानि शिवशक्तिरूपदिव्यपादद्वयेन स्पृशेत्।
ब्रह्मरन्ध्रस्याकाशस्थानत्वादितरेषां चतुर्णां भूतानां तत्रान्तर्भूतत्वात्तत्स्पर्शेन तच्छुद्धिः। भ्रूमध्यस्य समाधिस्थानत्वात्तत्स्पर्शात्समाधिशुद्धिः।'
(**शैवसंन्यासपद्धतौ** १३९ पृष्ठे)

[2] शिष्यस्य संमुखे स्थित्वा — छ.

[3] दिव्यपादद्वयेन च — छ.

[4] विन्यसेत्क्रमात् — ङ; विन्यसो भवेत् — छ.

[5] 'च' कोशे ३०—३५ श्लोका न दृश्यन्ते।; पृथिव्यादि — ङ.

[6] ०संचारं — ङ.

[7] निर्दग्धकर्म० — ङ.

[8] कर्मेन्द्रियाणि सर्वाणि अधिका — छ.

[9] अस्माद् — छ.

[10] ०द्वयं — ङ.

[11] ०स्पृशं — ङ.

[12] कर्मणि — छ.

[13] ०कारं — ञ; अत्र 'एतत्त्रयम्' इति पदमध्याहृत्य व्याख्येयम्।

[14] सर्वेन्द्रियाणि च गोचरम् — छ.

[1]तस्य कर्म च दग्धं [2]स्याद्धृद्देशे तु स्पृशेत्पदा।
पुनरागत्य भ्रूमध्यमात्मनः सोऽहमाप्नुवन्[3] ॥३३॥
[4]प्रविश्य च तनुं ग्राह्य ब्रह्मरन्ध्रे प्रवेशयेत्।
[5]स्वस्थाने पादमाहृत्य [6]प्रणतं दण्डवद्गुरुः॥३४॥
भावनादीक्षया [7]चैनं [8]शुद्धं कृत्वा यथाविधि।
शिवज्ञानबोध[9]शास्त्रं दद्यात्पत्यादिचिन्तनम्॥३५॥

[10][शिष्येण गुरवे स्वात्मसमर्पणं, तदनन्तरकर्तव्यं च]

अनुग्राह्यस्तु यः शिष्यो वाङ्मनःकायकर्मभिः।
अर्थप्राणाभिमानांश्च[11] सद्गुरुभ्यो निवेदयेत्॥३६॥
एतस्मात्कारणादेव[12] [13]स्वातन्त्र्यरहितो भवेत्[14]।

---

[1] तस्मात्कर्म — ङ.
[2] च हृद्देशे — छ.
[3] ०माप्नुयात् — ङ, छ.
[4] विवशो यस्तनुं — छ; इदमर्धं 'ङ' कोशे न दृश्यते।
[5] स्वस्थानपाद० — ङ.
[6] माष्टाङ्गं दण्डवद्गुरुम् — छ.
[7] शिष्यं — छ.
[8] हस्ते प्रणवमीक्षणम् — छ.
[9] शास्त्रं च ददौ रूपस्य चिन्तनम् — छ.
[10] 'शरीरमर्थं प्राणं च गुरवे संनिवेदयेत्।
शरीरप्राणकं चैव गुर्वनुज्ञापुरस्सरम्॥
तदाज्ञया चानुभवः सततं भक्तिसंयुतः।
चित्तं तु सकलं तस्मै गुरवे तु समर्पयेत्॥
स्वातन्त्र्यं च सर्वं च विसृज्य मनसा तदा।
वाचा च कर्मणा चैव गुर्वर्थं तु चरेद्बुधः॥'
(**अचिन्त्यविश्वसादाख्ये** ३६.३[illegible]३६);
'दासीदाससमृद्धिं च हस्त्यश्वरथगोकुलम्।
धनधान्यं च वस्त्रं च आसनं शयनादिकम्॥
ग्रामाद्यं श्रद्धया युक्तः सद्गुरुभ्यो निवेदयेत्।'
'अथवान्यकुलः श्रीमाञ्छिष्यो भक्तिसमन्वितः।
यत्संभवति तत्सर्वं गुरवे संनिवेदयेत्॥
धनधान्यादिहीने तु त्रिशुद्धया भक्तवत्सलः।
मानमोहविनिर्मुक्तः कायक्लेशपरायणः॥
कृत्वा दीर्घनमस्कारं स्वशरीरं निवेदयेत्।'
(**चिन्त्ये** ३३.२० उ०, २१; २३ उ०-२५);
'सोऽपि लब्ध्वा गुरोस्तस्मान्महामन्त्रमनुत्तमम्।
संतुष्टेन हृदा तत्र शिवाविर्भावमात्मनः॥
संतोष्य च शिरःकम्पैर्ज्ञानप्राप्तिमनुत्तमाम्॥
विचरेत्स्वेच्छया लोके जगदानन्दकारकः॥
समर्प्य गुरवे सर्वं क्षेत्रसंपद्धनादिकम्।
ईषणात्रयनिर्मुक्तः शिवानन्दानुभूतिमान्॥
सर्वत्र समदृष्टिश्च सर्वं शिवमनुस्मरन्।
समाधिसाधनैर्युक्तः समाधिस्थो जितेन्द्रियः॥
स शिवाकारमापन्नः शिवतत्त्वे विलीयते।
इयमेव ज्ञानदीक्षा इयमेव परा गतिः॥
इदमेव शिवज्ञानं तदूर्ध्वं तु न किंचन।'
(**सुप्रभेदे** (टि. २४५) २६४, २६५ पृष्ठयोः);
'ज्ञानदीक्षां गुरोर्लब्ध्वा ह्यात्मारामः सुखी भवेत्।
अखण्डसच्चिदानन्दमवाङ्मनसगोचरम्॥
शिवतत्त्वमनाद्यन्तं भावयन्सर्वदा हृदि।
विचरेत्कामतः शुद्धो यत्र कुत्रापि देशिकः॥
नित्यं समाधिसंपन्नः स शिवः सर्वदा भवेत्।
स एव परमः श्रेष्ठो गुरूणां गुरुरुत्तमः॥
तत्समो नास्ति लोकेऽस्मिन्नात्र कार्या विचारणा।
(**सुप्रभेदे** (टि. २४५) २६०, २६१ पृष्ठयोः)
[11] ०मानानि — ङ.
[12] एत्यैव कारणं कुर्यात् — छ.

[1]स्वातन्त्र्यरहितोऽप्येष समयाचारकल्पितम्[2] ॥३७॥
[3]निर्दग्धपटवद्देही वाङ्मनःकायकर्मभिः।
निःसारदेहं संगृह्य शुद्धकृत्यैरनुष्ठितम् ॥३८॥
कुलालचक्रभ्रमणं धनुर्बाणसमन्वितम्।
[4]एतैश्च करणैर्हृत्वा शब्दादिविषयान्वितम् ॥३९॥
[5]संस्कारैर्लशुनं पात्रं यथा परिमलं भवेत्।
पद्मासने स्थितिं कृत्वा कायकर्मसु निश्चलम्[6] ॥४०॥
मौनमास्थाय [7]वाग्दोषात्प्राणायाममना भवेत्।
[8]शिवध्यानपरो यस्मात्[9]सर्वकर्म विनश्यति ॥४१॥
चिदाकाशे [10]हि हृत्पद्मे ज्योतीरूपं विभावयेत्।
[11]ईक्षेत सर्वद्रव्याणि कार्पासाश्रयदीपवत् ॥४२॥
[12]दहेच्च सर्वपापानि देहनाशे तु मुक्तिदम्।

[13][ज्ञानदीक्षा मुक्तिदा]

[14]जले जलं यथा क्षिप्तं क्षीरे क्षीरमिवार्पितम् ॥४३॥
तथैव ह्येकतां याति दीक्षामन्त्रेण मन्त्रवित्।
यथा प्रदीप्ते ज्वलने तूलराशिः समर्पितः ॥४४॥
दग्धो [15]निर्याति सर्वत्र न भूयस्तूलतां व्रजेत्।
एवं शैवाध्वरं प्राप्य दीक्षामन्त्रसमुद्भवम् ॥४५॥
न पुनर्जन्मतां याति दीक्षितो मनुजोत्तमः।

---

[13] स्वतन्त्र — ङ.
[14] 'ङ' कोशे ज्ञानदीक्षायां 'रौरवे' इति निर्दिश्यैतावानेव भाग उद्धृतः।
[1] स्वतन्त्ररहितोऽप्येष — ङ; स्वातन्त्र्यरहितश्चैव — छ.
[2] कल्पितः — ङ, छ.
[3] निर्दिश्य पटरूपानां — छ.
[4] एवं तत्कारणै० — ङ.
[5] संस्करणाभिलशुनं पात्रं परिमलं — छ.
[6] निश्चितम् — छ.
[7] वाग्दोषात्तस्य नश्यति तत्क्षणात् — छ.
[8] प्राणायाममनाः स्थित्वा — छ.
[9] शिवध्यानपरायणः — छ.
[10] हृदा पद्मे — छ.
[11] ईक्षेण — ङ, छ.
[12] दहेयुः — ङ, छ.
[13] 'एषा ज्ञानवती दीक्षा शिवज्ञानप्रदायिनी।
शिवसायुज्यदा श्रेष्ठा मलत्रयविमोचिनी॥
इच्छाशून्या क्रियाशून्या साक्षान्मोक्षप्रदायिनी।'
(सुप्रभेदे (टि. २४५) २६१ पृष्ठे)
[14] 'ङ' कोशे ४३ उत्तरार्ध ४४ श्लोकः ४५ पूर्वार्ध च न दृश्यन्ते।; एतत्पटलस्थाः ४३ उ०-४८ श्लोकास्तथा ५१-५३ श्लोकाश्च किंचित्पाठभेदेन सह रौरवे विद्यापादे अष्टमपटले दृश्यन्ते।
[15] निर्वाति — छ.

[1] भिन्ने देहे शिवो भूत्वा शिव[2]धर्मैः समन्वितः ॥४६॥
शिवानन्दमनुप्राप्य [3]नाविर्भावाय कल्पते।
[4]जलं सामुद्रमासाद्य नदी हृष्टाम्बुवाहिनी ॥४७॥
क्षारतोयत्वमायाति प्रभावाद्धि महोदधेः।
एवं वै देहभिन्नात्मा शिवमेवाधिगच्छति ॥४८॥
[5]एवं दीक्षाविशुद्धात्मा देहस्थोऽपि न देहभाक्।
निर्दग्धाशेषपाशत्वाज्जीवन्मुक्तः शिवैकधीः ॥४९॥
देहपाते चिदानन्दशिवैकरसतां व्रजेत्।
न पुनर्भेदमायाति सरित्तोयमिवाम्बुधेः ॥५०॥
यथा सूर्योदयं प्राप्य तमः क्षिप्रं विनश्यति।
एवं दीक्षां समासाद्य धर्माधर्मौ विनश्यतः ॥५१॥
यथा सूर्य इमाँल्लोकान्प्रकाशयति रश्मिभिः।
तथा मन्त्रान्हरो देवः शक्तिभिस्तान्प्रकाशयेत् ॥५२॥
यथादित्यस्तु भूयिष्ठं रश्मिभिर्हरते जलम्।
एवं शक्तिभिरीशोऽपि दीक्षिताद्धरते [6]मलम् ॥
[7]इत्येवं ज्ञानदीक्षेयं कथिता मुक्तिदायिनी ॥५३॥

[इति रौरवे क्रियापादे ज्ञानदीक्षाविधिः अष्टपञ्चाशः पटलः]

[1] भिन्नदेहः — छ.
[2] ०धर्मसमन्वितः — छ.
[3] चाविर्भावाय — ङ, छ.
[4] यथा समुद्र — छ.
[5] 'ङ' कोशे ४९-५३ द्वितीयार्धपर्यन्तश्लोका न दृश्यन्ते।
[6] पशून् — छ.
[7] इदमर्धं 'छ' कोशे न दृश्यते।

## एकोनषष्टितमः पटलः

### [1]नित्यपूजाविधिः

[2]अथातः संप्रवक्ष्यामि शिवपूजाविधिक्रमम्।

[शिवपूजाफलम्]

ब्रह्महत्यादिदोषघ्नं सर्वज्ञानफलप्रदम्॥१॥
यजनं श्रीकरं राष्ट्रवर्धनं रिपुनाशनम्।
शिवपूजासमं पुण्यं न [3]भूतं न भविष्यति॥२॥

[4][आत्मार्थपूजा परार्थपूजा च]

यजनं द्विविधं प्रोक्तमात्मार्थं च परार्थकम्।

---

[1] अयं पटलः पुदुक्कोट्टैसंस्थानान्तर्गत 'कुडुमियामलै' ग्रामवास्तव्येन साम्बशिवशिवाचार्येण 'रौरवागमे नित्यपूजाविधिः' इति शीर्षकं दत्वा १९१० तमे संवत्सरे पश्चनदक्षेत्रस्थब्रह्मानन्दाख्यमुद्रागारे संमुद्रय प्रकाशितः।; अयं पटलः रौरवागमे प्रथमभागे दशमपटले निर्दिष्टशिवार्चनविधिपटलाद्भिन्नः। एतस्मिन्विषये **अंशुमदागमे** आत्मार्थपूजाविधिपटलः; **अचिन्त्यविश्वसादाख्ये** १२, १३; **अजिते** २०, २२; **पूर्वकामिके** ४, ५; **पूर्वकारणे** ३०, ३१; **कारणे** (टि. ३४) वासनार्चनाविधिपटलः; **किरणे** क्रियापादे २; **चिन्त्ये** ६, ७, ८; **दीप्ते** २३, २६; **मकुटे** ३, ४; **मतङ्गपारमेश्वरे** क्रियापादे ३; **मृगेन्द्रे** क्रियापादे ३; **योगजे** ६; **रौरवे** क्रियापादे ९, १०; **वीरे** ३७, ३८; **सहस्रे** ४; **सार्धत्रिशतिकालोत्तरे** ५; **सुप्रभेदे** क्रियापादे ७, ८; **सूक्ष्मे** ४, ५; **स्वायम्भुवे** ७, ८ पटला द्रष्टव्याः।

[2] 'वक्ष्ये नित्यार्चनं पुण्यं शिवदं पापनाशनम्।
योगदं ज्ञानदं चैव मोक्षदं भक्तिवर्धनम्॥
शिवपूजासमं पुण्यं न भूतं न भविष्यति।'
(**अचिन्त्यविश्वसादाख्ये** १२.१, २ पू०);
'अथातः संप्रवक्ष्यामि शिवार्चनविधिक्रमम्।
सर्वपापहरं पुण्यं सर्वरोगनिवारणम्॥
महापातकनाशार्थं सर्वयज्ञफलप्रदम्।'
(**दीप्ते** २३.१, २ पू०);
'वक्ष्ये नित्यार्चनं पुण्यं सर्वसिद्धिकरं शुभम्।
महापातकदोषघ्नं सर्वैश्वर्यप्रदायकम्॥'
(**मकुटे**, ४.१);
'अतः परं प्रवक्ष्यामि शिवपूजाविधिक्रमम्।
आयुरारोग्यजयदं सर्वयज्ञफलप्रदम्॥
ब्रह्महत्यादिदोषघ्नं पूजावृद्धिकरं परम्।
शिवपूजासमं पुण्यं न भूतं न भविष्यति॥'
(**सूक्ष्मे** ५.१, २);
एतद्विषये पुनः **अजिते** २०. प्रथमश्लोकस्तदीयटिप्पणी च द्रष्टव्ये।

[3] भूतो — ज.

[4] 'आत्मार्थं च परार्थं च पूजा द्विविधमुच्यते।
गुरुदेहे शुभे लिङ्गे स्थण्डिले स्वयमात्मनि॥
क्षणिके मण्डले तोये चात्मार्थयजनं स्मृतम्।

[1]शिष्यस्तु गुरुणादौ तु [2]दीक्षितोत्तरकालके ॥३॥
ध्यातव्यमण्डले वापि [3]लिङ्गे वा [4]प्रतिमेऽपि वा।
क्षणिके मानसे वापि यजेद्भक्त्या जपादिकम्[5] ॥४॥
आत्मार्थमिति विज्ञेयं परार्थं शृणु सुव्रत।
सर्वेषां रक्षणार्थाय [6]ग्रामे वा नगरेऽपि वा ॥५॥
पत्तने [7]कुटिके वापि खेटके राजधानिके।
अन्यदेशे मनोरम्ये स्थाने [8]धाम्नि तु कल्पिते ॥६॥
स्थापितं पूजितं लिङ्गं परार्थमिति कथ्यते।

[9][आत्मार्थपरार्थयजनेऽधिकारिणः]

[10]चातुर्वर्ण्यसमुत्पन्नैरनुलोमैस्तु दीक्षितैः ॥७॥

---

स्थापितं विधिना लिङ्गं सुरैर्वा मुनिभिर्नरैः ॥
स्वयमुद्भूतलिङ्गं च प्रतिमा चेश्वरात्मिका।
परार्थे तु समाख्याताः सर्वेषामात्मनां फलम् ॥'
(**मकुटे** ४.२-४);
एतस्मिन्विषये पुनः **अजिते** २०.२-७ श्लोकास्त-दीयटीप्पणी च द्रष्टव्याः।

[1] शिष्यस्य — ज.

[2] दीक्षितः + उत्तरकालके = दीक्षित उत्तरकालके ततः संधिरार्षः।

[3] अत्र 'दत्ते' इति पदमध्याहृत्य 'गुरुणा आदौ दत्ते लिङ्गे' इति व्याख्येयम्।

[4] प्रतिमाशब्दस्य क्लीबे प्रयोगः।

[5] 'कुर्यात्' इति शेषः।

[6] 'विप्रैरथान्यैर्वर्णैर्वा भोग्यो ग्राम उदाहृतः।
एको ग्रामणिको यत्र सभृत्यपरिचारकः ॥
कुटिकं तद्विजानीयादेकभोगः स एव तु।
जनैः परिवृतं द्रव्यक्रयविक्रयकादिभिः ॥
अनेकजातिसंयुक्तं कर्मकारैः समन्वितम्।
सर्वदैवतसंयुक्तं नगरं चाभिधीयते ॥'
'क्रयविक्रयसंयुक्तमब्धितीरसमाश्रितम् ॥
देशान्तरागतजनैर्नानाजातिभिरन्वितम्।
पट्टणं तत्समाख्यातम्'
'वने जनपदे चैव केवले शूद्रसेवितः।
कर्णकः खेटको ग्रामः क्रमात्त्रिविध ईरितः ॥
'विद्यास्थानं तु तद्वत्स्याद्बहुसेनासमन्वितम्।
राजवेश्मसमायुक्ता राजधानीति कथ्यते ॥
ग्रामादीनां समीपं यत्स्थानं कुब्जमिति स्मृतम्।
(**पूर्वकामिके** २०.४-६; ८ उ०; ९; १० उ०, ११ पू०; १४ उ०, १५);
'विप्राणां च ससत्यानां वासो ग्राम इति स्मृतः।
स एव विप्रमुख्यानामग्रहार इति स्मृतः ॥
अनेकजातिसम्बाधं नानाशिल्पिजनैर्युतम् ॥
क्रयविक्रयकैः कीर्णं सर्वदेवैः समायुतम् ॥
नगरं त्विति विख्यातं पत्तनं शृणु सांप्रतम्।
द्वीपान्तरागतद्रव्यविक्रयक्रयकैर्युतम् ॥
पत्तनं त्वब्धितीरे तु'
'शूद्रैरधिष्ठितं यत्तत्खेटकं त्विति कीर्तितम्।
तेषां समान्तरे येषां वासं कुटिकमुच्यते ॥'
'चतुरङ्गसमाकीर्णं नृपभूतिसमायुतम्।
राजवेश्मसमायुक्तं राजधानीति चोच्यते ॥'
**सुप्रभेदे** क्रियापादे (२३.३ उ०-६; ८; ९ उ०, १० पू०)

[7] वा कुटुम्बे वा — ज.

[8] धामानुकल्पयेत् — ज.

[9] 'चातुर्वर्ण्यस्य दीक्षायां विशेषाद्ब्राह्मणो गुरुः।
विप्रक्षत्रियविट्शूद्रा दीक्षिताश्च प्रवेशकाः ॥
आत्मार्थयजनं कुर्यान्न कुर्यात्तु परार्थकम्।
ऊर्ध्वशैवेन कर्तव्यमात्मार्थं च परार्थकम् ॥

आत्मार्थमर्चनं[1] योग्य[2]मयोग्यं तु परार्थकम्।
आदिशैवेन कर्तव्यमात्मार्थं च परार्थकम् ॥८॥
वेदशास्त्रेषु निपुणः [3]शास्त्रज्ञस्त्वपरिग्रहः।
[4]तन्त्रज्ञो मतिमान्प्राज्ञो दृढ[5]भक्तिर्दृढव्रतः ॥९॥
आदिशैव [6]इति प्रोक्तः स शिवब्राह्मणो गुरुः।
[7]एषु वै [8]भौतिकेष्वेव योग्यं संस्थापनार्चनम्[9] ॥१०॥
[10]भौतिकश्च सपत्नीको नैष्ठिकोऽथ विपत्निकः[11]।
[12]शैवे च [13]भौतिकः श्रेष्ठस्तदभावे[14] तु नैष्ठिकः[15] ॥११॥
लिङ्गस्थापनयोग्यत्वात्स्थापको[16] भौतिकः स्मृतः।
अर्चनं चाग्निकार्यं च नित्योत्सवमहोत्सवम्[17] ॥१२॥
स्नपनं बलिदानं च नैष्ठिकस्यापि योग्यकम्।
शैवादन्यच्च[18] बौद्धाख्यं यावत्स [19]नैष्ठिकश्चरेत् ॥१३॥
शैवान्यत् [20]पाञ्चरात्रं स्याद्बौद्धमार्हं[21]तथापरम्।
[22]गोवत्समयभेदः स्यात् क्षीरवच्छिव उच्यते[23] ॥१४॥
शिवं सर्वगतं शान्तं यजेन्नित्यं शिवव्रती[24]।

---

ऊर्ध्वशैव इति प्रोक्तः स शैवब्राह्मणो गुरुः।
निर्वाणदीक्षितानां तु आत्मार्थं च परार्थकम् ॥'
(मकुटे ४.५–७);
एतस्मिन्विषये पुनः **अजिते** २०.८, ९ श्लोकौ तदीयटिप्पणी च द्रष्टव्याः।

[१०] चातुर्वर्ण — ज.

[1] अत्र 'कर्तुं' इत्यध्याहृत्य व्याख्येयम्।

[2] ०मयोग्यस्तु — ज.

[3] शास्त्रज्ञस्य परि — ज.

[4] तन्त्रज्ञ मति — ज.

[5] ०भक्त्या दृढ — ज.

[6] मितिप्रोक्तं — ज.

[7] एषुर्वै — ज.

[8] भौतिकैरेवमयोग्यसंस्थापनार्चकम् — ज.

[9] 'आदिशैव इति प्रोक्तः स शिवब्राह्मणो गुरुः।
तेषु वै भौतिकैरेव योग्या ये स्थापनादयः ॥'
**वर्णाश्रमचन्द्रिकायां** ८० पृष्ठे 'भीमसंहितायाम्' इति निर्दिश्योद्धृतः।

[10] भौतिक — ज;
भौतिकश्च सपत्नीको नैष्ठिकोऽथ विपत्निकः।
तेषु वै भौतिकः श्रेष्ठस्तदभावे तु नैष्ठिकः ॥
**वर्णाश्रमचन्द्रिकायां** ८० पृष्ठे 'भीमसंहितायाम्' इति निर्दिश्य उद्धृतः।

[11] 'विपत्नीकः' इत्यस्यात्र 'विपत्निकः' इति ह्रस्वान्तप्रयोगो वृत्तार्थं इति भाति।

[12] शैवं च — ज.

[13] भौतिकश्रेष्ठं — ज.

[14] तथाभावे — ज.

[15] नैष्ठिकम् — ज.

[16] ०त्स्थापिते — ज.

[17] उत्सवशब्दस्यात्र क्लीबे प्रयोगः।

[18] ०दन्यं च — ज.

[19] नैष्ठिकं — ज.

[20] पञ्चरात्रं — ज.

[21] तथा परे — ज.

[22] 'गोवत्समयभेदः स्यात्क्षीरवच्छिवमुच्यते।
शिवं सर्वगतं शान्तं भजेन्नित्यं शिवाश्रमी ॥'
**ज्ञानावरणविळक्के** ४१३ पृष्ठे 'भीमसंहितायाम्' इति निर्दिश्योद्धृतः।

[23] ०च्छिवमुच्यते — ज.

[24] शिवव्रतैः — ज.

[1] [चतुर्विधपूजा तत्फलं च]

दीपान्तं वा हविष्यान्तमुत्सवान्तं [2]नटान्तकम् ॥१५॥
दीपान्तं मुक्तिदं प्रोक्तं नैवेद्यान्तं तु भुक्तिदम्।
श्रीप्रदं चोत्सवान्तं तु [3]नटनान्तं तु सौख्यदम् ॥१६॥

[श्रेष्ठादिभेदेन पूजात्रैविध्यम्]

श्रेष्ठं मध्यं कनिष्ठं च त्रिविधं तत्प्रकीर्तितम्।

[4] [संधिलक्षणम्]

[5]स्वस्थनराक्ष[6]निमिषचतुर्भागस्त्रुटिः स्मृता ॥१७॥
तद्द्वयं तु [7]लवः प्रोक्तो निमिषस्तद्द्वयं भवेत्।
निमिषाः पञ्चदश काष्ठा[8] [9]तिथिकाष्ठाः कला स्मृता[10] ॥१८॥
त्रिंशत्कला[11] मुहूर्तं च तदेव घटिकाद्वयम्।

---

[1] 'दीपान्तमर्चनं प्रोक्तं नैवेद्यान्तं तु पूजनम्।
बल्यन्तं शान्तिकं प्रोक्तं पूजेयं त्रिविधोदिता ॥'
(**पूर्वकामिके** ४.३७७);
'सावश्यं धूपदीपं स्यात्सौभाग्यं हविषान्तकम्।
बल्यन्तं शान्तिकं प्रोक्तं नृत्तान्तं पौष्टिकं तथा ॥'
(**पूर्वकारणे** ३०.४३८);
एतस्मिन्विषये पुनः **अजिते** २०.१९, २० पू० श्लोकौ तदीयटिप्पणी च द्रष्टव्याः।

[2] नटान्तकम्-नटनान्तकम्।

[3] धावनानां तु — ज.

[4] 'कालो द्विविध इत्युक्तः स्थूलः सूक्ष्म इति द्विधा।
स्थूलो लौकिकसंज्ञस्तु सूक्ष्मश्चाध्यात्मिको मतः ॥
स्थूलकाले प्रयोक्तव्यं शिवपूजादि सर्वदा।
योगिनां निमिषे वेदभागं त्रुटिरिति स्मृता ॥
लवं तद्द्वयसंख्यातं तद्द्वयं निमिषं तथा।
निमिषं तिथिसंख्यं स्यात्काष्ठा चेति प्रकीर्तिता ॥
काष्ठा च तिथिसंख्या च कला चेति प्रकीर्तिता।
कलात्रिंशन्मुहूर्तं च तथैव घटिकाद्वयम् ॥
मुनिसंख्यार्धनाडी च याममित्युच्यते बुधैः।
तत्संध्यष्टौ ह्यहोरात्रं यजनं प्रतियामके ॥
अष्टसंध्यासु यजनमुत्तमं चेति कीर्तितम्।
चतुःसंध्यासु यजनं मध्यमं चेति कीर्तितम् ॥
त्रिसंध्यास्वर्चनं कुर्यादधमं चेति कथ्यते।'
(**सूक्ष्मे**, ४.२–८ पू०);
'यजनं प्रतियामं तु उत्तमं त्विति कीर्तितम्।
उदये चैव मध्याह्ने प्रदोषे चार्धयामके ॥
यजनं मध्यमं मध्ये उदयेऽस्तमनेऽधमम्।
परार्थेष्वेषु कालेषु पूजयेत्तु विशेषतः ॥'
(**पूर्वकारणे**, ३१, ६, ७);
एतस्मिन्विषये पुनः **अजिते** २०.१०–१८ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।

[5] स्वस्था नराक्ष — ज.

[6] निमिषं चतुर्भागं तुटि स्मृतम् — ज.

[7] लयं प्रोक्तं निमिषं — ज.

[8] निमिषं पञ्चदशकाष्ठ — ज.

[9] दशकाष्ठा — ज.

[10] स्मृताः — ज.

[11] त्रिंशत्काल० — ज.

[1]सार्धास्तु नाडिकाः सप्त [2]यामः स संधिरुच्यते ॥१९॥
[3]संधयोऽष्टौ समाख्यातमहोरात्रं [4]प्रजापते ।
यजनं प्रतियामं तु श्रेष्ठमित्यभिधीयते ॥२०॥
उदये चैव [5]मध्याह्ने संध्याकालेऽर्धयामके[6] ।
[यजनं मध्यमं मध्ये उदयेऽस्तमये तथा] ॥२१॥
अर्चनं ह्यधमं प्रोक्तमिति शास्त्रस्य [7]निश्चयः ।

[8][संधिक्रमः]

[9]घटिके द्वे भवेत्स्नानं घटिकैकार्चने[10] भवेत् ॥२२॥
घटिकार्धं निवेद्यार्थं बलिदानं तु तत्समम् ।
नित्याग्नि[11]कार्ये त्वर्धं च नित्योत्सवं [12]त्रिनाडिकम् ॥२३॥
एवं संधि[13]क्रमः प्रोक्तो ह्यर्चयेद्देशिकोत्तमः ।

[14][दशविधानि पूजाङ्गानि]

[15]दशप्रकारपूजाङ्गं ज्ञात्वा पूजां समारभेत् ॥२४॥

---

[1] सार्धेन नाडिका सप्ता — ज.

[2] यामान्तत्संधि — ज.

[3] संधीराष्ट्रौ — ज.

[4] प्रजापतेः — ज.

[5] माध्यात्ने — ज.

[6] ०काले तु सायके — ज; पूर्वकारणश्लोकमनुसृत्यात्र पाठः साधितः ।

[7] निश्चयम् — ज.

[8] घटिके द्वे भवेत्स्नानं घटिकैकार्चनं भवेत् ।
घटिकार्धं तु नैवेद्यं बलिदानं तु तत्समम् ॥
नित्याग्निकार्यमर्धं तु नित्योत्सवं त्रिनाडिका ।
स्तोत्रसंगीतनृत्तेषु सप्तार्धं चुलुकोदकम् ॥
(**पूर्वकारणे** ३०.४४२ उ०–४४४ पू०);
एतद्विषये पुनः **अजिते** २०.२६३ उ०–२६७ श्लोकास्तदीयटिप्पणी, तथा **रौरवे** क्रियापादे ९.९ – १० श्लोकौ च द्रष्टव्याः ।

[9] घटिकाद्वौ — ज.

[10] ०कार्चनं — ज.

[11] ०कार्यमर्धं च — ज.

[12] त्रिनाडिका — ज.

[13] ०क्रमं प्रोक्तमर्चये — ज.

[14] पञ्चशुद्धिक्रमं वक्ष्ये शृणुष्वैवं महेश्वर ।
प्रथमं चात्मशुद्धिर्द्वितीयं स्थानशोधनम् ॥
तृतीयं द्रव्यशुद्धिः स्याच्चतुर्थं लिङ्गशोधनम् ।
पञ्चमं मन्त्रशुद्धिस्तु वक्ष्यते च पृथक् पृथक् ॥
(**मकुटे** (टि० १९) ३.५६ उ० – ५८ पू०);
एतद्विषये पुनः **रौरवे** क्रियापादे १०.२, ३ पू० तदीयटिप्पणी च द्रष्टव्याः ।

[15] दश प्रकारा यस्मिंस्तत् दशप्रकारं, पूजाया अङ्गं पूजाङ्गं दशप्रकारं पूजाङ्गं दशप्रकारपूजाङ्गं तत् ।;
'अथ आत्मशुद्धिः । सा द्विविधा पूजकजीवस्य शिवभावापादनात्मिका जीवशुद्धिरूपा, पूजकदेहस्य शिवदेहत्वापादनात्मिका देहशुद्धिरूपा च ।'
'अथ देहशुद्धिः । सा द्विविधा सूक्ष्मदेहशुद्धिः स्थूलदेहशुद्धिश्च ।'
(**शिवार्चनचन्द्रिका** पृ० २१, २२)
शिवार्चनचन्द्रिकोक्तप्रकारेण देहात्मशुद्धिविषये द्विविधत्वाङ्गीकारे पूजायां दशाङ्गानि सम्यगुक्तानि स्युः ।

प्रथमं काय[1]शुद्धिः स्यादात्मशुद्धिरतः[2] परम्।
पुष्प[3]शुद्धिर्यथामन्त्रं स्थानशुद्धिस्तथैव[4] च ॥२५॥
द्रव्य[5]शुद्धिस्तथा मन्त्रलिङ्गशुद्धिरतः[6] परम्।
पीठ[7]शुद्धिस्तथैवं स्यादासनं कल्पयेत्क्रमात् ॥२६॥
एवं दशप्रकारेण पूजयेत्परमेश्वरम्।

[8][कायशुद्धिरात्मशुद्धिश्च]

शौचमाचमनं स्नानं तर्पणं विधिपूर्वकम् ॥२७॥
कृत्वा प्रविश्य [9]हर्म्यं तु त्रिःकृत्वा तु प्रदक्षिणम्।
उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः ॥२८॥
दशदिग्बन्धनं पूर्वं कृत्वास्त्रेणैव देशिकः।
करपूजा [10]प्रकर्तव्या गन्धपुष्पादिना पुरः ॥२९॥
दहनाप्लावनं कुर्यान्नाडिशोधनकर्मभिः।
प्राणो वै त्रिः [11]प्रकर्तव्यः प्राणायामेन सुव्रत ॥३०॥

[12][करन्यासः]

करन्यासं ततः कुर्याद्देहन्यासमतः परम्।

---

[1] ०शुद्धि — ज.
[2] ०शुद्धिमतः — ज.
[3] ०शुद्धि यथा० — ज.
[4] ०शुद्धि तथैव — ज.
[5] ०शुद्धि तथा मन्त्रं -- ज.
[6] ०शुद्धिमतः — ज.
[7] ०शुद्धि तदेवं — ज.
[8] 'प्रातरुत्थाय मनसा शिवं संचिन्तयेद्बुधः।
तद्ग्रामाद्बहिर्निर्गत्य विण्मूत्रं च विसर्जयेत् ॥
शौचमाचमनं दन्ततालुसंशोधनं कुरु।
ऋग्वेदादिकमन्त्रेण स्नानं कृत्वा विचक्षणः ॥
संशुद्धवस्त्रखण्डेन मार्जेद्देहगतं जलम्।
धौतवस्त्रेण संवेष्टय चार्द्रवस्त्रं परित्यजेत् ॥
ततः संध्यामुपासीत क्रमाद्वैदिकशैवकम्।
ततो देवालयं गत्वा प्रदक्षिणमथाचरेत् ॥
पादप्रक्षालनं कृत्वा द्वारदेवान्समर्चयेत्।
मण्डपं तु प्रविश्याथ रुचिरासनसंस्थितः ॥
भस्म तु वामहस्ते तु दक्षेणैवाभिमन्त्रयेत्।
असुरांशं परित्यज्य दिग्बन्धं चास्त्रमन्त्रतः ॥
दक्षहस्तजलं पीत्वा अङ्गुल्या चैव मर्दयेत्।
शिरोललाटकर्णे तु कण्ठे च हृदयेऽपि च ॥
बाह्वोर्नाभ्यां परस्ताच्च भस्मन्यासं समाचरेत्।
रुद्रो विष्णुर्विरिञ्चिश्च ऊर्ध्वाधस्तात्त्रिरेखिकाः ॥
दिग्बन्धनं ततः कृत्वा प्राणायामत्रयं कुरु।
भूतशुद्धिं ततः कृत्वा पञ्चग्रन्थिं तु छेदयेत् ॥
मूर्धादिपादपर्यन्तममृताप्लावनं नयेत्।
करन्यासं ततः कुर्यादङ्गुल्या न्यासमाचरेत् ॥
अङ्गन्यासं ततः कुर्यादष्टत्रिंशत्कला न्यसेत्।
हृत्पद्मे चार्चयेद्देवं नाभौ होमं समाचरेत् ॥
भ्रूमध्ये ध्यायेद्देवमात्मशुद्धिरिति स्मृता।'
(**सूक्ष्मे** ५.५ उ०–१६);
एतद्विषये पुनः **अजिते** २०.३३–१०८ पू० श्लोकास्तदीयटिप्पणी; **रौरवे** क्रियापादे १० ३ उ०–६ पू० श्लोकाश्च द्रष्टव्याः।
[9] हर्म्ये तु — ज.
[10] प्रकर्तव्यं — ज.
[11] प्रकर्तव्यं — ज.
[12] 'शोधयेदस्त्रमन्त्रेण तलिकौ हस्तपृष्ठकौ।

गृहस्थः सृष्टिमार्गेण [1]ब्रह्मचारी स्थितिक्रमात् ॥३१॥
वानप्रस्थयतीनां[2] च संहारन्यास उच्यते[3]।
ईशानादीनि सद्यान्तमङ्गुष्ठादिक्रमेण तु ॥३२॥
कनिष्ठान्तं[4] न्यसेद्धीमान्सृष्टिन्यास उदाहृतः[5]।
मध्यादि [6]तर्जन्यन्तं [च] स्थितिन्यास उदाहृतः[7] ॥३३॥
कनिष्ठाद्यङ्गुष्ठान्तं च सद्यादीनि क्रमान्न्यसेत्।
संहारन्यास एवोक्तः[8] शिवे तु[9] परमात्मनि ॥३४॥
[10]अङ्गुल्या तु न्यसेत्पर्व तर्जन्याङ्गुष्ठके न्यसेत्।
हृदयाद्यस्त्रपर्यन्तं मध्यमादि तु[11] विन्यसेत् ॥३५॥
[12]तलयोस्तर्जन्यन्तं च [13]सर्वेषु विन्यसेद्बुधः।
[14]तलयोर्विन्यसेन्नेत्रमस्त्रं [15]तर्जनि विन्यसेत् ॥३६॥
शिवमन्त्रं न्यसेद्धीमान्करशाखासु पर्वसु।
कर[16]न्यासस्त्वयं प्रोक्तो ह्यङ्गन्यासमथ शृणु ॥३७॥

### [17][अङ्गन्यासः]

[18]मूर्धादिपादपर्यन्तं सृष्टिन्यास उदाहृतः[19]।

---

अस्त्रेण हुंफडन्तेन द्विर्वामं शोधयेत्करम् ॥
तेन मन्त्रेण सव्यं तु ऊर्ध्वाधः शोधयेत्त्रिधा।
गन्धलिप्तकरौ कृत्वा शिवहस्तप्रकल्पनम् ॥'
'अङ्गुष्ठादि कनिष्ठान्तं सृष्टिन्यासमुदाहृतम्।
कनिष्ठाद्यङ्गुष्ठकान्तं यत्संहारन्यासमुच्यते ॥
ईशादि सद्यमन्त्रान्तं सृष्टिन्यासमुदाहृतम्।
सद्यादीशानपर्यन्तं संहारन्यासमुच्यते ॥
दक्षिणाङ्गुष्ठमादि स्यात्कनिष्ठादीतरे ततः।
दशबीजं न्यसेद्धीमान्स्थितिन्यासमतः परम् ॥
तर्जन्यन्तं तु मध्यादि क्रमादङ्गानि विन्यसेत्।
न्यसेद्धस्ततले नेत्रं तर्जन्यामस्त्रकं न्यसेत् ॥
शिवाङ्गान्येवमेवं स्याच्छिवं पर्वणि पर्वणि।
गृहस्थः सृष्टिमार्गेण करन्यासं तु कारयेत् ॥
वानप्रस्थयतीनां तु संहारक्रममेव हि।
अपत्नीकवनस्थानां संहारन्यासमुच्यते ॥
नैष्ठिके तु स्थितिन्यासं सर्वकार्येषु पूजितम्।
करन्यासं समाख्यातम्'
(**पूर्वकारणे**, ३०, १२२, १२३; १२६–१३२);
एतद्विषये पुनः **अजिते** २०.७३ उ०–८०पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।

[1] ब्रह्मचारिस्थितिक्रमम् — ज.
[2] यदीनां — ज.
[3] ०न्यासमुच्यते — ज.
[4] कनिष्ठादि० — ज.
[5] ०न्यासमुदाहृतम् — ज.
[6] तर्जन्यान्तं — ज.
[7] ०न्यासमुदाहृतम् — ज.
[8] ०न्यासमेवोक्तं — ज.
[9] शिवेन — ज.
[10] 'अङ्गुलिः–अङ्गुष्ठः इत्युणादिकोशः' इति **शब्दकल्पद्रुमः**।; अङ्गुलिद्विन्यसेपर्वान् — ज.
[11] मध्यमादीनि — ज.
[12] स्थलयोस्तर्जन्योश्चैव — ज.
[13] सर्वेषां — ज.
[14] स्थलयोर्विन्यसे नेत्रमस्त्र० — ज.
[15] अत्र तर्जन्यां विन्यसेदिति भाव्यम्।
[16] ०न्यासमिदं प्रोक्तमङ्ग० — ज.
[17] 'अङ्गन्यासमथ शृणु।

[1]हृदादिपादपर्यन्तं स्थितिन्यास उदाहृतः[2] ॥३८॥
[3]पादादिमूर्धपर्यन्तं संहारन्यास उच्यते[4]।
एवं न्यासत्रयं कृत्वा [5]स्थावरे जङ्गमे बुधः ॥३९॥
स्थावरं लिङ्गमित्याहुर्जङ्गमं तस्य [6]पूजकः।

[7][अन्तर्यागः]

अन्तर्यागमतः कुर्यादर्चयेदात्मदैवतम् ॥४०॥
हृत्पद्मकर्णिकामध्ये ओंकारमयमीश्वरम्।
[8]ध्यायेद्यजनसहितं सदाकालं यजेद्बुधः ॥४१॥
चिन्तयेन्मनसा पूर्वं [9]गुणांस्तत्र गुणत्रयम्।
[10]ततः प्रच्छाद्य च तमो [11]रजः सत्त्वेन साधयेत् ॥४२॥
[12]ध्यायेत्त्रिमण्डलं पूर्वं [13]धूम्रं रक्तं सितं क्रमात्।

---

मूर्धादिः सृष्टिरेवं स्यात्पादादिः संहृतिर्भवेत् ॥
नाभ्यादि हृदयान्तं तु स्थितिन्यासं प्रकीर्तितम्'।
'मूर्ध्न्यानने च हृदये गुह्ये वै पादयोः क्रमात्।
ब्रह्माणि सृष्टिमार्गेण ईशानादीनि विन्यसेत् ॥
पादादारभ्य सद्यादि संहारन्यासकर्मणि।
नाभ्यादि हृदयान्तं तु स्थितिन्यासं प्रकीर्तितम् ॥'
(**सुप्रभेदे** क्रियापादे ८.४७ उ०, ४८; ५३ उ० –५५ पू०);

एतस्मिन्विषये पुनः **अजिते** २०.८१–८४ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।

[18] मूर्ध्नादि० — ज.

[19] ०न्यासमुदाहृतम् — ज.

[1] पादादि मूर्ध्निपर्यन्तं — ज.

[2] ०न्यासमुदाहृतम् — ज.

[3] हृदयादिपादपर्यन्त — ज.

[4] ०न्यासमुच्यते — ज.

[5] 'लिङ्गभेदक्रमं वक्ष्ये विशेषात्तु यथाक्रमम्।
लिङ्गद्वयमिति प्रोक्तं चलं चाचलमेव च ॥
चललिङ्गे सदावासं पूजयेत्परमेश्वरम्।
अचलं लिङ्गमेवं तु मन्त्रसंस्कारपूर्वकम् ॥
मन्त्रसंस्कारहीने तु लिङ्गमाकृतिमात्रकम्।
चललिङ्गविशेषस्तु गुरुर्देवो महेश्वरः ॥''
स्थावरं जङ्गमं चैव द्विविधं लिङ्गमुच्यते।
जङ्गमस्यावमानेन स्थावरं निष्फलं भवेत् ॥'
(**मकुटे** ४.१०५ उ०–१०९ पू०)

[6] पूजकम् — ज.

[7] उत्सृज्य प्राकृतं भावं शिवोऽहमिति भावयेत्।
एवं कृत्वा विशेषेणाप्यन्तर्यागं समाचरेत् ॥
नाभिचक्रं समाश्रित्य कारयेद्वह्निमण्डलम्।
हृदये धारयेत्सोमं भ्रूमध्ये रविमण्डलम् ॥
हृदये यजनं कुर्याद्धोमं नाभौ प्रकल्पयेत्।
तथेश्वरं तु भ्रूमध्ये ध्यायेत्सर्वगतं प्रभुम् ॥
पञ्चावरणमार्गेण पूजयित्वा विशेषतः।
हृत्पद्मे चार्चयेन्नित्यं त्रिकालं वा द्विकालकम् ॥
अथवाप्येककालं वा संयजेन्मानसेन तु।
आत्मशुद्धिरिति प्रोक्ता'
(**पूर्वकारणे** ३०.१३७–१४१);

एतद्विषये पुनः **अजिते** २०.११० उ०, १११ पू० श्लोकस्तदीयटिप्पणी, **रौरवे** क्रियापादे १०.३ उ०–६ पू० श्लोकाश्च द्रष्टव्याः।

[8] ध्यानं यजन० — ज.

[9] गुणा तत्र — ज.

[10] तं पृश्चाद्य रजसा — ज.

[11] रससतेन — ज.

[12] 'ध्यायेत्त्रिमण्डलं पूर्वं धूम्रं रक्तं सितं क्रमात्।
द्वादशाङ्गुलविस्तीर्णं शुक्लं विकसितं शुभम् ॥

सत्त्वोपरि[1] गुणातीतं पुरुषं पञ्चविंशकम् ॥४३॥
ऐश्वर्यपङ्कजं[2] नित्यं पुरुषोपरि संस्थितम् ।
द्वादशाङ्गुलविस्तीर्णं शुक्लं विकसितं शुभम् ॥४४॥
नालमष्टाङ्गुलं ज्ञेयं [3]नाभिकन्दसमुद्भवम् ।
पद्मपत्राष्टकं ज्ञेयमणिमादिगुणाष्टकम् ॥४५॥
कर्णिका[4]केसरं ज्ञानं नालं वैराग्यमेव हि ।
पार्थिवाण्ड[5]मधःकन्दमिति पद्मं विचिन्तयेत् ॥४६॥
[6]धर्मज्ञाने च वैराग्यमैश्वर्यादि[7] समन्वितम् ।
ध्यात्वा पद्मासनं ह्येवं सर्वपापहरं परम् ॥४७॥
तत्पद्मकर्णिकामध्ये शुद्धदीपसमाकृति ।
[8]आवृतेषु दलेष्वष्टौ ओं शिवाय नमो नमः ॥४८॥
इन्द्रादीशानपर्यन्तं न्यसेदष्टाक्षरं क्रमात् ॥
[9]रुद्ररूपं वरं व्यक्तमानन्तमचलप्रभम् ॥४९॥
युगाङ्गुलप्रमाणेन [10]नित्यं निष्कलदीपवत् ।
अर्चयेदष्टपुष्पैस्तु शिवमोंकाररूपिणम् ॥५०॥

[11][अष्टपुष्पाणि]

अहिंसा प्रथमं पुष्पं क्षमापुष्पं द्वितीयकम् ।

---

नालमष्टाङ्गुलं ज्ञेयं नाभीसङ्गसमुद्भवम् ।
पद्मपत्राष्टकं ज्ञेयमणिमादिगुणाष्टकम् ॥
कर्णिकाकेसरं ज्ञानं नालं वैराग्यमेव हि ।
पार्थिवाण्डमधःकन्दमिति पद्मं विचिन्तयेत् ॥
तत्पद्मकर्णिकामध्ये शुद्धदीपसमाकृतिम् ।
आवृतेषु दलेष्वष्टौ ओं शिवाय नमो नमः ॥
इन्द्रईशान[इन्द्रादीशान ?]पर्यन्तं न्यसेदष्टाक्षरं क्रमात् ।
रुद्ररूपवरं व्यक्तमानन्तमचलप्रभम् ।
युगाङ्गुलप्रमाणेन नित्यं निष्कलदीपवत् ॥'
(**कारणे** (टि. ३४) वासनार्चनाविधिपटले २०४–२०८);
'कदलीपुष्पसंकाशं हृदयं सर्वदेहिनाम् ।
तस्य मध्ये स्थितं पद्ममष्टपत्रं सकर्णिकम् ॥
द्वादशाङ्गुलविस्तीर्णं शुद्धं विकसितं सितम् ।
नालमष्टाङ्गुलं तस्य नाभिकन्दसमुद्भवम् ॥
पद्मपत्राष्टकं ज्ञेयमणिमादिगुणाष्टकम् ।
कर्णिकाकेसरं ज्ञानं नालं वैराज्ञ[वैराग्य ?]मुत्तमम् ॥
शिवधर्मं च तत्कन्दमिति पद्मं विचिन्तयेत् ।
मन्त्रसिंहासनासीनं मन्त्रसंनद्धविग्रहम् ॥
मन्त्रपूजासु संपन्नो यजेत्तत्र महेश्वरम् ।'
(**सकलागमसारसंग्रहे** ६४, ६५ पृष्ठयोः 'निश्वासकारिकायाम्' इति निर्दिश्योद्धृताः ।)

[13] धूमभ्रान्तं — ज.

[1] सत्तोपरि — ज.

[2] ०पङ्कजे — ज.

[3] नाभिसङ्ग० — ज.

[4] ०केसरज्ञानं — ज.

[5] ०मथस्कन्दमिति — ज.

[6] धर्म ज्ञानं च — ज.

[7] अत्र 'एभिः' इति पदमध्याहृत्य व्याख्येयम् ।

[8] आवृतेऽष्टदले स्पृष्टौ — ज.

[9] रुद्रा उपवरव्यक्तमानन्दमचलं प्रभः – ज.

तृतीयं तु दयापुष्पं चतुर्थं क्रोधवर्जितम्[१] ॥५१॥
पञ्चमं [२]कृतिमात्सर्यं षष्ठमं भावपुष्पकम् ।
सप्तमं ध्यानपुष्पं च [३]समाधिश्चाष्टपुष्पकम् ॥५२॥
[४]सर्वोपचारान् मनसा ध्यात्वा [५]तं पूजयेच्छिवम् ।
[६]प्राकृतं भावमुत्सृज्य शिवोऽहमिति भावयेत् ॥५३॥
आत्म[७]शुद्धिरियं प्रोक्ता; पुष्पशुद्धिमथ शृणु ।

[८][पुष्पशुद्धिः, तत्र सात्त्विकपुष्पाणि]

**श्वेतं रक्तं तथा पीतं कृष्णं चेति चतुर्विधम् ॥५४॥**
**द्रोणमन्दारपुन्नागं शुक्लार्कं श्वेतपङ्कजम् ।**
**नन्द्यावर्तं श्रियावर्तं पट्टिका बहुकर्णिका ॥५५॥**
**मालती [९]शतपत्री च वकुलं [१०]कुरवं तथा ।**

---

[१०] नित्यनिष्कल० — ज.

[११] 'अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः ।
सर्वभूतदयापुष्पं क्षमापुष्पं विशेषतः ॥
ज्ञानपुष्पं तपःपुष्पं ध्यानपुष्पं तथैव च ।
सत्यमष्टदलं पुष्पं रुद्रप्रीतिकरं भवेत् ॥'
(**कारणे** (टि. ३४) वासनार्चनाविधिपटले २१३, २१४);
'अहिंसा प्रथमं पुष्पमिन्द्रियाणां तु निग्रहः ।
क्षान्तिपुष्पं दयापुष्पं ज्ञानपुष्पमतः परम् ॥
तपःपुष्पं सत्यपुष्पं भावपुष्पं तथाष्टमम् ॥'
(**शिवपूजास्तवव्याख्यायाम्** पृ० ३३);
'अहिंसेन्द्रियनिग्रहक्षमादानज्ञानतपस्सत्यभाव-रूपैरष्टभिः पुष्पैरभ्यर्चयेत् ।'
(**शिवार्चनचन्द्रिकायाम्** पृ० २९)

[१] वर्जितम्—वर्जनम् भावे क्तप्रत्ययः ।

[२] कृतिः—कर्म; काम्यकर्मणि मात्सर्यमिति भाति ।

[३] समाधिं चाष्ट० — ज.

[४] सर्वोपचारं — ज.

[५] तत्पूजये० — ज.

[६] प्रकृतिं — ज.

[७] ०शुद्धिमिदं प्रोक्तं — ज.

[८] 'पुष्पाणां विधिरुच्यते ।
श्वेतं रक्तं तथा पीतं कृष्णं चेति चतुर्विधम् ॥
श्वेतपद्मं च पुन्नागं शङ्खपुष्पं च मल्लिका ॥
नन्द्यावर्तं श्रियावर्तं मन्दारं बहुकर्णिका ॥
द्विकर्णी कुरवं जाती लक्ष्मी च वकुलं तथा ॥
श्वेतार्कं मालती द्रोणमतसी श्वेतलोध्रकम् ।
विषकासीसकुसुमं भद्रं चैव महा तथा ॥
एतानि श्वेतपुष्पाणि सात्त्विकानि विनिर्दिशेत् ।
(**पूर्वकारणे** ३१.५५–५८);
'नन्द्यावर्तं श्रियावर्तं मन्दारं शतपत्रिका ।
श्वेतार्कं मालती चैव पुन्नागं कुरवं तथा ॥
एवमादीनि पुष्पाणि सात्त्विकानि विनिर्दिशेत् ।'
(**दीप्ते** २६, १३, १४ पू०);
'द्रोणं च श्वेतपद्मं च जाती च बहुकर्णिका ।
नन्द्यावर्तं श्रियावर्तं मन्दारं शतपत्रिकम् ॥
श्वेतार्कं मालती चैव पुन्नागं कुरव तथा ।
एवमादीनि पुष्पाणि सात्त्विकानि समादिशेत् ॥'
(**सुप्रभेदे** क्रियापादे ७.१२, १३);
'द्रोणं च श्वेतपद्मं च जाती च बहुपर्णिका ।
नन्द्यावर्तं श्रियावर्तं मन्दारं शतपत्रिका ॥
श्वेतार्कं मालती बिल्वं पुन्नागं कुरवं तथा ।
एवमादीनि पुष्पाणि सात्त्विकानि विनिर्दिशेत् ॥'
(**सकलगमसारसंग्रहे** पृ० ९१)

[९] शतपत्रा — ज.

[१०] 'कुरवकम्' इत्यत्र वृत्तार्थं कुरवमिति प्रयुक्तमिति भाति ।

[1] द्विकर्णिबकपुष्पं च कुशपुष्पं कदम्बकम् ॥५६॥
[2] लक्ष्मीपुष्पं महाद्रोणं [3] भद्री चैव महा तथा।
[4] अतसी जातिपुष्पं च काशपुष्पं [5] च लोध्रकम् ॥५७॥
[6] विषकासीसकुसुमं [7] करवीरं तथैव च।
सुश्वेता [8] गिरिकर्णी च सात्त्विकानि विनिर्दिशेत् ॥५८॥

[9][राजसानि पुष्पाणि]

करवीरं रक्तपद्मं पाटली बृहती तथा।
रक्तोत्पल च [10] धुत्तूरं पट्टिकाषाढमेव च ॥५९॥
रक्ताशोकं च मन्दारं वैजिका मौसली तथा।
व्याघ्री च रक्तागस्त्यं च रक्तार्कं च कदम्बकम् ॥६०॥
भूपाटली च लक्ष्मी च राजसानि विनिर्दिशेत्।

[11][मिश्रितानि पुष्पाणि]

चम्पकं करवीरं च कर्णिकारं च [12] धुत्तुरम् ॥६१॥
मौसली केतकी चैव [13] शौनक्यं च शमी तथा।

---

[1] द्विकर्णबक० — ज.
[2] लक्ष्मिपुष्पं — ज.
[3] अत्र 'महाभद्री तथैव च' इति पाठश्चेत्सुष्ठु।
[4] अतसिजाति० — ज.
[5] कदम्बकम् — ज.
[6] विषकासीच — ज.
[7] भद्राश्चैव महा तथा — ज.
[8] गिरिकर्णि — ज.
[9] 'रक्तपद्मं पलाशं च रक्तोत्पलं च पाटली।
मौसली चैव धुत्तूरं बृहती करवीरकम् ॥
व्याघ्री च रक्तमन्दारं पट्टिका वैजिका तथा।
रक्तान्येतानि पुष्पाणि राजसानि विनिर्दिशेत् ॥'
(**पूर्वकारणे** ३१. ५९, ६०);
'रक्तोत्पलं तथा पद्मं बृहती धुत्तूरपाटलम्।
एवमादीनि पुष्पाणि राजसानि विनिर्दिशेत् ॥'
(**दीप्ते** २६.१४ उ०, १५ पू०);
'रक्तोत्पलं तथा पद्मं बृहती धुत्तूरकं तथा।
पाटली रक्तपुष्पाणि राजसानि विनिर्दिशेत् ॥'
(**सुप्रभेदे** क्रियापादे ७.१४);
'रक्तोत्पलं तथा पद्मं धुत्तूरं बृहतीद्वयम्।
पलाशपाटलादीनि राजसानि विनिर्दिशेत् ॥'
(**सकलागमसारसंग्रहे** पृ० ९१)
[10] धुर्धूरं — ज.
[11] 'शौनक्यं कर्णिकारं च चम्पकं हेमधुत्तुरम्।
आरग्वधं च कोरण्डं शैर्या च गिरिकर्णिका ॥
एतानि मिश्रपुष्पाणि'
(**पूर्वकारणे** ३१.६१, ६२ पू०);
'कर्णिकारं च धुत्तूरं सरलारग्वधं तथा।
एवमादीनि पीतानि मिश्रकाणि विनिर्दिशेत् ॥'
(**सुप्रभेदे** क्रियापादे ७.१५)
[12] धुर्धुरम् — ज.
[13] शौनाख्यं — ज.

शङ्खिनी चैव कोरण्डं [1]कुसुम्भकुसुमानि च ॥६२॥
महेशाना [2]भृङ्गमिति मिश्रितानि विनिर्दिशेत् ।

[3][तामसानि पुष्पाणि]

नीलोत्पलं च [4]सिन्धु स्याद्गिरिकर्णी च[5] वैष्णवी ॥६३॥

[6][सात्त्विकादिपुष्पफलम्]

तामसानि; समाख्यातं सात्त्विकं मोक्षकारणम् ।
राजसं श्रीप्रदं ज्ञेयं [7]मिश्रितं द्वयसिद्धिदम् ॥६४॥
तामसं पुष्टिदं ज्ञेयं पुत्रपौत्रसमृद्धिदम् ।

[8][पत्राणि]

शमी बिल्वमपामार्गं [9]कुशं दूर्वा सहा तथा ॥६५॥
नागनन्दि रुद्रनन्दि द्रोणपत्रद्वयं तथा ।
तुलसी [10]चक्रबिल्वं च [11]लक्ष्मीश्चन्द्रपतिस्तथा ॥६६॥
भूपद्मं चूतपत्रं च हरिताङ्कोलपत्रकम् ।
मल्लिका करवीरं च रविपत्रद्वयं तथा ॥६७॥
जम्बू[12]पत्रं कदम्बं च जातिपत्रं तथैव च ।
मुनिपत्रद्वयं चैव कदलीपत्रमेव च ॥६८॥
[13]आषाढं कृष्णतुलसी नीलकर्णी [14]हली तथा ।
गिरिकर्णिद्वयं चैव [15]दान्तं च हरिबेरकम् ॥६९॥
[16]कोरण्डं सैर्यकं चैव [17]भद्रवल्ली तथैव च ।

---

[1] कुसुम्ब — ज.
[2] भृङ्ग इत्येते — ज.
[3] 'कृष्णवर्णानि पुष्पाणि तामसानि विनिर्दिशेत् ।'
(दीप्ते २६.१७ पू०)
[4] शैधी स्या० — ज.
[5] ०कर्ण च — ज.
[6] 'मोक्षदं सात्त्विकं चैव पौष्टिकं राजसं तथा ॥
मिश्रपुष्पाणि सिद्ध्यर्थं पत्रं पुत्रविवर्धनम् ॥'
(**पूर्वकारणे** ३१.६२ उ०, ६३ पू०)
[7] मिश्रिका — ज.
[8] बिल्वपत्रं तपस्वी च सहपत्री च धातकी ।
अपामार्गं कुशं दूर्वा पञ्चबिल्वं शमी तथा ॥
तुलसी चम्पकं चैव जम्बुकं नागनन्दिका ।
एकपत्रारविन्दं च विष्णुक्रान्तिस्तथैव च ॥'
'पत्रजातिषु सर्वासु बिल्वपत्रं विशिष्यते ।'
(**पूर्वकारणे** ३१.६३ उ०–६५ पू०, ६६ उ०);
एतस्मिन्विषये पुनः **अजिते** २२.४३ उ०–४७ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।
[9] कुशदूर्वा — ज.
[10] चक्रबिल्वी – ज.
[11] लक्ष्मी चन्द्रपती तथा — ज.
[12] ०पत्रकदम्बं — ज.
[13] आषाढकृष्ण० — ज.
[14] सळितथा — ज.
[15] दानन्दं च थिरिबेरिका — ज.
[16] कोरण्डशर्यकं — ज.
[17] भद्रवल्लि — ज.

पत्रजातिषु [1]सर्वासु बिल्वपत्रं विशिष्यते ॥७०॥
बिल्व[2]पत्रस्य चालाभे तस्य मूलेन पूजयेत् ।

[3][निर्माल्यदोषहीनं पुष्पम्]

पुष्पजातिषु [4]सर्वासु करवीरं विशिष्यते ॥७१॥
तस्य मध्ये [5]स्थितो देवो लिङ्गपीठप्रकारतः ।
तत्पुष्पं हेमपुष्पं च [6]पूजयेद् वत्सरायुतम् ॥७२॥
निर्माल्यं न भवेत्तत्र इति शास्त्रस्य [7]निश्चयः ।
पूजान्ते तु समादाय क्षालयेद्धृदयेन तु ॥७३॥
प्रोक्षयेत्पुरुषेणैव पूजयेत्तु पुनः पुनः ।

[8][वर्ज्यानि पुष्पाणि]

करञ्जं [9]बन्धुकुसुमं [10]विभीतं चैव किंशुकम् ॥७४॥
महालक्ष्मि मधूकं च शिरीषं [11]जपदाडिमम् ।
कुमुदं माधवी चैव [12]त्रुटिमन्दारधानिकम् ॥७५॥

---

[1] सर्वेषां — ज.
[2] ०पत्रालाभे तु — ज.
[3] पुष्पजातिषु सर्वासु करवीरं विशिष्यते ।
तत्पुष्पं हेमपुष्पं च निर्माल्यं न भवेत्सदा ॥'
(**पूर्वकारणे**, ३१. ६७);
'अर्कपुष्पसहस्रेभ्यः करवीरं विशिष्यते ।
तस्य मध्यस्थितो देवो लिङ्गपीठप्रकारतः ॥
तत्पुष्पं हेमपुष्पं च पूजायां वत्सरेऽयुतम् ।
निर्माल्यं न भवेत्तस्य इति शास्त्रस्य निश्चितम् ॥'
(**सकालागमसारसंग्रहे** पृ० ८९)
[4] सर्वेषां — ज.
[5] स्थितं देवं लिङ्गपीठं — ज.
[6] पूजायां वत्सरैर्युतम् — ज.
[7] निश्चयम् — ज.
[8] 'अतिपक्वमपक्वं च मुकुलं च विसर्जयेत् ।
केशकीटोपविद्धं च लूतासूत्रवृतानि च ॥
स्वयंपतितपुष्पाणि संचितान्यपि वस्त्रके ।
एरण्डपत्रकानीतं करानीतमथापि वा ॥
अशुचिस्थानकानीतं रोगार्तापहृतान्यपि ।
एकाहोषितपुष्पाणि वर्जयेत्तु विशेषतः ॥'
(**पूर्वकारणे**, ३१, ७४–७६);
'केतकी माधवी चैव कुन्दयूथी मदन्तिका ।
शिरीषसर्जबन्धूककुसुमानि विवर्जयेत् ॥'
कीटकेशोपविद्धानि शीतपर्युषितानि च ।
स्वयंपतितपुष्पाणि त्यजेदुपहतानि च ॥
मुकुलैर्नार्चयेत्'
(**शिवधर्मे** पूर्वे (टि. ३२) पृ० ३२, ३३);
एतस्मिन्विषये पुनः **अजिते** २२.५० उ०–
५३ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।
[9] बद्धकुसुमं — ज.
[10] विहितं चैव किंशुकः — ज.
[11] 'जपा'इत्यस्य 'जप' इति ह्रस्वान्ततया प्रयोगो वृत्तार्थ इति भाति ।
[12] धृटिमन्दारधानिका — ज.

[1]मदयन्ती च शिग्रुश्च पुष्पाण्येतानि वर्जयेत्।
अपक्वमतिपक्वं च [2]लूतसूत्रावृतानि च ॥७६॥
[3]केशकीटापविद्धानि [4]दुर्देशे संस्थितानि च।
एकाहोषितपुष्पाणि संचितान्यपि वस्त्रके ॥७७॥
स्वयंपतितपुष्पाणि वर्जयेत्तत्प्रयत्नतः।

[5][प्रातरादिकालेषु देयानि पुष्पाणि]

श्वेताम्बुजं च शुक्लार्कमागस्त्यं[6] चैव मालतीम्[7] ॥७८॥
नन्द्यावर्तं श्रियावर्तं पुन्नागं चैव पट्टिकाम्[8]।
[9]द्विकर्णीं चैव लक्ष्मीं च वकुलं [10]पाटलीं तथा ॥७९॥
[11]वैजिकं च पलाशं च अशोकं [12]शङ्खिनीं तथा।
कदलीकुसुमं चैव प्रातः[13]काले तु दापयेत् ॥८०॥
करवीरं रक्तपद्मं पाटली बृहती तथा।
द्रोणपुष्पद्वयं चैव उत्पलं पद्मपुष्पकम् ॥८१॥
[14]धुत्तूरं चैव कोरण्डं [15]मध्याह्ने तु प्रदापयेत्।
[16]भद्री चैव [17]महाभद्री मल्लिका मालती तथा ॥८२॥
शङ्खिनीपुष्पकुरवं [18]शमीपुष्पं च मौसली[19]।
अतसी बहुकर्णी च [20]दापयेत्तु प्रदोषके ॥८३॥

---

[1] मदयाक्षीं च शिश्रू च — ज.
[2] वालुसूत्रविधानि च — ज.
[3] केशक्रीडोपतीर्थानि — ज.
[4] दुर्दिशे — ज.
[5] 'नन्द्यावर्तं श्रियावर्तं श्वेतार्कं श्वेतपङ्कजम्।
पुन्नागं पट्टिकाषाढं मालतीमुदये ददेत् ॥
पङ्कजं बृहतीव्याघ्रीव्याघातं करवीरयुक्।
उत्पलं पाटलीद्रोणं मध्याह्ने तु प्रदापयेत् ॥
चम्पकं वैजिकापत्रीधुत्तूरं बहुकर्णिकाम्।
मालतीं मल्लिकां चैव दापयेत्तु प्रदोषके ॥
जातीनीलोत्पलं चैव बिल्वपत्रं कदम्बकम्।
द्विकर्णीं चैव भद्रं च अर्धयामे प्रदापयेत् ॥
अन्यपुष्पाणि सर्वाणि अन्यसंध्यासु दापयेत्।'
(**पूर्वकारणे** ३१. ६९ उ०–७३);
एतस्मिन्विषये पुनः **अजिते** २२. ४८–५० पू० श्लोकाः, **रौरवे** क्रियापादे ९.६, ७ पू० श्लोकास्तदीयटिप्पण्यश्च द्रष्टव्याः।
[6] शुक्लार्कमरगस्त्वं — ज.
[7] मालति — ज.
[8] पट्टिका — ज.
[9] द्विकर्णि चैव लक्ष्मी — ज.
[10] पाटली — ज.
[11] वैदिका — ज.
[12] शङ्कनी — ज.
[13] काले ददापयेत् — ज.
[14] धुर्धूरं — ज.
[15] माध्याह्ने — ज.
[16] भद्रि — ज.
[17] महाभद्रि — ज.
[18] शमि — ज.
[19] मौसलि — ज.
[20] अत्र 'एतानि पुष्पाणि' इत्यध्याहृत्य व्याख्येयम्।

जातिनीलोत्पलं चैव दान्तं बिल्वस्य पत्रकम्।
केतकीं पृथिवीपद्ममर्धयामे प्रदापयेत्॥८४॥
उक्तानि सर्वपत्राणि सर्वसंध्यासु दापयेत्।
[1]उत्तमारामपुष्पाणि मध्यमं वनपुष्पकम्॥८५॥
अधमं चैव [2]विक्रीतं [3]याचितं निष्फलं भवेत्।
उग्रगन्धं च निर्गन्धं पत्रपुष्पं विसर्जयेत्॥८६॥
पुष्प[4]शुद्धिः समाख्याता; द्वारपूजाविधिं शृणु।

[5][द्वारपूजा, तत्र सामान्यविधिः]

द्वारोर्ध्वे दक्षिणे विघ्नं तस्य वामे तु [6]वाक्पतिम्॥८७॥
द्वारस्य सव्यपार्श्वे तु जाह्नवीं संप्रपूजयेत्।
यमुनां तस्य वामे तु द्वाराग्रे वृषभं न्यसेत्॥८८॥
कवाटे दक्षिणे वामे विमलं च सुबाहुकम्।
तयोर्मध्ये यजेल्लक्ष्मीं [7]तस्याधः पृथिवीं न्यसेत्॥८९॥
ज्ञानशक्तिं [8]यजेत्सव्ये क्रियाशक्तिं तु वामके।
एवं सामान्यमाख्यातं विशेषमधुना शृणु॥९०॥

---

[1] 'आत्मारामोद्भवैः पुष्पैरथवा वनसंभवैः।
द्रव्यक्रीतैः प्रसूनाद्यैरर्चयेदन्यथा न च॥'
(**पूर्वकामिके**, ५, ६५);
'पुष्पैरारण्यसंभूतैः पत्रैर्वा गिरिसंभवैः।
अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः॥
आत्मारामोद्भवैर्वापि पुष्पैः संपूजयेच्छिवम्।'
(**शिवधर्मे** पूर्वे (टि. ३२) ५.६९, ७० पू०);
उत्तमारामपुष्पाणि मध्यमं वनसंभवम्।
अधमं विक्रयं चैव याचकं निष्फलं भवेत्॥
(**सकलागमसारसंग्रहे** पृ० ८९);
'उत्तमं त्वारामपुष्पं' इति पाठश्चेत्सुष्ठु।

[2] विक्रयं चैव — ज.

[3] याचकं — ज.

[4] ०शुद्धिसमाख्यातं — ज.

[5] 'विघ्नेश्वरं समभ्यर्च्य फलभक्ष्यादिकं ददेत्।
वृषभं पूजयेत्पश्चाद्द्वारदेवान्समर्चयेत्॥
तस्यैव वामपार्श्वे तु वाग्देवीं च प्रपूजयेत्।
तयोर्वामे महालक्ष्मीं द्वारदक्षिणपार्श्वयोः॥
नन्दिं गङ्गां समभ्यर्च्य वामपार्श्वे विशेषतः।
महाकालं च यमुनां समभ्यर्च्य कवाटयोः॥
विमलं च सुबाहुं च भुवङ्गं च पतङ्गकम्।
ऊर्ध्वेऽधः संप्रपूज्याथ शिवास्त्रं संप्रपूजयेत्॥
धूपान्तं वाथ दीपान्तं हविष्यान्तं यजेत्ततः।'
(**सूक्ष्मे** ५.३५–३९ पू०);
एतस्मिन्विषये **अजिते** २०.१२०–१२४ श्लोकास्तदीयटिप्पणी, **रौरवे** क्रियापादे १०.१४–१७ पू० श्लोकाश्च द्रष्टव्याः।

[6] वाक्पतिम् सरस्वतीम्; वाग्देवीम् इत्यर्थे प्रयुक्त इति भाति।

[7] तस्याथ — ज.

[8] यजेत्सर्वे — ज;
'श्रीदेवीमूर्ध्वभागे तु भूमिदेवीं यजेदधः।
ज्ञानशक्तिं क्रियाशक्तिं गर्भद्वारे प्रपूजयेत्॥'
(**मकुटे** ४, १९३);
'अभ्यन्तरगृहद्वारं शक्तिद्वारमिति स्मृतम्।
दक्षिणे ज्ञानदा शक्तिर्धर्मदा चैव चोत्तरे॥'
(**सुप्रभेदे** क्रियापादे ३९.१२)

[1] [द्वारपूजायां विशेषः]

प्राग्द्वारे दक्षिणे भागे नन्दिनं संप्रपूजयेत्।
कालं संपूजयेद्वामे तन्मन्त्रेणैव देशिकः॥९१॥
नीलवर्णसमायुक्तं [2] वेत्रहस्तसमन्वितम्।
[3] नन्दीशं संयजेत्पश्चाद्रक्तवर्णसमन्वितम्॥९२॥
कालं परशुसंयुक्तं सर्वाभरणभूषितम्।
दक्षिणद्वारसव्ये तु अनन्तं संयजेद्बुधः॥९३॥
तप्तकाञ्चनवर्णाभं वज्रहस्तसमन्वितम्।
वामभागे पशुपतिं शक्तिहस्तोग्रलोचनम्॥९४॥
नीलवर्णसमायुक्तं सर्वाभरणभूषितम्।
पश्चिमद्वारहर्म्ये तु दण्डिनं सव्यभागके॥९५॥
पूजयेदिन्द्रचापाभं खड्गहस्तोग्रदंष्ट्रकम्।
वामभागे मुण्डिनं तु भिण्डिपालायुधं तथा॥९६॥
शुभ्रकुन्देन्दुवर्णाभं सर्वाभरणभूषितम्।
उत्तरद्वारे विजयं शूलहस्तसमन्वितम्॥९७॥
इन्द्रगोपनिभं सव्ये पूजयेदथ वामके।
भृङ्गवर्णं तु भृङ्गीशं क्षुरिकायुधहस्तकम्॥९८॥
यथाक्रमेण संयुज्य गन्धपुष्पादिनार्चयेत्।

[4] [अग्रमण्डपप्रवेशः, घण्टाताडनं च]

सद्योजातं समुच्चार्य प्रविश्येशाग्रमण्टपम्।

---

[1] तत्पूर्वद्वारपालौ तु नन्दी कालस्तथैव च।
नन्दीशः श्यामवर्णस्तु दण्डहस्तस्त्रिभङ्गयुक्॥
कुङ्कुमाभो महाकालः परशुश्चायुधस्तथा।
अनन्तेशः पशुपतिर्दक्षिणद्वारपालकौ॥
अनन्तो रक्तवर्णस्तु वज्रायुधसमन्वितः।
पशुपतिर्नीलवर्णस्तु शक्तिहस्तोग्रलोचनः॥
पश्चिमद्वारपालौ च दण्डिमुण्डीशसंज्ञकौ।
दण्डी सुरेन्द्रचापाभः खड्गहस्तोग्रदंष्ट्रकः॥
मुण्डी कुन्देन्दुवर्णाभो भिण्डिपालायुधस्तथा।
विजयश्चैव भृङ्गीशश्चोत्तरद्वारपालकौ॥
भृङ्गीशो भृङ्गवर्णस्तु क्षुरिकायुधहस्तकः।
विजयश्चेन्द्रगोपाभः शूलहस्तो भयंकरः॥
(**सुप्रभेदे** क्रिया० (टि० ३६.) ३९.१५–२०); एतद्विषये पुनः **रौरवे** क्रियापादे ३२.६ उ०–१६ पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।

[2] बेरहस्त० — ज.

[3] ९२ श्लोकस्योत्तरार्धप्रभृति ९८ श्लोकपर्यन्तं 'ज' मातृकायां
'विजयं पश्चिमे भागे रक्तवर्णसमन्वितम्।
दण्डशूलसमायुक्तं सर्वाभरणभूषितम्।
पश्चिमद्वारहर्म्ये तु आनन्दं संयजेद्बुधः।
तप्तकाञ्चनवर्णाभं वज्रहस्तसमन्वितम्।
पूर्वभागे तु विजयं वज्रहस्तसमन्वितम्।'
इति पाठो दृश्यते। सुप्रभेदागममनुसृत्यात्र पाठः साधितः।

[1]वास्तोष्पतेति मन्त्रेण ऐशान्यां वास्तुदैवते[2] ॥९९॥
गन्धपुष्पं बलिं दत्त्वा महाघण्टां प्रताडयेत्।
स्नानारम्भे तदन्ते तु[3] अर्चनान्ते निवेद्यके[4] ॥१००॥
होमान्ते चोत्सवान्ते तु नृत्तान्ते घोषयेत्क्रमात्।
घण्टायास्तु ध्वनिं श्रुत्वा राक्षसानां विनाशनम् ॥१०१॥

[5][स्थानशुद्धिः]

स्थानशुद्धिं ततः कृत्वा गोमयेनोपलेपयेत्।
तन्मध्ये [6]वसुधां [7]यष्ट्वा दिग्बन्धं चास्त्रमन्त्रतः[8] ॥१०२॥
स्थानशुद्धिरिति [9]ख्याता

---

[1] वास्तोष्पतीं च मन्त्रेण — ज; **तै० संहिता** ३.४.१०.१.

[2] ०दैवतं — ज; 'वास्तुदेवताविषये' इत्यर्थः।

[3] ०रम्भाकृतान्तेन — ज.

[4] निवेदयेत् — ज.

[5] 'स्थानशुद्धिं शृणुष्व ह।
प्रोक्षयेदस्त्रमन्त्रेण सामान्यार्घ्यजलेन च॥
मूलं नेत्रत्रयं न्यस्य दिव्यदृष्ट्यावलोकयेत्।'
(**अचिन्त्यविश्वसादाख्ये** १२.१२३, १२४ पू०);
'स्थानशुद्धिमथाचरेत्।
तालमुद्रात्रयं कृत्वा प्राकारं हेतिना स्मरेत्॥
तद्बहिः परिघां न्यस्त्वा कवचेनैव मन्त्रतः।
अस्त्रजालं तु तद्बाह्ये न्यसेद्विघ्नापनुत्तये॥
दिव्यं धाम विचिन्त्याथ'
(**पूर्वकामिके** ४.२००–२०२ पू०);
एतद्विषये पुनः **अजिते** २०.१०८ उ०–११० पू० श्लोकास्तदीयटिप्पणी, **रौरवे** क्रियापादे १०.६ उ०, ७ पू० श्लोकश्च द्रष्टव्याः।

[6] वसुधा — ज.

[7] यष्टचा — ज; 'इष्ट्वा' इत्यस्य 'यष्ट्वा' इति प्रयोगः **अजिते** क्रियापादे १८.१२९ श्लोके दृश्यते।

[8] ०मन्त्रकम् — ज.

[9] ख्यातं — ज.

[4] 'एवं द्वारार्चनं कृत्वा पश्चान्मण्टपमर्चयेत्।
वास्तोष्पतेति मन्त्रेण ऐशान्यां वास्तुदेवताम्॥
संपूज्य गन्धपुष्पाद्यैर्महाघण्टां प्रताडयेत्।
मणीनां वासवो देवः सूचयः सोमदेवताः॥
विदध्यादर्चनाकाले घण्टानां तु महाध्वनिम्।
तेन शब्देन महता राक्षसानां विनाशनम्॥'
(**मकुटे** ४.१९४–१९६);
'घण्टां तु ताडयेत्तत्र पार्ष्णिघातत्रयेण तु।
सद्योजातं समुच्चार्य अर्धमण्टपमाविशेत्॥
यवनिकां परित्यज्य गर्भद्वारसमन्विताम्।
स्थाणुमन्त्रं जपित्वा तु गर्भगेहं विशेद्बुधः॥
(**सूक्ष्मे** ५.३९ उ०–४१ पू०);
यक्षराक्षसपैशाचदानवा ब्रह्मराक्षसाः।
देवसान्निध्यपूजार्थं गच्छन्ति मणिशब्दतः॥
आवाहने च पूजान्ते पूजारम्भे विसर्जने।
अर्घ्ये विलेपने स्नाने दीपे गन्धाभिषेचने॥
अभिषेके च धूपे च नैवेद्ये बलिकर्मणि।
अन्येषु सर्वकार्येषु महाघण्टां प्रताडयेत्॥'
(**पूर्वकारणे** ३०, १८८ उ०–१९१ पू०);
'स्नानादौ च तदन्ते च ह्यर्चनान्ते तथैव च।
नैवेद्यादौ चोत्सवादौ तदन्ते नर्तनान्तके॥
एवमादिषु कालेषु महाघण्टां तु ताडयेत्।'
(**नित्यपूजालक्षणसंग्रहे** पृ० ७०)

[1][द्रव्यशुद्धिः]

'पाद्याचमनपात्रकम्।
अर्घ्यपात्रं शरावं च शङ्खं भाण्डं च क्षालयेत्॥१०३॥
निरीक्ष्य हृदयेनैव कवचेनावकुण्ठयेत्।
वस्त्रपूतेन तोयेन वर्धनीं च प्रपूरयेत्॥१०४॥
पञ्चब्रह्मषडङ्गैश्च शिवमन्त्रेण तज्जलम्।
धेनुमुद्रां दर्शयित्वा सर्वपात्राणि प्रोक्षयेत्॥१०५॥
[2]यववेणूंस्तथा दूर्वाः [3]कुशांश्चैव शिवाम्भसा।
पाद्यादिसर्वपात्राणि [4]साधयेत्तु विचक्षणः॥१०६॥

[5][पाद्यम्]

चन्दनं कुङ्कुमं तोयमुशीरं शुक्लसर्षपः[6]।
[7]यवो वेणुस्तथा दूर्वा उत्तमं पाद्यमुच्यते॥१०७॥
यवसिद्धार्थ[8]दूर्वं च चन्दनोशीरसंयुतम्।
मध्यमं पाद्यमेवं स्यादुशीरं चन्दनं जलम्॥१०८॥
कन्यसं पाद्यमित्युक्तं प्रत्येकं [9]धारणं [10]पलम्।

---

[1] 'शरावं पाद्यपात्रं च शङ्खमाचमनीयकम्।
जलभाण्डं वर्धनीं च पुष्पपात्रार्घ्यपात्रके॥
अस्त्रेण क्षालयेद्धीमान्निरीक्ष्य हृदयेन तु।
कवचेनावकुण्ठ्याथ तेनैवोन्मीलनं कुरु॥
वर्धनीं शङ्खकेनैव पूरयेत्तु शिवाम्भसा।
पञ्चब्रह्मषडङ्गानि तोयमध्ये तु विन्यसेत्॥
पिधाय दक्षहस्तेन दशबीजं न्यसेत्ततः।
दर्शयेल्लिङ्गमुद्रां तु पद्ममुद्रां प्रदर्शयेत्॥
पात्राणि च हृदा प्रोक्ष्य शङ्खतोयेन सर्वशः।
क्षीरं दधि घृतादींश्च गन्धं पुष्पं च धूपकम्॥
वर्धनीतोयमादाय प्रोक्षयेत्पुरुषेण तु।
द्रव्यशुद्धिर्भवेदेवम्'
(**पूर्वकारणे** ३०.१४७–१५२);
एतस्मिन्विषये पुनः **अजिते** २०.११२–११६ पू० श्लोकास्तदीयटिप्पणी, **रौरवे** क्रियापादे १०.७.८ पू० श्लोकश्च द्रष्टव्याः।

[2] यववेणुस्तथा — ज.

[3] कुशेनैव — ज.

[4] सादयेत्तु — ज.

[5] 'पाद्यादीनां विधिं श्रृणु।
सिद्धार्थं चन्दनोशीरं कुङ्कुमं भस्ममिश्रितम्॥
पाद्यमुत्तममित्युक्तमुशीरं चन्दनं तथा।
दूर्वासिद्धार्थकं चापः पाद्यं मध्यममुच्यते॥
चन्दनोशीरसंमिश्रमम्भः कन्यसमुच्यते।
द्रव्याणां च प्रमाणेन निष्कं चोत्तममुच्यते॥
तस्यार्धं मध्यमं प्रोक्तं तदर्धं कन्यसं भवेत्।
पाद्यद्रव्यमिदं प्रोक्तम्' (**सूक्ष्मे** ४.२६–२९);
एतस्मिन्विषये **अजिते**, २२, २३ उ०, २४ पू० श्लोकस्तदीयटिप्पणी च द्रष्टव्यौ।

[6] ०सर्षपम् — ज.

[7] यववेणु० — ज.

[8] ०दूर्वा च — ज.

[9] धारणं — परिमाणविशेषः 'धारणं माषविंशतिः' **पूर्वकारणे** ३१.४१ उ०.

[10] फलम् — ज.

तदर्धमधमं प्रोक्तं [1]तदर्धं कन्यसं भवेत् ॥१०९॥

[2][आचमनीयकम्]

एलालवङ्गकर्पूरं [3]मुरा तोयमुशीरकम् ।
सर्वं जातिफलैर्युक्तं श्रेष्ठमाचमनीयकम् ॥११०॥
लवङ्गं चैव कर्पूरं [4]त्रुटिजातिमुरं जलम् ।
[5]मध्यमाचमनीयं [6]स्यात्त्रुटिभस्म तथा जलम् ॥१११॥
लवङ्गेन समायुक्तं कन्यसाचमनं स्मृतम् ।
एतेषां तु प्रमाणं तु प्रागुक्तविधिना कुरु ॥११२॥

[7][अर्घ्यम्]

तिलव्रीहिकुशाग्रैश्च[8] आपःक्षीरयवैस्तथा ।
तण्डुलैः सर्षपोपेतमर्घ्यमष्टाङ्गमुच्यते ॥११३॥
[9]तण्डुलो यवसिद्धार्थमाढकी[10] शालिसंयुतम् ।
[11]मध्यमर्घ्यमिदं प्रोक्तं शालितण्डुलतोयकम् ॥११४॥
कन्यसार्घ्यमिदं प्रोक्तं प्रमाणं [12]पूर्ववत्कुरु ।
द्रव्यालाभे तु तोयं च चन्दनं [13]च कुशैः सह ॥११५॥
[14]पाद्यादीनां त्रयं कल्प्य [15]क्लृप्तपात्रेषु बुद्धिमान् ।

---

[1] तदर्थ — ज.

[2] 'त्रुटितिम्बुलवङ्गकम् ।
उशीरं जातिकर्पूरं मुरमम्भोविमिश्रितम् ॥
श्रेष्ठमाचमनं प्रोक्तमेलाजातिलवङ्गकम् ।
मुरं कर्पूरतोयेन युक्तं मध्यममाचमम् ॥
एलाभस्मलवङ्गं च कन्यसाचमनं स्मृतम् ।
एषां द्रव्यप्रमाणं तु पूर्ववत्समुदीरितम् ॥'
(**सूक्ष्मे** ४.२९ उ०–३२ पू०);
एतस्मिन्विषये पुनः **अजिते** २२.२४ उ०–२६ पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[3] मुरं — ज.

[4] तटजाति — ज.

[5] 'मध्यमं' इत्यत्र मध्यमिति प्रयोगो वृत्तार्थ इति भाति ।

[6] स्यात्तटिभस्मं — ज.

[7] 'आपःक्षीरकुशाग्रैश्च तण्डुलैरक्षतैर्यवैः ।
सिद्धार्थैश्च तिलैर्युक्तमर्घ्यमुत्तममुच्यते ॥
सर्षपैर्यवशाल्यद्भिस्तण्डुलैर्मध्यमर्घ्यकम् ।
तण्डुलैर्यवशाल्यद्भिरर्घ्यं कन्यसमुच्यते ॥
एतद्द्रव्यप्रमाणं तु पूर्वोक्तविधिवद्ग्रहेत् ।
(**सूक्ष्मे** ४.३२ उ०–३४);
एतस्मिन्विषये पुनः **अजिते** २२.२६ उ०–२९ पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[8] ०कुशाग्राणि — ज.

[9] तण्डुलं — ज.

[10] ०माढकं — ज.

[11] 'मध्यमं' इत्यत्र मध्यमिति प्रयोगो वृत्तार्थः ।

[12] पूर्ववत्कृतम् — ज.

[13] कुशया सह — ज.

[14] पाद्यादीनि त्रयं — ज.

[15] कल्प्य पात्रेषु — ज; अत्र निक्षिपेदित्यध्याहार्यम् ।

[1][धूपः]

फलत्रयं तथा [2]भस्म कुङ्कुमं चन्दनं [3]घनम् ॥११६॥
पत्रलोहमुशीरं च भागान्वक्ष्ये[4] पृथक् पृथक्।
व्योमपक्षाग्न्यश्रबाणान्[5]कौशिकं चैवमादरात्॥११७॥
तस्मात्प्रोक्तात्क्रमाद्भागात्कृष्णचूर्णं तु कारयेत्।
[6]शीतारिद्रव्यमेवोक्तं मधु प्लाव्याथ तेन तु॥११८॥
उत्तमं धूपमाख्यातं शिवप्रीतिकरं भवेत्।
चन्दनं चैव निर्यासं कृष्णलोहं क्रमेण तु॥११९॥
अग्निपक्षैकभागं तु[7] किंचिद्रुस्मविमिश्रितम्[8]।
मध्यमं धूपमाख्यातं गुग्गुलुघृतसंयुतम्॥१२०॥
कन्यसं धूपमाख्यातं किंचित्कर्पूरमिश्रितम्[9]।

[10][अर्घ्यादिविनियोगकालः]

आवाहनान्ते[11] पूजान्ते [12]विसर्जनेऽर्घ्यं प्रदापयेत्॥१२१॥

---

[1] 'अगरु चैकभागं स्यान्निर्यासं द्विगुणं भवेत्।
चन्दनं द्विगुणं हीषत्कृत्वा कर्पूरसंयुतम्॥
शीतारि नाम धूपं तु मधुना च परिप्लुतम्।
एवं धूपं वरं श्रेष्ठमुत्तमं धूपमिष्यते॥
गुग्गुलुघृतसंयुक्तं मध्यमं धूपमिष्यते।
कोष्ठं वा चन्दनं वापि मधुना घृतसंयुतम्॥
अधमं धूपमेवोक्तं त्रिविधं धूपमिष्यते।'
(**दीप्ते** २६.२३–२६ पू०);
एतस्मिन्विषये पुनः **अजिते**, २२, ५४,* ५५ श्लोकौ तदीयटिप्पणी च द्रष्टव्याः।

[2] भस्मं — ज.

[3] वनम् — ज; घनम्—कर्पूरम्।

[4] भागाद्वक्ष्य — ज.

[5] ०पक्षानियश्राणां — ज.

[6] शितारि — ज.

[7] भागानि — ज.

[8] ०द्रुस्मं विमिश्रकम् — ज.

[9] ०मिश्रकम् — ज.

[10] 'पुष्पदानार्घ्यपाद्येषु स्नाने चाचमने तथा।
क्षालने प्रोक्षणे चैव वारि सप्तसु योजयेत्॥
धूपं सर्वत्र दातव्यं शेषं ज्ञात्वा प्रयोजयेत्।'
'अष्टपुष्पं त्रिगन्धं च सप्तवारि नियोजयेत्।
आवाहनार्घ्यपाद्येषु स्नाने धूपे विलेपने॥
नैवेद्ये च विसर्गे च पुष्पमष्टसु योजयेत्।
अर्घ्ये विलेपने स्नाने त्रिषु गन्धं प्रकल्पयेत्'॥
(**पूर्वकामिके** ४.४१२ उ०; ४१३; ४१५ उ०–४१७ पू०);
'आवाहने तु पूजान्ते विसर्जनविधौ तथा।
अर्घ्यं दद्यात्तु मन्त्रज्ञस्त्रिषु कालेषु बुद्धिमान्॥
अर्घ्ये विलेपने स्नाने त्रिषु गन्धं प्रयोजयेत्।
आवाहनार्घ्यपाद्येषु स्नाने धूपे विलेपने॥
नैवेद्ये च विसर्गे च पुष्पमष्टसु योजयेत्।
आवाहनं विना सप्तकाले वारि सुयोजयेत्॥'
(**सुप्रभेदे** क्रियापादे ८.१२०–१२२);
एतस्मिन्विषये पुनः **रौरवे** १०.५६–५९ श्लोका द्रष्टव्याः।

[11] आवाहनेन — ज.

[12] विसर्जनार्घ्यं — ज.

अर्घ्ये विलेपने स्नाने [१]त्रिषु गन्धं सुयोजयेत्।
[२]आवाहनार्घ्यपाद्येषु स्नाने धूपे विलेपने ॥१२२॥
नैवेद्ये च विसर्गे च पुष्पमष्टसु योजयेत्॥
[३]तत्कालं तु विसृज्याथ [४]सप्तवारि नियोजयेत्॥१२३॥
स्नानोदकं च पाद्यादि गन्धपुष्पनिवेद्यकम्।
क्षीरं दधिघृतादीनि प्रोक्षयेत्तु शिवाम्भसा ॥१२४॥
द्रव्यशुद्धिर्भवेदेवं मन्त्रशुद्धिमथ शृणु।

[५][मन्त्रशुद्धिः]

[६]ओंकारदीपिता मन्त्रा नमस्कारान्तयोजिताः॥१२५॥
अर्चने तु प्रयोक्तव्या मन्त्राश्चामोघशक्तयः।

[७][यवनिकाया आवश्यकता]

अस्त्रेणैव तु मन्त्रेण महाघण्टां प्रताडयेत्॥१२६॥
[८]क्षिपेत्ततो यवनिकां ब्रह्ममन्त्रं समुच्चरन्।

---

[१] त्रिधा — ज.
[२] १२२ उत्तरार्ध १२३ पूर्वार्ध च सुप्रभेदागममनुसृत्यात्र संघटितम्।
[३] 'तत्कालः' इत्यनेन आवाहनकालो लक्ष्यते।
[४] सप्तकालेषु वारि सप्तवारि मध्यमपदलोपिसमासः।
[५] 'संग्राह्य वाञ्छितं मौनं ततो मन्त्रान्विशोधयेत्।
मालाद्यैश्वर्यजालानि मन्त्राणां कीर्तितानि वै॥
तेषां प्रबोधिनी शक्तिः शिवाज्ञा ओं नमः स्मृताः।
ओंकारादिनमोऽन्तांश्च पठेन्मन्त्रानशेषतः।
बद्धपुष्पाञ्जलिर्भूत्वा शिवसद्भावभावितः।
त्रिमात्रादिक्रमेणैव यावन्नादान्तिमं व्रजेत्॥
मन्त्रशुद्धिर्भवेदेवम्'
(**पूर्वकामिके** ४.२२२–२२५ पू०);
एतस्मिन्विषये पुनः **अजिते** २०.११७ उ०, ११८ श्लोकस्तदीयटिप्पणी **रौरवे**, क्रियापादे १०. ११, १२ पू० श्लोकश्च द्रष्टव्याः।

[६] १२५ उत्तरार्ध १२६ पूर्वार्ध च दीप्तागमस्थ-(२३.३७) श्लोकमनुसृत्यात्र संघटितम्।
[७] 'अर्चनादिक्रियाकाले प्रच्छन्नपटमुत्तमम्।
पापरोगी परिभ्रष्टो नास्तिकः शिवनिन्दकः॥
वेदविक्रयकश्चैव ग्रन्थविक्रयकस्तथा।
दुर्मुखश्च दुराचारो मूर्खश्च गुरुनिन्दकः॥
पाषण्डः प्रतिलोमश्च शिवद्रव्यापहारकः।
लिङ्गच्छेदी बृहद्बीजी सुरापायी च हेममुट्॥
मातृहा पितृहा स्तेयी गुरुद्रव्यापहारकः।
प्रविश्य दर्शनं कृत्वा पूजाया निष्फलं भवेत्॥'
(**पूर्वकारणे** ३०.१९१ उ०–१९५)
[८] क्षिपेव्यवरिक्तमन्त्रमन्त्रेण — ज;
अत्र 'ब्रह्ममन्त्रं' इति पाठः १८५ पूर्वार्धमनुसृत्य साधितः।;
'अस्त्रमन्त्रं समुच्चार्य पटं तत्रावलम्बयेत्।
हृदयेनैव मन्त्रेण पटं तत्रापनीय च॥'
(टि० ३४. पृ० १६२)

वेदविक्रयकाश्चापि[1] तन्त्रविक्रयका अपि[2] ॥१२७॥
पापक्रूरपरिभ्रष्टनास्तिकाः[3] श्रुतिदूषकाः[4] ।
दुश्चर्मकुष्ठसंयुक्ताः[5] शिवद्रव्यापहारिणः[6] ॥१२८॥
गुरुद्रव्यापहारी च गुरुरोगी च पातकी ।
दुर्मुखश्च दुराचारो[7] मूर्खाश्च गुरुनिन्दकाः ॥१२९॥
[8]कुनखाः कुब्जकाश्चैव गोलका एकचक्षुषः ।
अङ्गहीनः सुरासेवी[9] वेश्यामिश्रणचारिणः[10] ॥१३०॥
[11]लिङ्गच्छेदकविच्छिन्नान्वर्जयेच्छिवदर्शने ।
प्रमादाद्दर्शनं कृत्वा तत्पूजा निष्फला[12] भवेत् ॥१३१॥

[13][प्रच्छन्नपटकालः]

त्रिकालेषु पटं दत्वा स्नाने धूपे[14]तथोत्सवे ।
शेषकालेषु सर्वेषु[15]पटं न परिवेष्टयेत् ॥१३२॥
अथवान्यप्रकारेण पटकालो[16] विशेषतः ।
पूजाकाले तु नैवेद्ये[17] [18]पुष्पालंकरणे ततः ॥१३३॥
मुद्रादर्शनकाले तु हेमरत्नादियोजने[19] ।
एव[20]मादिषु कालेषु प्रच्छन्नपटमारभेत् ॥१३४॥

[21][लिङ्गशुद्धिः पीठशुद्धिश्च]

लिङ्गं चतुर्विधं ज्ञात्वा शोधयेदस्त्रमन्त्रतः ।

---

[1] कैश्चापि — ज.
[2] ०विक्रयकोपरि — ज.
[3] नास्तिकैः — ज.
[4] ०दूषकैः — ज.
[5] ०संयुक्तं — ज.
[6] ०हारिभिः — ज.
[7] दुराचारी — ज.
[8] कुनकाकुष्टकाश्चैव कोलका एकचक्षुषा — ज.
[9] ०हीनसुरासेव्यो — ज; अत्र 'एतान्' इत्यध्याहृत्य व्याख्येयम् ।
[10] वेश्यमिश्रयचारिणा — ज.
[11] लिङ्गच्छेदनविच्छिन्नं शिवदर्शनवर्जयेत् — ज.
[12] निष्फलं — ज.
[13] 'द्वारपूजावसाने तु स्नानान्ते च निवेद्यके । संध्यावसाने निक्षेप्यं प्रच्छन्नपटमुत्तमम् ॥' (**पूर्वकामिके** ४.२७९); एतस्मिन्विषये पुनः **अजिते** २०.२६८–२६९ पू० श्लोकस्तदीयटीप्पणी, **रौरवे** क्रियापादे १०.६१ श्लोकश्च द्रष्टव्याः ।
[14] ततोत्सवे — ज.
[15] पटेन — ज.
[16] पटकालं — ज.
[17] नैवेद्यं — ज.
[18] पुष्पालंकारयेत्ततः — ज.
[19] ०योजयेत् — ज.
[20] ०मादीनि काले तु — ज.
[21] 'लिङ्गं चतुर्विधं ज्ञेय स्थावरं शास्त्रचोदितम् । दैविकं चार्षकं चैव गाणपं मानुषं तथा ॥'

प्रोक्षणं पुनराह्वानं [1]पुरश्चरणमेव हि ॥१३५॥
स्थापिते मानुषैर्लिङ्गे[2] सर्वकर्माणि कारयेत् ।
[3]ज्ञात्वा तु लिङ्गमाचार्यस्तल्लिङ्गं हृदयेन तु ॥१३६॥
लिङ्ग[4]पीठस्थलं सर्वं [5]शुद्धं कृत्वा शिवाम्भसा ।
शोधयेद्दैविकं लिङ्गं [6]स्थानजं हृदयेन तु ॥१३७॥
[7]आर्षं तु योगजं चैव [8]भूतजं चैव गाणपम् ।
मानुषं रत्नजं लिङ्गं बाणलिङ्गं विशेषतः ॥१३८॥
शोधयेदस्त्रमन्त्रेण शुद्धतोयेन देशिकः ।
लिङ्गस्य [9]मूर्धदेशे तु [10]पञ्चमेन तु संस्पृशेत् ॥१३९॥
लिङ्गस्य मुखदेशे तु नरमन्त्रेण संस्पृशेत् ।
लिङ्गपार्श्वे तु दक्षे स्यादघोरेण तु संस्पृशेत् ॥१४०॥
लिङ्गस्य वामपार्श्वे तु वामदेवेन संस्पृशेत् ।
पृष्ठान्तं संस्पृशेत्पादौ सद्योजातेन मन्त्रतः ॥१४१॥
उन्मनीमूलमन्त्रेण पीठशुद्धिं तु कारयेत् ।
[11]महापट्टैरुपानान्तं देव्यङ्गानि च संस्पृशेत् ॥१४२॥
लिङ्ग[12]शुद्धिः समाख्याता; पश्चात्संपूजयेद्गुरुम् ।

---

'प्रोक्षणं पुनराह्वानं पुरश्चरणमेव च ।
स्थापिते मानुषे लिङ्गे सर्वकर्माणि कारयेत् ॥
यल्लिङ्गमर्चयित्वा तु तल्लिङ्गं हृदयेन तु ।
पूजापर्युषितं तत्र गन्धाद्यैरर्चयेत्क्रमात् ॥
कनिष्ठानामिकाभ्यां तु पुष्पं संग्राह्य देशिकः ।
पूर्वसंध्यार्चितं पुष्पं विसृजेदीशमन्त्रतः ॥
अङ्गुष्ठतर्जनीभ्यां तु पीठपार्श्वे विसर्जयेत् ।
तत्पुष्पं दापयेत्पश्चात्सहसा लिङ्गमूर्धनि ॥
लिङ्गमूर्धनि पुष्पेण शून्ये नश्यति साधकः ।
लिङ्गं प्रक्षाल्य शस्त्रेण पीठं पाशुपतास्त्रतः ॥
निर्माल्यशेषं तत्सर्वं चण्डेशाय प्रदापयेत् ।
लिङ्गपीठस्थलं चैव शोधयित्वा हृदाम्भसा ॥
गन्धपुष्पादिनाभ्यर्च्य लिङ्गं सर्वाङ्गमुच्चरन् ।
लिङ्गस्य मूर्ध्नि देशे तु स्पृशेदीशानमन्त्रतः ॥
लिङ्गस्य मुखदेशं तु तत्पुरुषेण संस्पृशेत् ।
लिङ्गस्य पार्श्वौ बाहुभ्यामघोरेण तु संस्पृशेत् ॥
लिङ्गस्य पृष्ठदेशे तु वामदेवेन संस्पृशेत् ।
पीठान्तं स्पर्शयेत्पादौ बाहुभ्यां सद्यमन्त्रतः ॥
महापट्टिकादुपानान्तं देव्यङ्गानि प्रपूजयेत् ।'
(**मकुटे** (टि० १९) ४.१९७; २२८उ०–२३७);
एतस्मिन्विषये पुनः **अजिते** २०.१२९उ० — १३९ श्लोकास्तदीयटिप्पणी, **रौरवे** क्रियापादे १०.८उ०, ९पू० श्लोकश्च द्रष्टव्याः ।

[1] पुनश्चरण — ज.
[2] मानुषे लिङ्गे — ज.
[3] एवं लिङ्गं तु आचार्य — ज.
[4] ०पीठे सुलं सर्वं — ज.
[5] शुद्धि — ज.
[6] स्नानजं — ज.
[7] आर्षः योगजेनैव — ज.
[8] भूतजेनैव गाणवम् — ज.
[9] मूर्ध्नि देशे तु — ज.
[10] पञ्चमेन—ईशमन्त्रेण.
[11] महापट्टिद्विपानान्तं देव्याङ्गानि — ज.
[12] ०शुद्धिसमाख्यातं — ज.

[1][गुरुपूजा]

शिरोर्ध्वे कल्पयेत्पद्मं साष्टपत्रं सकर्णिकम् ॥१४३॥
स्वगुरुं पूजये[न्म]ध्ये तस्य शक्तिसमन्वितम् ।
तस्माद्गुरूपदेशेन [2]यजेद्देवं सदाशिवम् ॥१४४॥

[3][आसनकल्पनम्]

आसनं कल्पयेत्पश्चाच्छास्त्रदृष्टेन कर्मणा ।
शक्तिरेवासनं पूर्वं पश्चासनं ततः क्रमात् ॥१४५॥
ततोऽनन्तासनं पूर्वं सिंहासनमतः परम् ।
योगासनं तृतीयं स्या[4]दम्बुजं तु चतुर्थकम् ॥१४६॥
विमलं पञ्चमं ज्ञेयमुपर्युपरि कल्पयेत् ।

[5][अनन्तासनम्]

[6]कन्दं हि पार्थिवं तत्त्वं सौवर्णं ब्रह्मदैवतम् ॥१४७॥

---

[1] 'ऐशान्ये स्वगुरौ भक्त्या चासनं पूजयेत्ततः ।
ओं हां गुं गुर्वासनाय नमश्चैव तु कल्पयेत् ॥'
(**अचिन्त्यविश्वसादाख्ये** १२.५२ उ०, ५३ पू०);
'मुख्यैशान्ये दक्षिणामुखं स्वगुरुं गुरुपादुकां वा गन्धादिषु वा शिवमन्त्रेण आवाहनादिजपान्तं पूजयित्वा स्वामिन् भवदुपदिष्टमार्गेण शिवं पूजयाम्यनुज्ञां देहीति प्रार्थयेत् ।'
(**क्रियादीपिकायां** पृ० ५६);
'गणेशं पीठवायव्यां गन्धपुष्पादिभिर्यजेत् ।
ऐशान्यां गुरुपङ्क्तीश्च पूजयेद्धृदयेन तु ॥'
(**पूर्वकामिके** ४.२८७)

[2] यष्टचा — ज.

[3] 'आसनं कल्पयेत्तत्र शिवासनं विधीयते ।
आधारमासनं लिङ्गमाधेयं परमः शिवः ॥
नादो लिङ्गमिति प्रोक्तं बिन्दुः पीठमुदाहृतम् ।
न शिवेन विना शक्तिर्न शक्तिरहितः शिवः ॥
पुष्पेषु गन्धवज्ज्ञेयं तिलेषु तैलवत्तथा ।
देहेषु प्राणवच्छक्तिस्तस्माच्छक्तिं प्रपूजयेत् ॥
शक्तिरेवासनं प्रोक्तं पश्चानन्तादयः क्रमात् ।
पार्थिवाण्डमधः कन्दं नालं वह्न्यन्तमुच्यते ॥
ततोऽनन्तासनं प्रोक्तं सिंहासनं द्वितीयकम् ।
योगासनं तृतीयं तु चतुर्थं पद्मासनं भवेत् ॥
पञ्चमं विमलाख्यं तु पञ्चभूतात्मकं भवेत् ।'
(**कारणे** (टि. ३४) वासनार्चनाविधिपटले ३१६–३२१ पू०);

एतस्मिन्विषये पुनः **अजिते** २०.१४०–१५७ श्लोकास्तदीयटिप्पणी, **रौरवे** क्रियापादे १०.२० उ० – २६ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[4] ०दम्बुजार्थं चतुर्थकम् — ज.

[5] 'तृणवद्वायुना दृश्यं धार्यते जायते यया ।
साधारशक्तिर्न्यस्तव्या पूर्वं कूर्मशिलासने ॥
चन्द्रांशुनिर्मला सौम्या चतुर्वक्त्रा चतुर्भुजा ।
दुग्धाब्धिसदृशाकारा कल्पिता हृदयार्णगा ॥
अनन्तं नीलसंकाशमनेकफणमण्डितम् ।
हृदयेऽञ्जलिसंयुक्तमेकवक्त्रं चतुर्भुजम् ॥
क्षीराब्धितः समुत्पन्नसरोरुहसमाकृतिम् ।

अशेष[१]धात्रीपर्यन्तं नालाङ्कुरसमन्वितम् ।
आधारशक्तिमध्यस्थमनन्तं शुभमव्ययम् ।।१४८।।
[२]कुन्देन्दुवर्णां वरदां त्रिणेत्रां कोटीरभारामभयां भयघ्नाम् ।
पाशाङ्कुशाढ्यां[३]गजमध्यसंस्थामाधारशक्तिं [४]मह शक्तिमूलाम् ।।१४९।।
[५]अनन्तं वासुकिं चैव तक्षकं चाम्बुजं तथा ।
[६]महापद्मं शङ्खपालं [७]कार्कोटं गुलिकं तथा ।।१५०।।
पूर्वादीशानपर्यन्तं कल्पयेत्कल्पवित्तमः ।
सद्य[८]मन्त्रसमायुक्त[९]मानन्तबीजसंयुतम् ।।१५१।।
अनन्ताद्यष्टसंयुक्तं तेनानन्तासनं भवेत् ।
अधस्तात्कल्पयेदूर्ध्वे सिंहासनं प्रकल्पयेत् ।।१५२।।

[१०][ सिंहासनम् ]

धर्मादि[११]चरणैर्युक्त[१२]मधर्मादीलिकान्वितम् ।

---

तत्राधारे हृदा मन्त्री विन्यसेदासनात्मकम् ।।'
(**पूर्वकामिके** ४.२९१–२९४);
'वृत्ताकारमनन्तं च सूर्यकोटिप्रकाशकम् ।
अधस्तात्कल्पयेत्'
(**कारणे** (टि. ३४) वासनार्चनाविधिपटले श्लो० ३२१ उ०, ३२२ पू०);
'अनन्ताख्यासनं वक्ष्ये समाहितमनाः शृणु ।
धर्मयुक्तो वृषाकारो ज्ञानसिंहस्वरूपकः ।।
वैराग्यं पीतभूतं स्यादैश्वर्यं श्वेतकुञ्जरः ।
अनन्तासनपादादि पार्श्वयष्टिमथो शृणु ।।
अधर्माज्ञानावैराग्यमनैश्वर्यं च कल्पयेत् ।
राजावर्तनिभाः सर्वे प्रागादिषु च कल्पयेत् ।।
प्रथमं नागराजानमनन्तं वासुकिं तथा ।
तक्षकं चाथ कार्कोटं पद्माख्यं च ततः परम् ।।
महापद्मं शङ्खपालं गुलिकं नवमं स्मृतम् ।
विद्येश्वराणामष्टानां प्रत्येकं रूपमास्थिताः ।।
फणपञ्चत्रयं चैकं पुच्छादारभ्य नागवत् ।
पुरुषाकारसंयुक्तमुदरोपरिशोभितम् ।।
सुमुखं कुण्डलोपेतं सर्वाभरणभूषितम् ।
फणतत्परभागेऽपि द्विबाहुं क्षौमवस्त्रकम् ।।
वरदाभयदहस्तं सुवृत्तं तद्वरं ततः ।।
गुलिकाद्याननन्तादीन् परितो दिक्षु कल्पयेत् ।
एकैकफणसंयुक्तं कृताञ्जलिपुटान्वितम् ।।
प्रधानमीक्ष्य सर्वे ते नागाधिपमनूपमम् ।
ओं हां पूर्वं समुच्चार्य नाममन्त्रेण पूजयेत् ।।
ओं हां नागराजाय नमः । ओं हां अनन्ताय नमः । इत्यादि ।
फुल्लाष्टदलकं कृत्वा देवस्यानन्तपङ्कजम् ।
नागाधिपशिरोदेशे कल्पयेन्नन्दिकेश्वर ।।
अनन्तासनमित्युक्तम्'
(**अचिन्त्यविश्वसादाख्ये** १३.१३ उ०–२४ पू०)

[१] स्कन्दं — ज.

[१] ०धात्रि० — ज.

[२] 'कुन्देन्दुवर्णां धवलां त्रिणेत्रां
कोटीरभारां वरदाभयां च ।
पाशाङ्कुशौ दक्षिणवामहस्ते
आधारशक्तिं रविचन्द्रमौलिम् ।।'
(सद्योजातशिवाचार्यसंपादितायां '**अघोरशिवाचार्यपद्धत्यां** चलासनार्चनाविधौ पृ० १९८)

[३] गजमध्यहस्तां — ज.

[४] महिशक्ति० — ज; मह—'मह' पूजायां इति धातोर्लोटि मध्यमपुरुषैकवचनम् ।

[५] अनन्तो वासुकी — ज.

[६] महापाशं कपालं च — ज.

[1]पञ्चाननैः प्रकल्प्यं तच्छ्वेतरक्तादिभानकैः ॥१५३॥
[2]वर्णैस्त्रिनेत्रसंयुक्तै[3]श्चरणैरुपशोभितैः ।
उमामन्त्रसमायुक्तं [4]जलाध्यक्षाक्षरान्वितम् ॥१५४॥
शुद्धस्फटिकसंकाशं तत्त्वं वै विष्णुदैवतम् ।
गुणत्रयेण [5]संछाद्यमेवं सिंहासनं भवेत् ॥१५५॥
सिंहासनोपरिष्टात्तु योगासनमिहोच्यते ।

[6][योगासनम्]

भूतरूपेण कोणेषु पादाः कृतयुगादयः ॥१५६॥
[7]श्वेतो रक्तस्तथा पीतः [8]कृष्णः कृतादिवर्णकाः[9] ।
अव्यक्तो नियतिः [10]कालः [11]कला चेति चतुष्टयम् ॥१५७॥
[12]महादिक्षु न्यसेत्तावन्मध्यपादस्तु केशवः ।
वर्णाञ्जननिभाः [13]सर्वाः प्रागादि[14]ष्वीलिका न्यसेत् ॥१५८॥
[15]मायान्तं रुद्रदैवत्यं घोरमन्त्रकलान्वितम् ।

---

[7] कार्कोटगुलिकस्तथा — ज.

[8] ०मन्त्रं समा — ज.

[9] ०मानन्दं — ज.

[10] 'ऊर्ध्वे सिंहासनं प्रकल्पयेत् ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च चतुष्टयम् ॥
शुक्लाभं पद्मरागाभं हैमं मरकतप्रभम् ।
धर्मादीनां चतुर्णां स्यादाग्नेयादिक्रमेण तु ॥
पादांश्च चतुष्कोणेषु सिंहरूपेण कल्पयेत् ।
दंष्ट्राकरालवदनास्त्रिणेत्रा भीमरूपिणः ॥
कोटिसिंहैर्विशेषेण प्रत्येकं परिवारकम् ।
अधर्माज्ञानावैराग्यमनैश्वर्यं तथेलिकाः ॥
राजावर्तनिभाः सर्वाः प्रागादिषु प्रकल्पयेत् ।
गुणत्रयेण संछाद्यमेवं सिंहासनं भवेत् ॥'
(**कारणे** (टि. ३४) वासनार्चनाविधिपटले श्लो० ३२२-३२६)

[11] चारणै — ज.

[12] ०मधर्मादिदला० — ज.

[1] पञ्चासने प्रकल्प्यान्ते श्वेतं रक्ताभिमानवै — ज.

[2] वर्णै त्रनेत्रै — ज.

[3] ०श्चारणैरुप — ज.

[4] जलमध्यक्षरान्वितम् — ज.

[5] संछाद्य एवं — ज.

[6] 'भूतरूपेण कोणेषु पादाः कृतयुगादयः ।
श्वेतं रक्तं तथा पीतं कृष्णं कृतादिवर्णकम् ॥
अव्यक्तो नियतिः कालः कला चेति चतुष्टयम् ।
अव्यक्तं स्फटिकाभासं नियतिःकालाञ्जनद्युतिः ॥
कालो दाडिमपुष्पाभः कला भिन्नाञ्जनप्रभा ।
प्रागादिष्वीलिकाः प्रोक्ता मध्यपादस्तु केशवः ॥
एवं योगासनं प्रोक्तम्'
(**कारणे** (टि. ३४) वासनार्चनाविधिपटले श्लो० ३२७-३३० पू०)

[7] श्वतं रक्तं तथा पीतं — ज.

[8] कृष्णं — ज.

[9] क्रेतादिवर्णकम् — ज.

[10] कालाः — ज.

[11] कलाश्चेति — ज.

[12] महादीक्ष न्यसे ताव — ज.

[13] सर्वे — ज.

[14] ०क्ष्वेलिकन्यसेत् — ज.

[15] मातान्तं — ज.

[1][पद्मासनम्]

तस्योपरि समुद्भूतं पद्मासनं प्रजापते[2] ॥१५९॥
शुद्धस्फटिकसंकाशं कर्णिकाकेसरैर्युतम्।
इच्छाशक्त्युद्भवं पद्मं सहस्रदलभूषितम् ॥१६०॥

[3][विमलासनम्]

वामादिशक्तिपर्यन्तम्; मण्डलत्रयमध्यगम्।
[4]गुणत्रययुतं [5]चात्मतत्त्वत्रयमनोहरम् ॥१६१॥
आकाश[6]तत्त्वं विमलमासनं स्फटिकप्रभम्।
वृत्तं सदाशिवं तत्त्वं तस्य रूपं परात्परम् ॥१६२॥
ईशानमन्त्रसंयुक्तं सर्वतत्त्वमयं प्रभुम्।
अस्मिन्नासनमध्ये तु शिवं परमकारणम् ॥१६३॥
शिवतत्त्वे शिवं ध्यात्वा आवाह्याभ्यर्चनं कुरु।

[7][चन्द्रार्कनाशनयुक्तकाले पूजा कार्या]

[8]दिवाकाले [9]तु नाभ्यर्च्य [10]निशाकाले तु नार्चनम् ॥१६४॥

---

[1] 'पद्मासनं ततोपरि।
मायातत्त्वं बृहद्ग्रन्थि शुद्धविद्याब्जशोभितम् ॥
विद्येश्वरदलाष्टं च शक्तिकेसरसंयुतम्।
विद्यातत्त्वमायातत्त्वं कर्णिकां संप्रपूजयेत् ॥
बीजं प्रवालवर्णाभमङ्कुरं रजतप्रभम्।
तस्य नालं तु वैडूर्य कर्णिका रक्तपिङ्गला ॥
श्वेतवर्णं दलाग्रं चारक्ताश्चोपदलाः स्मृताः।
किंचिल्लोहितपीतानि मध्येषु केसराणि च ॥
तन्मध्ये कल्पयेद्धीमान्कर्णिकां कनकप्रभाम्।
नव बीजानि तन्मध्ये हेमाभानि प्रकल्पयेत् ॥
वामादिशक्तयश्चाष्ट केसराणि प्रकल्पयेत्।
इन्द्रादीशानपर्यन्तं न्यसेन्मध्ये मनोन्मनीम् ॥
आत्मतत्त्वं न्यसेत्सव्ये विद्यातत्त्वं तु वामके।
मध्यमे शिवतत्त्वं तु कल्पयेत्कल्पवित्तमः ॥
एवं पद्मासनं प्रोक्तम्'
(**कारणे** (टि. ३४) वासनार्चनाविधिपटले श्लो० ३३०–३३७पू०)

[2] प्रजापतेः — ज.

[3] 'तस्योर्ध्वे विमलासनम्।
मण्डलत्रयमध्ये च कल्पयेद्विमलासनम् ॥'
(**कारणे** (टि. ३४) वासनार्चनाविधिपटले श्लो० ३३७)

[4] गुणत्रयायुतं — ज.

[5] चात्मं तत्त्व — ज.

[6] ०तत्त्वविमल — ज.

[7] अयं विषयो योगिनामन्तर्यजनप्रकरणविषयकः पूजाप्रसङ्गादत्र वर्णित इति भाति।

[8] 'अथ ज्ञानक्रमः कथ्यते। कामिके —
"न दिने पूजयेद्देवं रात्रौ नैव च नैव च।
सततं पूजयेद्देवं दिवारात्रौ च वर्जयेत् ॥"
अस्यार्थः। दिनं विकल्पज्ञानम्। रात्रिरज्ञानम्। तस्मात्सकलावस्थां केवलावस्थां च त्यक्त्वा निर्मलजागरादिना सन्ततं शिवं पूजयेत्।'
(**क्रियादीपिकायां**, पृ० ५०, ५१)

[9] न मभ्यर्च्य — ज.

[10] निशिकाले तु अर्चनम् — ज.

[1] दिवारात्रं सदा ज्ञात्वा देवेशं पूजयेत्सुधीः ।
योजयेत्तु दिवारात्रं[2] [3]वृथार्कशशिवर्धने[4] ॥१६५॥
श्रीनन्दिकेश्वर उवाच —
देव देव महादेव स्थित्युत्पत्तिलयेश्वर ।
[5]दिवारात्रं परित्यज्य सौम्य[6]पूजां निदेशय ॥१६६॥
श्रीभगवानुवाच —
सर्वभूतमनश्चक्षुश्चक्षुषी शशिभास्करौ ।
मनसानन्यमनसा[7] दृष्टिभ्यामीक्षणेन च ॥१६७॥
पूजोपकरणं द्रव्यं [8]साधनीयं प्रजापते ।
यावत्पूजा[9]समाप्तिस्तु तावच्चक्षुर्मनोगतिः ॥१६८॥
नान्येक्षणमना[10] भूत्वा [11]येनार्चितः परः शिवः ।
[12]तेनार्चितस्तु देवेशो [13]नार्चने चान्यगं मनः ॥१६९॥
मनश्चक्षुर्द्वयोर्वृत्तिर्यस्मिन्काले द्विजोत्तम ।
[14]एकस्थितिमनुप्राप्ता तस्मिन्काले द्विजोत्तम ॥१७०॥
[15]चन्द्रार्कनाशनः कालस्तत्काल[16] इह कथ्यते ।

---

[1] दिवारात्रौ — ज.
[2] दिवारात्रौ — ज.
[3] वृथर्के शशिवर्धनम् — ज.
[4] 'चन्द्रार्कोदयतः पूजा वृथा क्लेशो भविष्यति ।'
(**पूर्वकामिके** ४.१९४ उ०)
[5] दिवारात्रौ — ज;
'दिवारात्रौ परित्यज्य कथं पूजयते गुरुः ।
सर्वभूतमनश्चक्षुर्वृत्ती तौ शशिभास्करौ ॥'
'मनश्चक्षुर्द्वयोर्वृत्ती यस्मिन्काले द्विजोत्तम ।
एकचित्तमनुप्राप्ते तस्मिन्काले समर्चयेत् ॥'
(**कारणे** (टि. ३४) वासनार्चनाविधिपटले श्लो० २९७, ३०० उ०, ३०१ पू०)
[6] ०पूजा निदेशकः — ज.
[7] ०मनसो — ज; न विद्यतेऽन्यस्मिन्मनो यस्य तेनेति बहुव्रीहिसमासोऽत्राभ्युपगन्तव्यः । एतच्च साधनीयमित्यत्रान्वेति ।
[8] सादयेत्तु — ज.
[9] समाभ्यन्तं — ज.
[10] ०मनो — ज.
[11] येनार्चनं परं शिवम् — ज.
[12] तेनार्चनदेवेशं — ज.
[13] सार्चनं चान्यरम्मनः — ज.
[14] एकचित्ते मनुप्राप्ते — ज.
[15] 'प्रथमं योगमार्गः । कामिके —
''चन्द्रार्कनाशने पूजा साधयेदीप्सितं फलम् ।
सुषुम्नामध्यगे प्राणे पूजयेत्सर्वदा शिवम् ॥''
(**पूर्वकामिके**, ४.१९५ उ०, १९६ पू०);
अस्यार्थः । चन्द्रस्तु इडा नाडी । अर्कस्तु पिङ्गला नाडी । तन्नाश उच्छ्वासनिश्वासराहित्यम् । तदेव केवलकुम्भकम् । पूजा तत्र शिवानुभव एव । ईप्सितं फलं सिद्धिर्मुक्तिश्च । साधयेत् — प्राणवायौ सुषुम्नारन्ध्रप्रविष्टे सति शिवानुभूतिमान्भवेत् ।' (**क्रियादीपिकायां** पृ० ५०);
'यजनेऽर्केन्दुसंचारे निष्फलं तदवाप्नुयात् ;
चन्द्रार्कनाशयजनं सर्वसिद्धिकरं शुभम् ॥
ऊर्ध्वप्राणस्तथादित्योऽधःप्राणस्तु चन्द्रमाः ।
तयोर्निरोधनं कुर्यात्तस्य चन्द्रार्कनाशनम् ॥'
(**कारणे** (टि. ३४) वासनार्चनाविधिपटले श्लो० १९५, १९६);
'इडा चन्द्रकला ज्ञेया पिङ्गला भास्करांशका ।
द्वयेन पूरयेद्वायुं नासिकामण्डलद्वयम् ॥
रेचकं सूतकोपेतं पूरकं मृतकाश्रितम् ।

तस्मात्सर्वप्रयत्नेन एकचित्तेन धीमता ॥१७१॥
[1]देवेशस्यार्चनं कार्यं सर्वसंपत्सुखावहम् ।
प्राणा[2]पानावर्कचन्द्रौ [3]प्रोक्तौ किंचिच्छिवागमे ॥१७२॥

[4][लिङ्गपूजाकरणप्रकारः]

[5]आवाहोद्वासनं नास्ति मानुषादन्यलिङ्गके ।
सर्वत्र [6]चादिमं देवं परमेशं सदाशिवम् ॥१७३॥
अभि[7]मुखीकृतं कुर्यात्तत्तदावाहनं भवेत् ।
पूजापरि[8]समाप्तौ तु विमुखं[9] तत्प्रकीर्तितम् ॥१७४॥
विसर्जनम्; [10]परिवृते पश्चात्पश्चमुखे पृथक् ।
स्नानद्रव्यैश्च[11] सर्वेषामर्चयेद्गन्धपुष्पकैः ॥१७५॥
[12]आवाहमुद्रयावाह्य स्थपयेत्तं [13]तु मुद्रया ।

---

सूतकप्रेतकारित्वात्पूजाहोमं न कारयेत् ॥
निष्फलं न तु सान्निध्यं यथोक्तविधिना कुरु ।
तस्मात्सर्वप्रयत्नेन कुरु चन्द्रार्कनाशनम् ॥
चन्द्रार्कनाशन वक्ष्ये शृणुष्वैवं महेश्वर ।
ऊर्ध्ववक्त्रं तु जिह्वाग्रं सुषुम्नाद्वारबन्धनम् ॥
साधकस्य तु तद्दृष्टिमात्मानं हस्तगामिकम् ।
कुम्भकं प्राणनिरतं मौनकर्म निरन्तरम् ॥
दृढचित्तं सदा ध्यात्वा तस्य चन्द्रार्कनाशनम् ।
मृतकं सूतकं त्यक्त्वा यावन्निर्णयमुच्यते ॥
चन्द्रार्कनाशनं यावत्तावत्संपूजयेच्छिवम् ।'
(**मकुटे** ३, ६३–६९पू०);
चन्द्रार्कदर्शनं कालं — ज.

[16] ०त्कालं — ज.

[1] देवेशमर्चनं कुर्यात् — ज.

[2] ०पानार्कचन्द्रेति — ज.

[3] प्रोक्तं — ज.

[4] एतस्मिन्विषये **अजिते** २०.१५८–२१७ श्लोकास्तदीयटिप्पणी. **रौरवे** क्रियापादे १०.३०–५५ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[5] आवाहनोद्वासनं नास्ति मनुष्या अन्य — ज;
'स्वयंभु दैविकं बाणं गाणपं चार्षकं तथा ।
शिष्टलिङ्गमिति ख्यातं पूजां पूर्ववदाचरेत् ॥
शिष्टलिङ्गे विशेषेणावाहनोद्वासनं न हि ।
सर्वत्र व्यापिनं देवं परमेशं सदाशिवम् ॥
अभिमुखीकरणं यच्च तदावाहनमुच्यते ।
विमुखीकरणं यच्च तदुद्वासनमुच्यते ॥
पूजापरिसमाप्तौ तु विमुखं तु विसर्जनम् ।
यथा कुण्डगतस्याग्नेर्वायुना ज्वलनं भवेत् ॥
तथा च लिङ्गे मन्त्रेण जायते भगवाञ्शिवः ।
देवैश्च मुनिभिश्चैव पशुभिः पक्षिजालकैः ॥
मृगादिगणपैश्चैव स्वायम्भुवं प्रतिष्ठितम् ।
यक्षरक्षोगणैश्चैव यल्लिङ्गं तु प्रतिष्ठितम् ॥
तच्छिष्टलिङ्गमित्युक्तं शिवसान्निध्यकारणम् ।
तस्मादावाहनं नास्ति न चैवोद्वासनक्रिया ॥'
(**पूर्वकारणे** ३०.१९८उ०–२०५पू०)

[6] ०मादिनं — ज.

[7] ०मुखीकरणं — ज.

[8] समाप्ते — ज.

[9] अत्र कुर्यादित्यध्याहार्यम् । तद् विसर्जनं प्रकीर्तितम् इत्यन्वयः कार्यः ।

[10] परिवारं च – ज.

[11] स्नानद्रव्यं च — ज.

[12] आवाहनमुद्रया — ज;
'आवाहयेत्ततो देवं सद्योजातेन मन्त्रतः ।
स्थापयेद्वाममन्त्रेणाप्यघोरेण तु संनिधिः ॥
पुरुषेण निरोधश्चेशानेन स्वागतं भवेत् ।

[1]सांनिध्ये ध्वजमुद्राख्या [2]पुरुषेण निरोधयेत् ॥१७६॥
लिङ्गाख्यमुद्रयाभ्यर्च्य सद्यादिब्रह्मपञ्चकैः।
पूर्वोक्तविधिना चैव ध्यात्वा देवं सदाशिवम् ॥१७७॥
सद्यमन्त्रमनुस्मृत्य पाद्यं [3]पादे प्रदापयेत्।
मुखेष्वाचमनं दद्याद्वामदेवेन मन्त्रतः ॥१७८॥
अघोरेण तु मन्त्रेण अर्घ्यं शिरसि निक्षिपेत्।
[4]जलेन स्नापयेत्पश्चात्पञ्चाङ्गैः [5]रुद्रसूक्तकैः[6] ॥१७९॥
गन्धोदकेन संस्नाप्य [7]गन्धद्वारेण मन्त्रतः।
क्षीरं दधि घृतादीनि मधुशर्करमेव च ॥१८०॥

---

आगतस्य शिवस्यात्र पादे पाद्यं हृदा ददेत् ॥
मुखेष्वाचमनं दद्यादर्घ्यं शिरसि निक्षिपेत्।
अष्टत्रिंशत्कलान्यासं मकुटादिक्रमेण तु ॥'
(**पूर्वकारणे** ३०.२७०–२७२)

[13] तन्मुद्रया — ज.
[1] सान्निध्या — ज.
[2] तत्पुरुषेण — ज.
[3] पादौ — ज.
[4] जलेनास्थापये — ज;
'तैलेन हस्तयन्त्राद्यैः साधितेन नवेन च।
पक्वेन वासितेनाथ शुद्धगव्येन सर्पिषा ॥
सपीठं लिङ्गमभ्यर्च्य धूपयेत्तदनन्तरम्।
शुभेन शालिपिष्टेन हरिद्रासंयुतेन च ॥
उद्वर्त्य माषचूर्णेन निमज्जनमथाचरेत्।'
नालिकेरफलाम्भोभिरन्यैर्वा रसवद्रसैः ॥
पुष्पाद्यैर्हेमतोयैश्च रत्नोदैर्गन्धतोयकैः।
अभिषेकं ततः कुर्यान्न कुर्याच्छून्यमस्तकम् ॥'
सुगन्धामलकाद्यैस्तु स्नानं तत्र विधीयते।
गन्धाम्बुनाभिषेकं तु कृत्वा लिङ्गं सपीठकम् ॥
वक्त्रेष्वाचमनं दत्त्वा मार्जयेच्छुद्धवाससा।
गन्धद्रव्यैः समालिप्य शिवलिङ्गं सवेदिकम् ॥
वस्त्रैर्नानाविधैर्द्रव्यैर्देवमाच्छाद्य निर्मलैः।
दत्त्वाष्टपुष्पं देवाय दद्यान्मन्त्रहविस्तदा ॥
मुद्गान्नं वाथ शुद्धान्नमुपदंशादिसंयुतम्।
शुद्धाभिः पुष्पमालाभिः पत्रच्छेदैरथार्चयेत् ॥
हेमपट्टैश्च मकुटैः पर्णैर्हेमविनिर्मितैः।
हेमदूर्वाङ्कुरैर्हेमलक्ष्मीपुष्पैरनेकशः ॥
भूषयेच्चन्द्रखण्डेन हेमपुष्पैरनेकशः।
त्रिसरेणोत्तरीयेण कटिसूत्रेण साधकः ॥'
'पिण्डिकारूपिणीं देवीं स्नापयेत्तन्मनुं स्मरन्।
दत्त्वा जातेन पाद्यं तु पादयोस्तन्मुखेषु च ॥
आचामान्ते च मूर्धाद्यैः शिरस्यर्घ्यं प्रदापयेत्।'
'निर्धूमज्वलदङ्गारपूर्णपात्रोदरे भृशम्।
दह्यमानेन धूपेन धूपयेत्तदनन्तरम् ॥
सुरूपां धीरनिर्घोषां घण्टां वामेन पाणिना।
वादयन्सर्वदा धूपमुत्क्षिपेदस्त्रचोदितम् ॥
कपिलाघृतसंपूर्णैः कर्पूरागरुवर्तिभिः।
अनिर्वाणप्रदीपैश्च चक्रतोरणपूर्वकैः ॥
त्रिशूलदीपिकाभिश्च दीपमालाभिरेव च।
अन्यैर्नानाविधैर्दीपैर्ज्वालयेत्तु समन्ततः' ॥
'प्रभूतैः स्नेहसंपूर्णैर्ज्वलद्भिर्दीपकैः स्थिरैः।
कुर्यादारात्रिकं पश्चात्सद्वर्त्या प्रतिबोधितैः ॥
यथाङ्गं भस्मनालभ्य तिलकैर्वा त्रिपुण्ड्रकैः।'
(**पूर्वकामिके** ४.४०३ उ०–४०५; ४१०, ४११ पू०; ४२४–४२९; ४३४, ४३५ पू०; ४४१–४४४; ४४६, ४४७ पू०)
[5] पञ्चाङ्गं — ज;
'मूर्ध्ना वदनहृद्गुह्यपादाः पञ्चाङ्गसंस्थिताः'
(**रौरवोत्तरे** ९.२२ पू०)
[6] रुद्रसूक्तम् (**याजुषमन्त्ररत्नाकरे** पृ० ९०)
[7] **ऋग्वेदे** पञ्चममण्डलान्ते विद्यमाने खिलभागे (श्रीसूक्ते) ९.

स्नापयेद्देवदेवेशं [1]तत्तन्मन्त्रेण देशिकः ।
[2]हिरण्यवर्णेति मन्त्रेण हेमरत्नोदकं तथा ॥१८१॥
[3]महाव्योमेति मन्त्रेण शुद्ध[4]तोयाभिषेचनम्[5] ।
[6]वस्त्रेण मार्जनं कुर्याल्लिङ्गपीठे[7] तथैव च ॥१८२॥
ईशानेन तु मन्त्रेण पुष्पं शिरसि निक्षिपेत् ।
वस्त्रं तु दापयेच्छम्भोरीशानेन तु मन्त्रतः ॥१८३॥
उपवीतोत्तरीयं च भूषणं गन्धपुष्पकम् ।
दापयेद्धृदयेनैव [8]पश्चाद्घण्टां तु ताडयेत् ॥१८४॥
[9]ब्रह्मणा च पटं नीत्वा[10] धूपदीपं प्रदापयेत् ।
पुनराचमनं दत्त्वा अर्घ्यं सद्येन दापयेत् ॥१८५॥
नैवेद्यं दापयेत्पश्चाद्धृन्मन्त्रेणैव देशिकः ।
[11]अस्त्रेणोद्वर्तनं कुर्यात्ताम्बूलं तु निवेदयेत् ॥१८६॥
[12]पश्चान्नीराजनं कुर्याच्छास्त्रदृष्टेन कर्मणा ।
[13]त्रियम्बकेति मन्त्रेण [14]भस्मानि दापयेत्प्रभोः ॥१८७॥
[15]प्रस्थस्य द्विफलं चैव त्रिफलं वा चतुष्फलम् ।
[16]फलस्य द्विगुणं पत्रं चूर्णयुक्तं [17]सदेलकम् ॥१८८॥
मातुलङ्गफलैर्युक्तं नालिकेरफलैर्युतम् ।
[18]मुखवासं [19]ददेत्पश्चात्पञ्चवक्त्रेषु बुद्धिमान् ॥१८९॥

---

[1] तत्त्वमन्त्रेण — ज.

[2] ऋग्वेदे पञ्चममण्डलान्ते ध्रियमाने खिलभागे (श्रीसूक्ते) १.

[3] महाव्योमेति मन्त्रेण–व्योमव्यापिमन्त्रेण; व्योमव्यापिमन्त्रविवरणम् (**मतङ्गपारमेश्वरे** क्रियापादे १.६० उ० – ११७, **रौरवागमे** विद्यापादे दशमपटले च द्रष्टव्यम्).

[4] ०तोयेनाभिषेचयेत् — ज.

[5] अत्र कुर्यादिति शेषः ।

[6] अङ्गवस्त्रं तथा कुर्यात् — ज; अत्र पाठः 'मार्जयेच्छुद्धवाससा' इति पूर्वकामिकमनुसृत्य साधितः ।

[7] ०पीठं — ज.

[8] पञ्चघण्टां — ज.

[9] ब्रह्ममन्त्रेण पटं — ज.

[10] 'क्षिप्त्वा' इति पाठश्चेत्सुष्ठु ।

[11] अस्त्रेनोद्वर्तनं — ज;
'तृप्तावाचमनं दद्याद्धस्तोद्वर्तनपूर्वकम् ।
मुखवासं च ताम्बूलं देवयोग्यं प्रदापयेत् ॥'
(**पूर्वकामिके** ४.४९९ उ०, ५०० पू०)

[12] 'नीराजनं ततः कुर्यात्पुष्पार्घ्यं पात्रके क्षिपेत् ।
तन्मध्यमे यजेदस्त्रं गन्धपुष्पादिभिर्बुधः ॥
अघोरेण तथा तिस्रो भ्रामयेल्लिङ्गमूर्धनि ।
जलेन निक्षिपेदर्घ्यं हृदा संप्रोक्षयेच्छिवम् ॥
दर्शयेल्लिङ्गमुद्रां तु मन्त्रेण नयनेन च ।
सौख्यं कुर्यात्तदन्ते तु शास्त्रदृष्टेन कर्मणा ॥'
(**पूर्वकारणे** ३०.४०२ उ०–४०५ पू०)

[13] **तैत्तिरीयसंहिता** १.८.६.१०; त्र्यम्बकेति — ज.

[14] भस्मना दापये प्रभुम् — ज.

[15] प्रस्थस्य–प्रस्थपरिमितनिवेदनस्य

[16] फलस्या द्वि — ज.

[17] सतल्लिकम् — ज.

[18] एतद्विषये **अजिते** २२.१३८–१४१ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[19] ततो पश्चात् — ज.

लवङ्गं चैव कर्पूरं [1]पलत्रयसमन्वितम् ।
[2]तस्य चूर्णं ततः कृत्वा मधुशर्करमेव च ॥१९०॥
संयुक्तभागमेकं स्याद्दापयेच्छिवसंनिधौ ।

[3][बलिविधिः, नित्याग्निकार्यविधिश्च]

द्वारादिबलिपीठान्तं तदन्ते दापयेद्बलिम् ॥१९१॥
नित्याग्निकार्यं कुर्वीत; [4]पश्चादावरणान्न्यसेत् ।

[5][आवरणार्चनम्]

[6]न रुद्रः शक्तिहीनस्तु [7]रुद्रहीना न शक्तयः ॥१९२॥
[8]पूज्य एव शिवः प्रोक्तः पूजकः शक्तिरुच्यते ।
पुष्पेषु गन्धवज्ज्ञेयं तिलेषु तैलवत्तथा ॥१९३॥
आकाशे वायुवत्प्रोक्तं [9]धूमध्वजे तु चोष्णवत् ।
स्वशक्ति[10]सहिता देवाः शिवमेव [11]निरीक्ष्य वै ॥१९४॥

[12][गर्भावरणम्]

ईशानं कर्णिकामध्ये पुरुषं पूर्वतो यजेत् ।

---

[1] फलत्रय० — ज.

[2] तस्मिन्चूर्णं — ज.

[3] 'द्वारस्य दक्षिणे पार्श्वे नन्दिने बलिमाचरेत् ।
महाकालाय वामे तु वृषभाय तदग्रतः ॥
ताम्बूलं दापयेत्पश्चात्सद्येन तु विशेषतः ॥
परिवारबलिं दत्त्वा नित्याग्निं कारयेद्बुधः ॥
सर्वलोकहितार्थं तु नित्योत्सवमतःपरम् ।'
(**पूर्वकारणे**, ३०, ४००–४०२ पृ०)

[4] 'पश्चादावरणान्' इत्यत्र आवरणशब्दः पुँल्लिङ्गे प्रयुक्तः ।

[5] एतद्विषये अजिते २०.२१८–२२५ पृ० श्लोकास्तदीयटिप्पणी, रौरवे क्रियापादे १०.६२ उ०–६६ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[6] न रुद्र शक्तिहीनं तु — ज.

[7] रुद्रहीनं तु — ज;
'न शिवेन विना शक्तिर्न शक्तिरहितः शिवः ।
पुष्पेषु गन्धवज्ज्ञेया तिलेषु तैलवत्तथा ॥
देहे च प्राणवच्छक्तिस्तस्माद्युक्तं प्रपूजयेत् ।'
(**पूर्वकारणे** पृ० २३८ श्लो० १०, ११ पू०);
'वह्नेरुष्णत्ववच्छक्तिरविनाभाविनी विभोः ।
शक्तिहीनः शिवो नास्ति शिवहीना न शक्तिका ॥
एते समस्तदेवाश्च शक्तिशम्भुमयाः स्मृताः ।'
(**सुप्रभेदे** ज्ञानपादे १.४६, ४७ पू०);

[8] पूजयेव शिवं प्रोक्तं पूजकं — ज.

[9] धूम्रवद्धुज उष्णवत् – ज.

[10] रहिता — ज.

[11] निरीक्षणाः — ज; 'न' मातृकामनुसृत्यात्र पाठः शोधितः ।

[12] 'सद्यं पश्चिमतोऽभ्यर्च्य वामदेवं तथोत्तरे ।
अघोरं दक्षिणेऽभ्यर्च्य पूर्वे तत्पुरुषं स्मरेत् ॥
ईशानमीशदेशे तु कर्णिकोर्ध्वे शिवं यजेत् ।
अम्बिकां वरुणदेशे तूत्तरे तु गणाम्बिकाम् ॥

दक्षिणे घोरमभ्यर्च्य वामदेवं तथोत्तरे ॥१९५॥
सद्योजातं तु वारुण्यां तत्तन्मन्त्रेण संयजेत्।
[१]अम्बा चैव [२]गणाम्बा च गङ्गा [३]चोमा तथा मता ॥१९६॥
गौरी चैव तु पञ्चैताः[४] सद्यादीशान्तशक्तयः।
[५]आग्नेय्यां हृदयं चैव [६]ईशाने तु शिरो यजेत् ॥१९७॥
नैर्ऋत्यां तु [७]शिखेज्या तु वायव्यां [८]कवचं तु वै।
नेत्रमीशानदिग्भागे [९]अस्त्रमाशासु संयजेत् ॥१९८॥
[१०] शिवानन्दा महेशी च [११]रौद्री गौरी सुरेश्वरी।
[१२] हृदयाद्यस्त्रपर्यन्तं शक्तयः परिकीर्तिताः ॥१९९॥
गर्भावरणमेवं तु विद्येशावरणं शृणु।

[१३][ विद्येशावरणम् ]

अनन्ता[१४]द्यष्टमूर्तीस्तु पूजयेच्छिवसंनिधौ ॥२००॥

---

याम्ये भागीरथीं चैव पूर्वदेशे तु गौरिकाम्।
उमां वै त्वीशदेशे तु सद्यादीशानमन्त्रतः ॥
स्वनाममन्त्रैरभ्यर्च्या ब्रह्मपञ्चकशक्तयः।
हृदय चग्निदेशे तु शिखां निर्ऋतिदेशके ॥
कवचं चानिलदेशे तु ऐशान्ये शिर अर्चयेत्।
नैर्ऋते चास्त्रमभ्यर्च्य नयनं त्वीशगोचरे ॥
वामिनीं चाग्निदेशे तु नीलिनीं निर्ऋतिगोचरे।
चक्रीं चानिलदेशे तु पाशाङ्गीमीशगोचरे ॥
खङ्गिनीं नैर्ऋते देशे जम्भिनीमीशगोचरे।
गर्भावरणदेवांस्तु स्वस्वनाम्ना तु पूजयेत् ॥'
(**सूक्ष्मे** ५.६४–७०);
एतद्विषये पुनः **मतङ्गपारमेश्वरे** क्रियापादे ८३ उ०–९१ श्लोकाः, **सार्धत्रिशतिकालोत्तरे** ७.७, ८ श्लोकौ च द्रष्टव्याः।

[१] 'अम्बा गणाम्बिका चैव गङ्गा गौरी उमा तथा।
वामिनी नीलिनी चक्री शङ्खी खड्गी त्वसी तथा ॥
एता एकादश प्रोक्ता गर्भावरणशक्तयः।'
(**मकुटे** ४.५९० ५९१ पू०);
'अम्बी गणाम्बी गङ्गा च गौरी चैव उमा तथा।
वामी नीली च चक्राङ्गी पाशाङ्गी खड्गकाम्बिका ॥'
('कालोत्तरे' इति **सकलागमसारसंग्रहे** पृ० ९४);
कम्बी — ज.

[२] गणाम्बी — ज.
[३] च यमुना तथा — ज.
[४] पञ्चैते — ज.
[५] आग्नेयं हृदयेनैव — ज.
[६] ईशानेन शिरो — ज.
[७] शिखायां तु — ज.
[८] कवचेन तु — ज.
[९] अस्त्रमीशासु — ज.
[१०] शिवानन्दमहेशी — ज.
[११] रौद्रि गौरि सुरेश्वरि — ज.
[१२] हृदयादस्त्र — ज.
[१३] 'अनन्तेशं तथा भूमिमिन्द्रदेशे समर्चयेत्।
स्वाहादेवीं च सूक्ष्मं च अग्निदेशे समर्चयेत् ॥
शिवोत्तमं स्वधादेवीं याम्यदेशे यजेद्बुधः।
एकनेत्रं च क्षान्तिं च नैर्ऋते च समर्चयेत् ॥
एकरुद्रं च पुष्टिं च वरुणे तु समर्चयेत्।
त्रिमूर्तिं च श्रुतिं चैव वायुदेशे समर्चयेत् ॥
श्रीकण्ठं कीर्तिशक्तिं च उत्तरे तु यजेद्बुधः।
मेधाशक्तिं शिखण्डिं च ऐशान्यां संप्रपूजयेत् ॥
विद्येशावरणं प्रोक्तं स्वस्वनाम्नैव पूजयेत्।'
(**सूक्ष्मे** ५.७१–७५ पू०)
[१४] ०दष्टमूर्तिस्तु — ज.

[1]वामाद्या अष्टशक्तीश्च द्वितीयावरणं परम्।
विद्येशावरणं ह्येवं गणेशावरणं शृणु ॥२०१॥

[2][गणेशावरणम्]

उमा[3]चण्डेशनन्दीशमहाकाल[4]वृषांस्तथा।
[5]गणेशं चैव भृङ्गीशं महासेनं [6]च संयजेत् ॥२०२॥
[7]भद्रा च देव[8]याना च कुन्दी काली च मन्त्रिणी।
मालिनी च उमा चैव [9]यामिनी चण्डान्तशक्तयः ॥२०३॥
गणेशावरणं ह्येवं लोकेशावरणं शृणु।

[10][लोकेशावरणम्]

[11]इन्द्राग्नी च यमश्चैव [12]निर्ऋतिर्वरुणस्तथा ॥२०४॥

---

[1] वामाद्यष्टशक्तीश्च — ज;
'भूमिः स्वाहा स्वधा क्षान्तिः प्रभा पुष्टिस्तथैव च।
श्रुतिर्मेधा तथाष्टौ च विद्येशानां तु शक्तयः ॥'
(**मकुटे** ४.५९५ उ०, ५९६ पू०);

[2] 'भद्रादेवीं च वृषभं पूर्वदेशे समर्चयेत्।
नन्दिनं कुन्दलीं शक्तिमाग्नेय्यां दिशि विन्यसेत् ॥
गणेशं भृङ्गिणीं चैव दक्षिणे तु यजेद्बुधः।
पद्मिनीं च महाकालं नैर्ऋते तु समर्चयेत् ॥
गुहं च देवसेनां च पश्चिमे तु समर्चयेत्।
भृङ्गीशं ह्लादिनीशक्तिं वायुदेशे समर्चयेत् ॥
गौरीं चोत्तरदेशे तु रूपिणीं चण्डमीशके।
गणेशावरणं प्रोक्तं स्वस्वनाम्नार्चयेत्क्रमात् ॥'
(**मकुटे** ५.७५ उ०–७९पू०);

[3] ०चण्डीशनन्दीशो — ज.

[4] ०वृषस्तथा — ज.

[5] गणेशश्चैव बृङ्गीशो — ज.

[6] च वरं यजेत् — ज.

[7] 'भद्रा च देवयाना च कान्तिः काली च मन्त्रिणी।
मालिनी च विरूपी च मन्दी चण्डान्तशक्तयः ॥'
(**मकुटे** ४.६०६ उ०, ६०७ पू०);
'भद्रा च देवयाना च कुन्दी काली च मन्त्रिणी।
मालिनी च उमा चैव यामिनी चण्डान्तशक्तयः ॥'
('कमलालये' इति **सकलागमसारसंग्रहे** पृ० ९५);
भद्री च — ज.

[8] ०यान कुन्दि — ज.

[9] यमुनि — ज.

[10] 'इन्द्रं च देहिनीं स्वाहाशक्त्याग्निदेवतां तथा।
यमं च कालकण्ठीं च दाहिनीं निर्ऋतिं तथा ॥
वरुणं भोगिनीशक्तिं वायुं चाघोरशक्तिकाम्।
कुबेरं कुम्भिनीशक्तिं हर्षिणीमीशगोचरे ॥
महाविष्णुं च लक्ष्मीं च सावित्रीं च विरिञ्चकम्।
दिक्पालावरणं प्रोक्तमिन्द्रादिषु प्रकल्पयेत् ॥'
(**सूक्ष्मे** ५.७९ उ०–८२ पू०);
'इन्द्रं वज्रायुधं पूर्वे वह्नौ वह्निं सशक्तिकम्।
यमं दण्डधरं याम्ये खड्गं च निर्ऋतिं स्वके ॥
वरुणं पश्चिमे भागे पाशहस्तं जलाधिपम्।
वायुमङ्कुशहस्तं च वायव्यां दिशि पूजयेत् ॥
सोमं च सौम्यदेशे तु गदाहस्तं प्रपूजयेत्।
ईशानमीशदिग्भागे शूलहस्तं प्रपूजयेत् ॥
शची स्वाहा सुदेवी च विलोहिन्याह्वया तथा।
कालकण्ठी च नीली च जितकारिस्तु देविका ॥
शक्तयोऽष्टौ क्रमादेता लोकेशानां प्रकीर्तिताः ॥'
(**मकुटे**, ४.६०८–६१०; ६१३, ६१४ पू०);
'इन्द्रश्चाग्निर्यमश्चैव निर्ऋतिवरुणवायवः।
सोमश्चैव तथेशानो लोकपालाः प्रकीर्तिताः ॥'
'शची पुलोमजा चैव स्वाहा चेति तथा प्रभा।

वायुः कुबेर ईशानो [1]ब्रह्मा विष्णुः प्रकीर्तिताः।
इन्द्राद्यष्टलोकपालान्स्वस्वदिक्षु प्रपूजयेत् ॥२०५॥
ब्रह्माणमीशदिग्भागे [2]विष्णुं च नैर्ऋते यजेत्।
शची पुलोमजा चैव[3] [4]स्वाहा चेति तथा[5]प्रभा ॥२०६॥
कालकण्ठी च नीली च नारी च सुसुकेतिनी।
सरस्वती च लक्ष्मीश्च शक्तयः परिकीर्तिताः॥२०७॥
यथाक्रमं च [6]लोकेशशक्तीः [पूर्वादितो] यजेत्।
लोकेशावरणं ह्येवमस्त्रेशावरणं शृणु ॥२०८॥

[7][अस्त्रेशावरणम्]

[8]वज्रं शक्तिश्च दण्डं च खड्गः पाशस्तथाङ्कुशः[9]।
गदा त्रिशूलं [10]चक्रं च पद्मं चेति [11]दशायुधम् ॥२०९॥
[12]ह्रादिनी [13]हर्षिणी चैव [14]अरिष्टिर्मङ्गिनी तथा।

---

कालकण्ठी च नीली च नारी च सुसुकेतिनी ॥'
(**सकलागमसारसंग्रहे** पृ० ९५, ९६);
'इन्द्रानलयमाश्चैव राक्षसो वरुणस्तथा।
वायुः सोमस्तथेशानो ब्रह्मा विष्णुश्च देवताः॥'
'विलासिनी रूपिणी च धारिणी विमुखी तथा।
निर्मुखी दुर्मुखी चैव मतिभ्रंशी सुमालिनी ॥
सरस्वती च लक्ष्मीश्च शक्तयः परिकीर्तिताः।
विपुला च शचीदेवी स्वधा स्वाहा च पार्श्वयोः।
नीली च कालकण्ठी च जालकेशी सुकेशिनी ॥
हर्षिणी च हृदाद्री च मङ्गिनी मांसिनी तथा।
ऋद्धिश्चैव निवृत्तिश्च स्वरूपी च निवृत्तिका ॥
सावित्री भारती चैव श्रीदेवी पृथिवी तथा।
इत्येवं लोकपालानां शक्तिद्वयमुदाहृतम्।'
(**पूर्वकारणे** २४.५१ उ०, ५२ पू०; ५३–५७ पू०)

[11] इन्द्राग्नी यम० — ज.

[12] नैर्ऋतीवरुण — ज.

[1] लोकपालाः प्रकीर्तिताः। — ज.

[2] विष्णु नैर्ऋतो — ज.

[3] शचीदेवि पुलोमा च — ज.

[4] स्वाहाश्चेति — ज.

[5] ०यभौ — ज.

[6] लोकेशा शक्तयो — ज.

[7] 'कुलिशं पूर्वतोऽभ्यर्च्य शक्तिं चैवाग्निगोचरे।
सदण्डं याम्यदेशे तु खड्गं निर्ऋतिगोचरे ॥
पाशं वै वारुणे देशे चाङ्कुशं वायुदेशके।
गदां चैवोत्तरे देशे त्रिशूलमीशगोचरे ॥
त्रिशूलवामपार्श्वे तु पद्मायुधमथार्चयेत्।
खड्गस्य दक्षिणे पार्श्वे चक्रायुधं समर्चयेत् ॥
ऐन्द्रदेशे प्रसन्नात्मा कोपात्मा याम्यदेशके।
गुणात्मा नैर्ऋते देशे वारुणे कोमलात्मनी।
विषात्मी वायुदेशे तु विकृतात्मीशगोचरे ॥
महात्मी चक्रशक्तिश्च मङ्गलाख्याब्जशक्तिका।
अस्त्रेशावरणं प्रोक्तं क्रमेणैव समर्चयेत् ॥'
(**सूक्ष्मे** ५.८२ उ०–८७);

[8] 'वज्रं शक्ति च दण्डं च खड्गं पाशाङ्कुशं तथा।
गदा त्रिशूलं चक्रं च पद्मं चैव दशायुधम् ॥'
(**पूर्वकारणे** २४.४९);
वज्रशक्ति च — ज.

[9] खड्गं पाशं तथाङ्कुशम् — ज.

[10] शङ्खं च — ज.

[11] तथायुधम् — ज.

[12] 'कालिनी च विरूपी च धारिणी विमुखी तथा।
नीलिनी सुमुखी चैव मर्दिनी भृङ्गमालिनी ॥
एषा शक्तिरायुधानां स्वनामाद्येन पूजयेत्।'
(**मकुटे** ४.६२२, ६२३ पू०);
'ह्रादिनी हरणी चैव अरिष्टी मङ्गिनी तथा।

रुद्री चैव निरुद्री च जातका चित्स्वरूपिणी ॥२१०॥
महालक्ष्मीर्मङ्गलाख्या प्रोक्ताः शक्तय एव हि।
[1]अस्त्रशक्तीरिति [2]प्रोक्ता अर्चयेद्देवसंनिधौ ॥२११॥
[3]आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका।
सर्वभूतालयं प्रोक्तं लयनाल्लिङ्गमुच्यते ॥२१२॥

इति रौरवतन्त्रे क्रियापादे नित्यपूजाविधिः
एकोनषष्टितमः पटलः ॥

---

ऋद्धा चैव निरुद्धी च जातकाशी स्वरूपिणी ॥
अस्त्रशक्तिरिति प्रोक्ता अर्चयेद्देवसंनिधौ ॥'
('कामिके' इति **सकलागमसारसंग्रहे** पृ० ९७)
[13] हर्षणी — ज.
[14] अरिष्टिमङ्गिरा — ज.

[1] अस्त्रेशक्ति० — ज.
[2] प्रोक्तमर्चयेद्देवि० — ज.
[3] आकाशलिङ्ग० — ज;
'आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका।
आलयः सर्वभूतानां लयनाल्लिङ्गमुच्यते ॥'
(**शिवधर्मे** पूर्वे ३.२६)

## षष्टितमः पटलः

### [१]मठप्रतिष्ठाविधिः

[२][मठप्रवेशः शिवकुम्भस्थापनं च]

**प्रतिष्ठादिदिने रात्रौ [३]प्रवेशश्चाभिधीयते ।**
**मण्टपादीन्विधायाथ शिवकुम्भं च[४] तद्गतम् ॥१॥**
**[५]विलिप्य गोमयेनात्र सबाह्याभ्यन्तरं [६]मठम् ।**
**[७]पुष्पस्त्रग्वस्त्रभूषाढ्यं कृत्वा तोरणभूषितम् ॥२॥**
**सबन्धुर्यजमानस्तु देशिकादिपुरःसरः ।**
**वस्त्रयुग्मावृतं स्कन्धे[८] शिवकुम्भं द्विजन्मनः[९] ॥३॥**
**वेदवाद्यरवैश्चैव मठं कृत्वा प्रदक्षिणम् ।**
**[१०]किंचिद्विलम्ब्य तस्याग्रे देशिकं तपसान्वितम् ॥४॥**
**मठं प्रवेशयेत्[११]कर्ता सुलग्ने कृतमङ्गलः ।**
**चतुष्के विन्यसेत्कुम्भं धान्यस्थमु[द]गाननम् ॥५॥**

[१२][दक्षिणादानम्]

**दक्षिणां च [१३]ततो दद्याद्विप्र[१४]दैवज्ञशिल्पिनाम् ।**

---

[१] अयं पटलः आर् इ ३२५१९ इत्यङ्किते ताल-पत्रकोशे ६६तमे पत्रे दृश्यते ।; एतस्मिन्विषये **अचिन्त्यविश्वसादाख्ये** ७३, उत्तरकारणे ९८, **सूक्ष्मे** ७९ पटला द्रष्टव्याः ।

[२] 'शिवकुम्भं च संस्थाप्य लेपयेद्गोमयेन तत् ।
बाह्ये चाभ्यन्तरे चापि पुष्पगन्धसुशोभितम् ॥
पताकातोरणादींश्च कुर्यात्तत्र विशेषतः ।
सुहृद्भिर्बहुभिः सार्धं तत्कर्ता गुरुपूजकः ॥
यजमानः सुलग्ने तु स्नातश्च कृतमङ्गलः ।
चतुष्कुम्भान्न्यसेद्धीमान्वेदिकायामुदङ्मुखान्'
(**अचिन्त्यविश्वसादाख्ये** ७३.१३ उ०–१६ पू०)

[३] प्रवेशं चाभि — झ.

[४] अत्र 'संपाद्य' इति पदमध्याहृत्य व्याख्येयम् ।

[५] विलिप्ते होमयेत्तत्र — झ; सोमशम्भुपद्धतिमनुसृत्यात्र पाठः साधितः ।

[६] 'आगन्तुकानां सर्वेषां नैष्ठिकानां निवासभूः ।
अन्नपानीयसंयुक्तं केवलं वा मठं स्मृतम् ॥'
(**अचिन्त्यविश्वसादाख्ये** ७३.३);

[७] पुष्पसृयस्त्र भूषाढ्यां — झ.

[८] अत्र 'वाहयित्वा' इति पदमध्याहृत्य 'द्विजन्मनः स्कन्धे शिवकुम्भं वाहयित्वा' इति व्याख्येयम् ।

[९] शिवकुम्भं च ज . . . — झ; अत्र पाठः सोमशम्भुपद्धतिमनुसृत्य साधितः ।

[१०] किंचिद्वीळबुदस्याग्रे — झ; अत्रापि पाठः सोमशम्भुपद्धतिमनुसृत्य साधितः ।

[११] कर्त लग्ने च कृ० — झ.

[१२] 'ब्राह्मणानां च दानं च दैवज्ञाय विशेषतः ।
शिल्पिने च ततो दद्याद् यथाविभवविस्तरम् ॥'
(**अचिन्त्यविश्वसादाख्ये** ७३.१६ उ०, १७ पू०);

[1][मण्डले कुम्भादिपूजा]

पूर्वतः पूजयेत्कुम्भान्वास्तुं द्विकरमण्डले[2] ॥६॥
[3]जगत्यां पादपीठे च [4]जङ्घायां च कपोतके।
[5]छदने च यथासंख्यं निवृत्त्यादिकला न्यसेत् ॥७॥
ततः शक्तिं समभ्यर्च्य हृदैव द्वारपालकान्।
[6]वेद्यां वाह्य स्वसंज्ञाभिः पूजयेद्ध्यानपूर्वकम्[7] ॥८॥

[8][होमो दिग्बलिः कुम्भतोयाभिषेकश्च]

[9]अग्न्यागारमथासाद्य तर्पयेद्वास्तुदेवताः।

---

'आचार्यसाधकादीनां दापयेद्वस्त्रभूषणम्।'
**सूक्ष्मे** ७९ (टि. १९१. पृ० ४१६)

[13] तते — झ.

[14] ०देवज्ञ० — झ.

[1] 'पूजयेत्पूर्वतः कुम्भान्वास्तुं द्विकरमण्टपे।
जगत्यां पादपीठे च जङ्घा चैव[यां च] कपोतके ॥
भेदेन च[छदने च]यथासंख्यं निवृत्त्यादिकला न्यसेत्।
हृदयेन समभ्यर्च्य शक्तिदिक्पालकानपि ॥
व्या[प्यावाह्य]स्वसंज्ञाभिः पूजयेद्ध्यानपूर्वकम्।'
(**अचिन्त्यविश्वसादाख्ये** ७३.१७ उ०–१९);
'लाजपुष्पैश्च दर्भैश्च विकिरेत्तु विशेषतः।
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् ॥
ससूत्रान्सापिधानांश्च वस्त्रयुग्मेन वेष्टितान्।
फलपल्लवसंयुक्तान्स्वर्णरत्नादिगर्भितान् ॥
नव कुम्भांश्च संस्थाप्य मध्यकुम्भे शिवं यजेत्।
पूजां पूर्वोक्तवद्धीमान्गन्धादिभिर्यथाक्रमम् ॥
विद्येशान्परितो यष्ट्वा पूर्वादीशान्तक क्रमात्।
गन्धपुष्पैश्च धूपैश्च नैवेद्यान्तैः प्रपूजयेत् ॥
तोरणं द्वारकुम्भांश्च यागपूजां समाप्य च'
(**सूक्ष्मे** ७९ (टि. १९१. पृ. ४१६)

[2] वास्तूंश्चाङ्गारमण्डले — झ; सोमशम्भुपद्धत्यनुसारेणात्र पाठः संघटितः।

[3] जगद्यां — झ.

[4] जङ्घायाश्च — झ.

[5] विताने च तथा संख्या — झ; सोमशम्भुपद्धतिमनुसृत्यात्र पाठः साधितः।

[6] व्याव्यावाह्या — झ; अत्रापि सोमशम्भुपद्धतिमनुसृत्य पाठः साधितः।

[7] एतत्पटलस्थाः १–८ श्लोकाः सोमशम्भुपद्धतिस्थमठप्रतिष्ठाविधिश्लोकाश्च प्रायेण सदृशा दृश्यन्ते।

[8] 'वह्निगेहं समासाद्य तर्पयेद्वास्तुदेवताः।
निवृत्त्यादिकलाश्चापि द्वारपालान्स्वमन्त्रकैः ॥
दत्त्वा दिग्बलिमाचम्य सकलीकृतविग्रहः।
मधुराम्रकपित्थैश्च बीजपूरफलैस्तथा ॥
बदरामलवार्ताकनारङ्गलिकुचादिभिः।
संस्थाप्य[संस्नाप्य] स्नापयेत्कुम्भजलैरुपरि चालयम् ॥'
(**अचिन्त्यविश्वसादाख्ये** ७३.२०–२२);
'चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं तथा।
अघोरास्त्रं क्षुरिकास्त्रं जप्त्वा वै दक्षिणोत्तरे ॥
नृत्तगेयसमायुक्तमाचार्यो होममाचरेत्।
संस्कृत्य विधिना कुण्डं शिवाग्निं विधिना नयेत् ॥
अग्निमध्ये समावाह्य शिवमावरणैर्युतम्।
दत्त्वा नैवेद्यधूपादीन् मूलेनाज्यं तु होमयेत् ॥
समिल्लाजांश्च सक्तूंश्च सर्षपं च यवं तिलम्।
वेणुमुद्गं च निष्पावं माषमेकादश क्रमात् ॥
ईशानाद्यस्त्रपर्यन्तं मन्त्रमेकादशं हुनेत्।
शतमर्धं तदर्धं वा प्रतिद्रव्यं तु होमयेत् ॥

निवृत्त्यादिकलाश्चापि द्वारपालान्स्वशम्बरैः ॥९॥
दत्त्वा दिग्बलिमाचम्य सकलीकृतविग्रहः ।
बीजपूराम्रमालूरैर्नारङ्गैश्च कपित्थकैः ॥१०॥
बदर्यामलवार्ताकैर्दाडिमैः सकपर्दकैः ।
स्नापयेच्च घटाम्भोभिरुपरिष्टान्मठालयम् ॥११॥

[1] [मठस्य कर्तृनामकरणम्]

विभूतिस्थितिहेत्वर्थं संतानादिविवृद्धये ।
तदर्थं कीर्तयेन्नाम कर्तृनामाङ्कितं मठम् ॥१२॥

[2] [गर्भस्थापनम्]

गर्भन्यासं प्रवक्ष्यामि [3]शृणु भार्गव सुव्रत ।

---

द्रव्यान्ते व्याहृतिं हुत्वा महापूर्णाहुतिं हुनेत् ॥
एवं जागरणं रात्रौ प्रभाते स्नानमाचरेत् ॥
नित्यकर्म पुरा कृत्वा मठालयं प्रवेशयेत् ।
मठस्य प्रस्तरे देशे त्रिसूत्रैर्दर्भमालया ॥
वस्त्रयुग्मेन परितो वेष्टयेद्दिग्ध्वजेन च ।
वितानैश्च समाच्छाद्य मठस्योर्ध्वमलंकरेत् ॥
पञ्चमृद्भिश्च काषायैर्गव्यैश्चैवाभिषेचयेत् ।
मठान्तर्जगतीकण्ठपट्टिकाङ्घ्रिकपोतकम् ।
एतेषु पञ्चस्थानेषु सुगन्धेन विलिप्य च ॥
निवृत्त्यादिकलामन्त्रानर्चयित्वा क्रमेण तु ।
धूपदीपादिकं दत्त्वा द्वारे द्वाराधिपान्यजेत् ॥
ततो यागं समापाद्य पूर्ववत्पूजयेत्क्रमात् ।
प्रायश्चित्तं ततो हुत्वा अग्निस्थान्योजयेद्घटे ॥
वह्निं विसृज्य परिधिविष्टरस्थान्विसर्जयेत् ।
शालां प्रवेशयेत्कर्ता सुमुहूर्ते सुलग्नके ॥
दानं कुर्याद्विशेषेण यथावित्तानुसारतः ।
प्रधानकुम्भं शिरसा [वाहयित्वा] स्वबन्धुभिः ॥
मठं प्रदक्षिणं कृत्वा वाद्यमङ्गलघोषकैः ।
निधाय कुम्भं संस्थाने कर्ता नत्वा घटस्थितम् ॥
वेद्या उपरि मध्ये तु गुरुः संयोज्य सेचयेत् ।
तत्तत्कुम्भजलेनैव तत्तत्स्थानेऽभिषेचयेत् ॥
नैवेद्यं धूपदीपादीनुपचारान् समाचरेत् ।
सर्वद्रव्यसमृद्ध्यर्थं सर्वज्ञानफलार्थकम् ॥
मठं प्रवेशयेत्कर्ता फलद्रव्याणि संस्पृशेत् ।
उत्तराभिमुखः स्थित्वा चिन्तयेत्परमेश्वरम् ॥
गुरुसमीपमासाद्य पूजयेद्भक्तिमार्गतः ।
गुरुं प्रणम्य तत्कर्ता तस्मै दद्यात्सुदक्षिणाम् ॥
साधकाचार्यभक्तानां दक्षिणां दापयेत्ततः ।'
(**सूक्ष्मे** ७९ (टि. १९१ पृ० ४१७, ४१८)

[1] प्राक्तनश्लोकाष्टकस्य सोमशम्भुपद्धतिस्थमठप्रतिष्ठाविधिश्लोकसदृशत्वात् स भागो मातृकायामविद्यमानस्तदीयैः श्लोकैरेव पूरितः ।
[1] 'विभूतिस्थिरहेत्वर्थं संतानादिविवृद्धये ।
कीर्त्यर्थं कीर्तयेन्नाम कर्तृनामपुरःसरम् ॥
एकं मठं सुसंज्ञातं कुर्याद्वै देशिकोत्तमः ।
एवं मठप्रतिष्ठा च कार्या वै नन्दिकेश्वर ॥'
(**अचिन्त्यविश्वसादाख्ये** ७३.२३, २४);
'मठस्य नाम कृत्वा तु कर्तृनामाङ्कितं मठम् ।
एवं यः कुरुते मर्त्यः सोऽन्ते सायुज्यमाप्नुयात् ॥'
**सूक्ष्मे** ७९ (टि. १९१. पृ० ४१९)

[2] एतस्मिन्विषये **अंशुमत्काश्यपे** २५, **अजिते** १७, **पूर्वकामिके** ३१, **पूर्वकारणे** ६, **दीप्ते** ४, **सुप्रभेदे** क्रियापादे २० पटला द्रष्टव्याः ।

[3] शृणु कौशिक सुव्रत — झ.

[1]आलये विन्यसेन्मन्त्री गर्भं तन्त्रेण मन्त्रतः ॥१३॥
वास्तु गर्भेण संयुक्तं कुरुते सर्वसंपदः[2]।
[3]यद्यत्क्रियाविधिं कुर्यात्तद्गर्भाविष्ट उच्यते ॥१४॥
प्रासादे मण्टपे चैव प्राकारे गोपुरे तथा।
महाविमाने शालायां [4]शयस्थाने च विन्यसेत् ॥१५॥
[5]प्रासादस्योचितं गर्भस्थापनं वक्ष्यतेऽधुना।
द्वारस्य दक्षिणस्थाने वास्तु[6]मूले तु विन्यसेत् ॥१६॥
[7]कवाटयोरर्गलयोर्विन्यसेत्तु विशेषतः।
सौवर्णं [8]राजतं ताम्रं कांस्यं वापि यथाक्रमम्[9]॥१७॥

इति रौरवे क्रियापादे [10]मठप्रतिष्ठाविधिः षष्टितमः पटलः।

[1] आलयेद्विन्यसेन्मन्त्रिगर्भमन्त्रेण — झ.

[2] संपदान् — झ.

[3] यच्चत् क्रियाविधिकार्या तद्गर्भाष्टिवमुच्यते — झ.

[4] शयनस्थानविन्यसेत् — झ; शयः—शयनमित्यर्थेऽत्र वर्तते।

[5] प्रासादस्य तु गर्भे यत् स्थापनं — झ.

[6] मूलं तु — झ.

[7] कवटयोरर्गलये विन्यसे तु — झ.

[8] रजितं — झ.

[9] अत्र गर्भन्यासविधिरतीव संक्षेपेण प्रोक्त इति भाति। अयं विषयो 'यथाक्रमम्' इत्यनेन सूच्यते। मठप्रतिष्ठाविधिपटलपुष्पिकायाः प्रागस्य विषयस्य प्रस्तुतत्वाद् मठविषये गर्भन्यासप्रकारोऽवश्यं सूचनीयः सोऽपि विसृष्टः। आगमान्तरेषु गर्भफेलास्थापनं होम इत्यादिविषया वर्ण्यन्ते।

[10] मातृकायां 'मण्टपप्रतिष्ठाविधिः' इति विद्यते।

## एकषष्टितमः पटलः

### [1]अष्टबन्धविधिः

[2]अतः परं प्रवक्ष्यामि अष्टबन्धविधिक्रमम् ।
लिङ्गपीठान्तरे [3]योग्यं [4]गुह्याष्टं चाष्टबन्धनम्[5] ॥१॥
[6]अपक्वं पक्वमेवं तु द्विविधं बन्धयेत्क्रमात् ।

### [7][अष्टबन्धहीने दोषः]

अष्ट[8]बन्धविहीनं तु राजराष्ट्रस्य दोषकृत्[8] ॥२॥

---

[1] अयं पटलः टि. ४९५.१७०–१७३ पृष्ठेषु, टि. ५१६.१६३–१६५ पृष्ठेषु, आर. ई. ३९७६४ इत्यङ्किते तालपत्रकोशे 'गु' इति निर्दिष्टे पत्रे, टि. १००९.१०३–१०५ पृष्ठेषु, आर्. ई. ३६९६७ इत्यङ्किते तालपत्रकोशे ४०–५३ पत्रेषु च दृश्यते। एतस्मिन्विषये **अनलागमे** (टि. १००९.३०४–३१० पृष्ठेषु), **कामिके** (टि. ७५१.११२–११४ पृष्ठेषु), **पूर्वकारणे** १३६ तमे पटले, **उत्तरकारणे** २३, ४२ तमयोः पटलयोः, **चन्द्रज्ञाने** (टि. १००९.१०५–१०८ पृष्ठेषु) **दीप्ते** ५७ तमे पटले, **निश्वासतन्त्रे** (टि. १००९.१००, १०१ पृष्ठयोः), **बिम्बागमे** (टि. १००९.१०२, १०३ पृष्ठयोः), **भीमसंहितायां** (टि. १००९.२१–२४ पृष्ठेषु), **मकुटे** (टि. ४६०.२४–६६ पृष्ठेषु), **योगजे** (टि. १००९.१०८–११० पृष्ठेषु), **वातुले** (टि. ७५१.१११, ११२ पृष्ठयोः), **शर्वोक्ते** (टि. ८२९.८७–९६ पृष्ठेषु), **संतानसंहितायां** (टि. ८२९.१४४–१४७ पृष्ठेषु), **सहस्रे** (टि. ३४.१–१४१ पृष्ठेषु, **स्वायम्भुवे** (टि. १३३.८१–८७ पृष्ठेषु च दृश्यमानोऽष्टबन्धनविधिर्द्रष्टव्यः ।

[2] अथ वक्ष्ये विशेषेण — प.

[3] अत्र 'कर्तुं' इति पदमध्याहृत्य व्याख्येयम् । 'योज्यं' इति पाठश्चेत् सुष्ठु ।

[4] गुह्यानि अष्ट यस्मिस्तदिति बहुव्रीहिसमासोऽत्रावगन्तव्यः । 'गुह्याष्टकं' इत्यस्य पदस्य वृत्तार्थं 'गुह्याष्टं' इति प्रयोग इति भाति ।

[5] ०बन्धकम् — 'ड' पाठान्तरम् । अष्टबन्धनशब्दार्थविवरणम् ——
'अकारः सृष्टिरूपं तु ष्टकारः स्थितिरूपकम् ।
बकारः संहृतिश्चैव तिरोभावोऽन्धकारकः ॥
अनुग्रहो नकारश्च बिन्दुःसर्वत्र साधकः ।
इत्येवं मन्त्रतन्त्रैश्च भावनं संधिबन्धनम् ॥'
(**पूर्वकारणे** १३६.१ उ०–३ पू०)

[6] अपक्वं पक्वमेवं तु द्विविधं बन्धनक्रमम् ।
पक्वं तु पाकयोग्यं स्यादपक्वं मर्दनं भवेत् ॥
पक्वापक्वपदं ज्ञात्वा बन्धयेत्सुदृढं बुधः ।
(**सहस्रे** टि. ३४. पृ० १४);
अपक्वापक्व० — अ, ट, ड; पक्वापक्वभेदं — ठ; पक्वापक्वमेवं — प.

[7] 'अष्टबन्धविहीने च पूर्वे राष्ट्रं विनश्यति ।
आग्नेय्यामग्निदग्धं तु याम्ये च मृतिरुच्यते ॥
ग्रामनाशं तु नैर्ऋत्यां वारुण्यां वर्षवर्जितम् ।
सर्वनाशं तु वायव्यां स्त्रीणां नाशं तु सौम्यके ॥
ऐशान्यां धननाशः स्यात्सर्वदोषः प्रवर्तते ।'
(**पूर्वकारणे** १३६.पृ० ६२३);
'पूर्वे तु कलहं विद्यादाग्नेय्यामग्निदाहकम् ।
याम्ये तु व्याधिपीडा च नैर्ऋत्यां ग्रामनाशनम् ॥

आग्नेय्या[1]मग्निदग्धं च याम्ये[2]व्याधिभिरुच्यते।
[3]ग्रामनाशस्तु [4]नैर्ऋत्यां वारुण्यां वर्षवर्जितम्[5]॥३॥
सस्य[6]नाशस्तु वायव्यां [7]स्त्रीविनाशस्तु सौम्यके।
[8]ऐशान्यामर्थनाशस्तु[9] [10]ऐन्द्रे स्यादाभिचारकम्॥४॥
[11]विदिशि चैव विच्छिन्ने [12]ज्वरमारीप्रवेशनम्।
[13]द्वादशाङ्गुलविच्छिन्ने [14]पर्यष्टकदलान्विते[15]॥५॥
[16]अष्टबन्धविहीने तु [17]नित्यनैमित्तिकेऽपि च।
[18]बलिर्नित्योत्सवं चैव [19]दक्षिणं स्नपनं तथा[20]॥६॥
उपचाराणि सर्वाणि [21]निष्फलत्वमवाप्नुयात्।
[22]ब्रह्मभागे[23] तु निर्माल्यं ब्रह्मवर्गविनाशनम्॥७॥

---

[०] 'वारुण्यां वर्षनाशः स्याद्वायव्यां सस्यनाशनम्।
सौम्ये चैवार्थनाशः स्यादैशान्यां पुत्रनाशनम्॥
परितो बन्धहीने तु सर्वनाशकरं भवेत्।'
(**सहस्रे** टि. ३४. पृ० ३)

[०] ०बन्धविहीने — ञ, ट, ठ, ड; ०बन्धनहीने — प.

[०] दोषकम् — प.

[1] ०मग्निबन्धं वा — ञ, ट, ठ, ड; ०मग्निदग्धं तु — प; 'दग्धं' इत्यत्र भावे क्तप्रत्ययः दाह इत्यर्थः। अत्र 'स्यात्' इति पदमध्याहृत्य व्याख्येयम्।

[2] 'व्याधिभिः' इत्यस्यानन्तरं 'पीडा' इति पदमध्याहृत्य व्याख्येयम्।; यं व्याधिरुच्यते — प.

[3] ग्रामनाशं तु — ञ, ट, ठ, ड; ग्रामनाशं च — प.

[4] नैर्ऋत्यां वारुण्या वर्ष० — ठ.

[5] 'वर्जितम्' इत्यत्र भावे क्तप्रत्ययः; 'वर्जनम्' इत्यर्थः।; वरुणवर्जितम् — प.

[6] ०नाशं तु — ञ, ट, ठ, ड, प.

[7] स्त्रीविनाशं तु — ञ, ठ, ड; स्त्रीविनां तु — ट; स्त्रीनाशं तु — प.

[8] ईशान्ये अर्थ० — प.

[9] ०नाशं तु — ञ, ट, ठ, ड; ०नाशं च — प.

[10] ऐन्द्रस्यादभि — ट; ऐन्द्रस्याष्टाभि० — ठ, प.

[11] विदिग्वं चैव — ठ; विदिग्वन्तेव — प.

[12] 'ट' मातृकायां पञ्चमश्लोकस्य द्वितीयतृतीयपादौ न दृश्येते।; ज्वरमारिविनाशनम् — ञ, ठ; ज्वरमारीविनाशनम् — ड; ज्वरमारिप्रवेशयेत् — प.

[13] द्वादशाङ्गुलि — ञ, ठ.

[14] परियाष्टकतान्वितम् — प.

[15] ०दलान्वितम् — ञ, ट, ठ, ड.

[16] 'अष्टबन्धनहीने तु पूजानैवेद्यमेव च।
बलिर्नित्योत्सवं चैव नमस्कारप्रदक्षिणम्॥
नृत्तगीतं च वाद्यं च नित्यनैमित्तिकं तथा।
उपचाराणि सर्वाणि निष्फलं तु विधीयते॥'
(**पूर्वकारणे** १३६.पृ.६२७); अष्टबन्धनहीने — प.

[17] नित्ये नैमि० — ञ, ठ.

[18] बलिनित्योत्सवं — ञ, ट, ठ, ड, प.

[19] प्रदक्षिणस्नपनं — ठ; प्रदक्षिणं स्नपनं — प; 'प्रदक्षिणं' इत्यत्र 'दक्षिणं' इति वृत्ताय प्रयुक्तमिति भाति।

[20] षष्ठश्लोकस्योत्तरार्धानन्तरं 'ञ, ड' मातृकयोः 'नित्यहोमादिकर्माणि' इति पाद एकोऽधिकतया दृश्यते। 'ट' मातृकायां 'होमादीनि सर्वाणि नित्यनैमित्तिकेऽपि च' इत्यर्धमेकमधिकतया दृश्यते। 'ठ, प' मातृकयोः 'नित्यहोमादिकर्माणि-नित्यनैमित्तिकेऽपि च' इत्यर्धमेकमधिकतया दृश्यते।

[21] निष्पलं तदवाप्नुयात् — ञ, ट, ठ, ड; निष्पलत्वमवाप्नुयात् — प.

[22] 'ञ, ट, ड' मातृकासु ७ उ०--१० श्लोकाः २९

विष्णु[1]भागे तु निर्माल्यं [2]क्षत्रवर्गविनाशनम् ।
[3]कूर्मासने तु निर्माल्यं वैश्यवर्गविनाशनम् ॥८॥
[4]नन्द्यावर्तात्स्रवेत्तोयं शूद्रवर्गविनाशनम् ।

[5][अष्टबन्धनद्रव्याणि]

[6]लाक्षा सर्जरसः सिक्थं कुरुविन्दश्च [7]गुग्गुलुः ॥९॥
गैरिकं [8]गुलतैलं [9]च [10]अष्टबन्धं प्रकीर्तितम् ।
अष्टबन्धं ततः कृत्वा [11]संप्रोक्षणमथाचरेत् ॥१०॥

---

श्लोकानन्तरं दृश्यन्ते ।;
'शक्तिस्थानेषु निर्माल्यं शैवस्त्रीवर्गनाशनम् ।
विष्णुभागे तु निर्माल्यं नृपवर्गविनाशनम् ॥
ब्रह्मभागे तु निर्माल्यं ब्रह्मवर्गविनाशनम् ।
शिलाभागे तु निर्माल्यं गर्भनाशकरं भवेत् ॥
नन्द्यावर्तशिलाभागे दुर्भिक्षं तु प्रजापते ।
कूर्मासने तु निर्माल्यं सर्वनाशकरं भवेत् ॥
स्थले चैव प्रवेशे तु विट्छूद्रसर्वनाशनम् ।
पीठान्तरेषु निर्माल्यं ज्वरमारीप्रवेशनम् ॥'
(**पूर्वकारणे** १३६.पृ० ६२७)

[23] ०भागं — ञ, ट, ठ, ड, प.

[1] ०भागं — ञ, ट, ठ, ड, प.

[2] क्षत्र्यवर्ग० — ठ; क्षत्रिवर्ग० — प.

[3] कूर्मासनं — ञ, ट, ठ, ड, प.

[4] नन्द्यावर्तस्त्रवं तोयं — ञ, ट, ड; नन्द्यावर्तस्यवन्तोयं — ठ; नन्द्यावर्तसुवं तोयं — प; अत्र 'यदि' इति पदमध्याहृत्य 'तोयं यदि स्रवेत्' इति व्याख्येयम् ।

[5] 'द्रव्याणि चाष्टबन्धस्य क्रमाद्वक्ष्ये विशेषतः ।
तैलं तु प्रथमं विद्धि द्वितीयं गौलमुच्यते ॥
तृतीयं गैरिकं विद्याच्चतुर्थं गुग्गुलुं न्यसेत् ।
पञ्चमं सिकतां विद्धि षष्ठं स्यात्सिक्थमुच्यते ॥
सप्तमं स्यात्सर्जरसं लाक्षा चैवाष्टमं स्मृतम् ।'
(**पूर्वकारणे** १३६.पृ० ६३१, ६३२);
एतस्मिन्विषये पुनः **अजिते** १८.२१६–२१८ श्लोकास्तदीयटिप्पणी, तथा रौरवोत्तरे १६.७९, ८० श्लोकौ तदीयटिप्पणी च द्रष्टव्याः ।

[6] लाक्षासर्जरसंयुक्तं कुरुविन्दं च — ञ, ट, ठ, ड; 'प' मातृकायां '९ उ०, १० पू०' स्थाने अधोनिर्दिष्टाः श्लोका दृश्यन्ते —
'कार्पासतूलमहिषाज्य तु शर्कराणां (सुशर्कराभिः ?)
लाक्षामधूच्छिष्टकुरुन्दुरुक्षम् (सुकुन्दुरुष्कम् ?) ।
काषायपाषाणगुलं समानं
लिङ्गस्य पीठस्य बिलाष्टबन्धम् ॥'
'श्वेतगुग्गुलुशर्करचूर्णयो-
र्माहिषं नवनीतं च माक्षिकम् ।
उलूखलै (उलूखले ?) मुसलैर्दृढघट्टना-
त्पाकयोगवशाद्दृढबन्धनम् ॥'
'लाक्षासर्जरपाषाणं ससिद्धं (ससिक्थं ?) कुरुविन्दकम् ।
गुग्गुलुं गैरिकं चैव गुलं तैलमिहोच्यते ॥'
'लाक्षागुग्गुलुपाषाणं शङ्खं च कदलीफलम् ।
मधूच्छिष्टं तु संयुक्तं कारयेत्पञ्चबन्धनम् ॥
'लाक्षागुग्गुलुपाषाणं माहिषं नवनीतकम् ।
त्रिबन्धनमिति ख्यातं पक्वापक्वं तु बन्धयेत् ॥

[7] गुगुलुम् — ञ, ट, ठ, ड.

[8] गुरुतैलम् — ट.

[9] वा — ञ, ट, ठ, ड.

[10] अष्टबन्धशब्दस्यास्मिन्पटले क्लीबे प्रयोगो दृश्यते । आगमेषु लिङ्गादिविषये व्यत्यासेन प्रयोगो बहुशो दृश्यत इत्ययं विषयः **रौरवे** प्रथमभागे ६९ तमे पृष्ठे टिप्पण्यां निर्दिष्टः ।

[11] संप्रोक्षणं धारयेत् — प.

[1][अष्टबन्धने कालोऽङ्कुरार्पणं च]

[2]दिनवारमुहूर्तं च वर्जयेत्तु विचक्षणः।
[3]स षाण्मासावलग्नेषु[4] बन्धयेदङ्कुरं विना ॥११॥
[5]इत ऊर्ध्वं सुबन्धश्चेद्बन्धयेदङ्कुरादिकम्।
सर्वमासेषु कर्तव्यमष्ट[6]बन्धं तु कारयेत् ॥१२॥
[7]स्वयम्भुदैविके चैव [8]मानुषे लिङ्ग उच्यते।

[9][यागमण्डपः, तत्र वेदिकाकुण्डकल्पनं च]

[10]**यागमण्डपमेवोक्तं चतुर्द्वारसमायुतम् ॥१३॥**
**द्वात्रिंशत्स्तम्भमेवोक्तं षोडशस्तम्भमेव वा[11]।**
**द्वादशस्तम्भमथवा तन्मध्ये वेदिसंयुतम्[12] ॥१४॥**

---

[1] 'दिनवारमुहूर्तं च वर्जयेत्तु विचक्षणः।
सर्वमासेषु कर्तव्यमष्टबन्धनकर्म च ॥'
(**पूर्वकारणे** १३६.पृ.६२०);
'दिनवारमुहूर्तं च वर्जयेद्देशिकोत्तमः।
षण्मासादूर्ध्वमेवं चेदष्टबन्धविहीनके ॥
अङ्कुरं मासपक्षर्क्षे अष्टबन्धं समाचरेत्।'
(**चन्द्रज्ञाने** टि. १००९.पृ.१०६);
'दृष्टमात्रेण यत्रैव वसुबन्धं न्यसेद्यदि।
नैव वारक्रमोपेतं मुहूर्तादीनि चाङ्कुरम् ॥
षण्मासोर्ध्वकृतं चेद्धि मुहूर्ताद्यङ्कुरान्वितम्।
विपरीतं न कर्तव्यं कृतं कर्त्रादिनाशनम् ॥'
(**योगजे** टि. १००९ पृ. १०९);

[2] 'ठ' मातृकायां ११–३० पू० श्लोका न दृश्यन्ते।

[3] 'प' मातृकायां ११ उ०, १२ पू० श्लोको न दृश्यते।

[4] स ष्वाम्मासावलग्निषु — ट; अवलग्नेषु—मध्यमेषु;
'मध्यमं चावलग्नं च मध्योऽस्त्री' अमरकोशे १२३२.

[5] इति ऊर्ध्वासुबन्धं चेद् — ञ; इति ऊर्ध्वं सुबन्धं चेद् — ट; इति ऊर्ध्वं सुबन्धयेद्बन्ध० — ड; 'सुबन्धः' इत्यनेन लक्षणयाष्टबन्धो बोध्यत इति व्याख्येयम्।

[6] ०बन्धमिहोच्यते — प.

[7] इदमर्धं 'प' मातृकायां न दृश्यते।; स्वयम्भुर्दैविकं — ञ, ड; स्वयम्भूर्दैविकं — ट;
'पक्वाष्टबन्धनं कुर्यान्मानुषस्य प्रजापते।
आर्षस्य दैविकस्यैवं गाणपस्य तथैव च ॥
मृदुपाकेन कर्तव्यं स्वयमुद्भूतलिङ्गके।
आर्द्रबन्धनकं कुर्यादाचार्यः सम्यगेव तु ॥
द्रव्येषु तैलं सर्पिर्वा संयोज्य पाचयेत्क्रमात्।
अतिपक्वे प्रजानाशः अपक्वे द्रव्यनाशनम् ॥
पक्वं वै पाचयित्वाथ बन्धयेल्लिङ्गपीठयोः ॥'
(**पूर्वकारणे** १३६.पृ० ६३२)

[8] मानुषं लिङ्गमुच्यते — ञ, ट, ड.

[9] 'प्रासादस्याग्रयाम्ये तु पावकेऽपि विशेषतः।
यागमण्डपमेवोक्तं चतुर्द्वारसमन्वितम् ॥
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव वा।
तन्मध्ये वेदिकां कुर्याद्विस्तारार्धं तदुन्नतम् ॥
नवपञ्चैककुण्डं वा दर्पणोदरसंनिभम्।
कूटं वापि प्रपां वापि निच्छिद्रं सुदृढं कुरु ॥
अष्टध्वजसमायुक्तं स्तम्भवेष्टनसंयुतम्।
वितानतोरणैर्युक्तं मङ्गलायुधसंयुतम् ॥'
(**पूर्वकारणे** १३६.पृ० ६२८);

[10] १३ उ०–१५ श्लोकाः 'प' मातृकायामेव दृश्यन्ते।

[11] च — प.

[12] वेदिसमायुतम् — प.

नवहस्ताष्टहस्तं वा सप्तषट्पञ्चहस्तकम्।
[1]यागशालाया विस्तारमायामं च समं भवेत्॥१५॥
[2]अग्निकुण्डैः समायुक्तं स्थण्डिलैश्च समन्वितम्।
वालुकैश्च सितैर्वापि अग्नेरायतनं द्विधा॥१६॥
[3]यागार्थद्रव्यं बहुधा विधिना कारयेद्बुधः।

[4][कुम्भस्थापनं तत्पूजा च]

[5]वेदिमध्ये समायुक्तमष्टद्रोणैश्च शालिभिः॥१७॥
[6]तदर्धैस्तण्डुलैः प्रोक्तं [7]तदर्धैस्तु तिलैरपि।
[8]लाजैः पुष्पैश्च दर्भैश्च [9]कारयेत्तु विचक्षणः॥१८॥
[10]तन्मध्ये तु [11]जलद्रोणपूर्णकुम्भैश्च संयुतम्।
मध्यकुम्भं [12]तथातोयं वर्धनीं तस्य वामके॥१९॥
सदाशिवं तु तन्मध्ये वर्धन्यां तु मनोन्मनीम्।

---

[1] यागशालां च विस्तारं — प.

[2] प्रकृतस्थले 'ञ, ड' मातृकयोः 'द्विधा' इत्यसंपूर्णपाठदर्शनात् तत्पूरणाय, चन्द्रज्ञान-निश्वासतन्त्र-योगजागमेषु समानाकारतया दृश्यमानं श्लोकमनुसृत्य पाठः संघटितः।
'अग्निकुण्डैः समायुक्तं स्थण्डिलैश्च समन्वितम्। वालुकैश्च सितैर्वापि अग्नेरायतनं द्विधा।' (**चन्द्रज्ञाने** (टि. १००९. पृ. १०७); **निश्वासतन्त्रे** (टि. १००९. पृ० १००); **योगजे** (टि. १००९. पृ. १०९)

[3] इदमर्धं 'प' मातृकायामेव दृश्यते।

[4] 'वेदिमध्ये विशेषेण अष्टद्रोणैश्च शालिभिः।
तदर्धैस्तण्डुलैः प्रोक्तं तदर्धैस्तु तिलैरपि॥
लाजैः पुष्पैश्च दर्भैश्च विकिरेत्तु विशेषतः।
पद्ममष्टदलं लिख्य पदं प्रति सकर्णिकम्॥
मध्ये तु शिवकुम्भं स्याद्वर्धनीं तस्य वामके।
अष्टकुम्भेषु विद्येशान्परितः पूजयेत्क्रमात्॥'
(**पूर्वकारणे** १३६.पृ० ६२८)

[5] 'प' मातृकायां १७ उ० — ३० पू० श्लोका न दृश्यन्ते।

[6] तदर्ध तण्डुलं — अ, ट, ड.

[7] तदर्ध तु — ञ, ट, ड.

[8] लाजपुष्पैश्च — ञ, ट, ड.

[9] अत्र 'स्थण्डिलम्' इति पदमध्याहृत्य व्याख्येयम्।

[10] कुम्भमध्ये जलद्रोणं पूर्वकुम्भं च सं — ञ, ट, ड.

[11] 'द्रोणद्वयघटं शम्भोः स्वर्णेनैव तु कारयेत्।
सुदृढं रजतेनैव द्रोणपूर्णां तु वर्धनीम्॥
शिवपूर्णघटानष्टौ ताम्रेणैव तु कारयेत्।
आढकेनैव पूर्णाः स्युः कलशाः संप्रकीर्तिताः।
सर्वं ताम्रेण कर्तव्यं कांस्यं वा मृण्मयं तु वा।
शक्त्या वित्तानुसारेण लक्षणोक्तं प्रकल्पयेत्॥'
(**सहस्रे** टि. ३४.पृ० ४२, ४३);
अत्र 'जलद्रोणपूर्णकुम्भाष्टकैर्युतम्' इति पाठो युक्त इति भाति।;
'कुम्भमध्ये जलद्रोणमष्टकुम्भसमन्वितम्।
मध्यकुम्भं तथातोयं वर्धनी तस्य वामके॥
सदाशिवं यजेन्मध्ये वर्धन्यां तु मनोन्मनीम्।
अष्टकुम्भेषु विद्येशानधिदेवाः प्रकीर्तिताः॥'
(**पूर्वकारणे** १३६.पृ. ६२१, ६२२)

[12] तथा योगं — ञ, ट, ड.

अष्टकुम्भेषु [1]विद्येशानधिदेवाः [2]प्रकीर्तिताः ॥२०॥

[3][होमः]

अग्निकार्योक्तमार्गेण कारयेत्परितः क्रमात् ।
समिदाज्य[4]चरूंश्चैव होमयेत्तु विशेषतः ॥२१॥
समिधं सद्यमन्त्रेण आज्यं वामेन होमयेत् ।
अघोरेण चरुं हुत्वा [5]लाजं तत्पुरुषेण तु ॥२२॥
[6]तिलमीशानमन्त्रेण सर्षपं हृदयेन तु ।
शिरोमन्त्रेण भृङ्गं च शिखया माषमेव च ॥२३॥
आढकं कवचेनैव गोधूमं नेत्रमन्त्रतः ।
चणकं चास्त्रमन्त्रेण सद्याद्यस्त्रान्तमन्त्रवित् ॥२४॥
द्रव्यान्ते [7]व्याहृतिं हुत्वा [8]स्विष्टमग्नेति मन्त्रतः ।

---

[1] 'विद्येशान्' इत्यस्यानन्तरं 'यजेत्' इति पदमध्याहृत्य व्याख्येयम् । ततः 'एवम्' इति पदमध्याहृत्य 'एवमधिदेवाः प्रकीर्तिताः' इति व्याख्यानेन वाक्यपूरणं कर्तव्यम् ।

[2] प्रकीर्तितः — ञ, ट.

[3] 'अग्निकार्योक्तमार्गेण सर्वहोमं समाचरेत् ।
समिदाज्यचरूँल्लाजांस्तिलं सर्षपमेव च ॥
भृङ्गमाषाढकं चैव गोधूमं चणकं तथा ।
निष्पावं यवकं चैव गुलं ताम्बूलमेव च ॥
अपूपं कन्दमूलं च इक्षुकं पिष्टचूर्णकम् ।
क्षीरदधिमधून्येव नालिकेरफलत्रयम् ॥
अन्यांश्च होमयोग्यांश्च मन्त्रेणैव हुनेद्गुरुः ।
समिधं सद्यमन्त्रेण आज्यं वामेन होमयेत् ॥
अघोरेण चरुं हुत्वा लाजं तत्पुरुषेण तु ।
तिलमीशानमन्त्रेण सर्षपं हृदयेन तु ॥
शिरोमन्त्रेण भृङ्गं च शिखया माषमेव च ।
आढकं कवचेनैव गोधूमं नेत्रमन्त्रतः ॥
चणकं चास्त्रमन्त्रेण सद्याद्यस्त्रान्तकं पुनः ।
पञ्चाक्षरेण मन्त्रेण अन्यद्रव्यांश्च होमयेत् ॥
द्रव्यान्ते व्याहृतिं हुत्वा मूर्तिमन्त्रेण तत्समम् ।
जयादिरभ्यातानं च राष्ट्रभृच्च क्रमाद्धुनेत् ॥
मृत्युंजयेन गायत्र्या प्रायश्चित्तं तु होमयेत् ।
बलिनैवेद्यकं दत्त्वा उपचारान्समर्पयेत् ॥
संप्रोक्षणविधानेन अन्यकर्माणि कारयेत् ।
अष्टबन्धनपाकं च कृत्वा रन्ध्रेषु बन्धयेत् ॥
कर्पूरं चन्दन चैव लेपयेल्लिङ्गपीठके ।
दिशास्वध्ययनं विप्र चतुर्वेदाञ्शिवाङ्कितान् ॥
कुर्यादुपनिषद्रौद्रं पुराणानि परे शिवे ।
नृत्तं गीतं च वाद्यं च नैवेद्यं विविधं ददेत् ॥
एवं जागरणं रात्रौ'
(**पूर्वकारणे** १३६.पृ० ६२८, ६२९);

[4] चरुं चैव — ञ, ड.

[5] 'ट' मातृकायां २२ तमश्लोकचतुर्थपादप्रभृति २४ तमश्लोकप्रथमपादान्तं न दृश्यते ।

[6] 'ञ, ड' मातृकयोः २३, २४ श्लोकयोः स्थाने —
'माषमीशानमन्त्रेण सर्षपं कवचेन तु ।
मुद्गमाषश्चमेवोक्तमीशानाद्यं च मन्त्रवित् ॥'
इत्येक एव श्लोको दृश्यते । अत्र पाठः साजात्याय प्रदर्शितपूर्वकारणागमश्लोकानुसारेण साधितः ।

[7] अर्च हुत्वा तु — ञ; अर्चि हुत्वा तु — ड.

[8] स्वष्टमन्त्रेण मन्त्रतः — ञ, ट; स्विष्टमन्त्रेण मन्त्रतः — ड; **तै. ब्राह्मणे** २.४.४.

[1] जयादिरभ्यातानं च [2] राष्ट्रभृच्च क्रम..द्धुनेत् ॥२५॥
[3] पूर्णाहुतिं च शिरसा [4] कुण्डमध्ये तु मूर्तिपैः ।

[5] [कुम्भाभिषेकः]

**द्वारपूजां ततः कृत्वा लिङ्गशुद्धिं समाचरेत् ॥२६॥**
**[6] [शिवकुम्भं समुद्धृत्य वर्धनीं तु तथैव च ।]**
**[7] अष्टकुम्भात्समाहृत्य [8] मण्डपात्स्वस्वदेशके ॥२७॥**

---

[1] जयहोममन्त्रा अभ्यातानमन्त्राश्च — **तै० संहिता** — ३.४.४.

[2] राष्ट्रभृन्मन्त्राः — **तै० संहिता** ३.४.७.

[3] पुण्याहुतिश्च — ञ.

[4] कुम्भमध्ये तु मूर्तिपान् — ञ, ट, ड.

[5] 'प्रभाते विमले सति ।
स्नात्वा गुरुर्विधानेन नित्यकर्म समापयेत् ॥
यागशालां प्रविश्याथ ऋत्विग्भिः परिचारकैः ।
यागपूजाप्रकारेण यागपूजां समाचरेत् ॥
आसनावरणेनैव शिवं साङ्गं प्रपूजयेत् ।
गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च ॥
उपचाराणि सर्वाणि प्रत्येकं तु समर्पयेत् ।
अग्निं प्रज्वाल्य संपूज्य होमं पूर्ववदाचरेत् ॥
पश्चाद्गर्भगृहं प्राप्य पुण्याहं वाचयेद्बुधः ।
पञ्चगव्येन संस्नाप्य लिङ्गपीठान्तरं क्रमात् ॥
अष्टमृत्तिकया चैव कषायोदकुशोदकैः ।
पञ्चपल्लवबिल्वैश्च प्रत्येकमभिषेचयेत् ॥
मन्त्रन्यासं ततो न्यस्त्वा नैवेद्यमुपचारकैः ।
यागशालां पुनर्गत्वा प्रायश्चित्तं हुनेत्क्रमात् ॥
पूर्णाहुतिं हुनेत्पश्चात्सर्वकर्म समापयेत् ।
सुमुहूर्ते त्वनुप्राप्ते यात्रादानं प्रदापयेत् ॥
प्रधानकुम्भमुद्धृत्य वर्धनीं च शिरोपरि ।
निधाय विद्येश्वरानष्टौ क्रमेण परिचारकाः ॥
वाद्यघोषसमायुक्तं छत्रचामरसंयुतम् ।
वेदध्वनिसमायुक्तं स्तोत्रमङ्गलवाचकैः ॥
हर्म्यप्रदक्षिणं कृत्वा सर्वभक्तजनैः सह ।
धूपदीपं पुरा कृत्वा पुष्पलाजान्प्रसारयेत् ॥
पदात्पदान्तरं गत्वा गर्भगेहं प्रवेशयेत् ।
लिङ्गे तु योजयेन्मूर्तिं वर्धनीं पीठके न्यसेत् ॥
अष्टविद्येश्वरान्सर्वांस्तत्तत्स्थानेषु योजयेत् ।
कुम्भाभिषेचनं कुर्यादुपचारसमन्वितम् ॥
आवाहनादिपूजान्तं विशेषेण समाचरेत् ।
धूपदीपं ततो दद्यान्नैवेद्यं तदनन्तरम् ॥
अष्टोत्तरशतन्यासं कुर्यात्तत्तद्विधानतः ।
स्नपनं तत्र कुर्वीत अष्टोत्तरसहस्रकम् ॥
अष्टोत्तरशतं वापि शान्तिहोमं समाचरेत् ।
महाभिषेकं कृत्वा तु चन्दनेन समर्पयेत् ॥
वस्त्रयज्ञोपवीतं च मालिकाभूषणं तथा ।
आसनावरणं चैव विशेषेणैव पूजयेत् ॥
महाहविर्निवेद्याथ प्रसन्नं पूजयेच्छिवम् ।
नृत्तं गीतं च वाद्यं च स्तोत्रमङ्गलवाचकैः ॥
प्रार्थयेत्परमेशानं क्षमस्वेत्यपि पातयेत् ।'
(**पूर्वकारणे** पृ० ६२९, ६३०);
'स्नपनं तत्र कुर्वीत तत्तत्कर्मसमन्वितम् ।
द्वारपूजां ततः कृत्वा लिङ्गशुद्धिमथाचरेत् ॥
शिवकुम्भं समुद्धृत्य वर्धनीं तु तथैव च ।
धामप्रदक्षिणं कृत्वा लिङ्गपीठे सुयोजयेत् ॥
अष्टकुम्भान्समुद्धृत्य योजयेत्तु क्रमेण तु ।
वस्त्राभरणसंयुक्तं धूपदीपसमाकुलम् ॥
वेदध्वनिसमायुक्तं स्तोत्रमङ्गलवाचकैः ।
नैवेद्यं दापयित्वैव ताम्बूलं तु निवेदयेत् ॥
मुखवासं ततो दत्त्वा'
(**योगजे** टि. १००९. पृ० १०९)

[6] इदमर्धं साजात्याय प्रदर्शितयोगजागमश्लोकमनुसृत्य संघटितम् ।

[7] 'ञ, ड' मातृकयोरस्मिन्नर्धे 'अष्टकुम्भान्' इत्येतावन्मात्रं दृश्यते । अन्ये वर्णा लुप्ताः ।

[8] मण्डपे स्व० — ट.

[१]प्रातः प्रदक्षिणीकृत्य अभिषेकं तु कारयेत्।
वस्त्राभरणसंयुक्तं धूपदीपसमन्वितम् ॥२८॥
[२]वेदध्वनिसमायुक्तं [३][स्तोत्रमङ्गलवाचकैः।
नैवेद्यं दापयित्वा तु] बलिदानं समाचरेत् ॥२९॥
[४]स्नपनं तत्र कुर्वीत [५]पूजयेत्तु विशेषतः।
[६]एवं संपूज्य [७]देवेशं ज्ञापयेत च देशिकः ॥३०॥

[८][आचार्यपूजा]

[९]आचार्यभूषणं कृत्वा [१०]स्वर्णयज्ञोपवीतकम्।
कटकं मणिबन्धं च कर्णकुण्डलमेव च ॥३१॥
हारकेयूरसंयुक्तं हेमाङ्गुलीय[११]कादिकम्।
अञ्जनं तु [१२]प्रकर्तव्यं [१३]पञ्चमुद्रैरलंकृते[१४] ॥३२॥

---

[१] प्रातः काले प्रदक्षिण्यामभि० — ञ, ड; प्रातः प्रदक्षिण्यामभि० — ट.

[२] 'वेदध्वनिसमायुक्तं स्तोत्रमङ्गलवाचकैः।
नैवेद्यं दापयित्वा तु बलिदानं समाचरेत् ॥
मुखवाससमायुक्तं ताम्बूलं तु निवेदयेत्।'
(**चन्द्रज्ञाने** टि. १००९. पृ० १०८);
'वेदध्वनिसमायुक्तं स्तोत्रमङ्गलवाचकैः।
नैवेद्यं दापयित्वा तु बलिदानं समाचरेत् ॥
मुखवाससमायुक्तं ताम्बूलं तत्र कारयेत्।'
(**निश्वासतन्त्रे** (टि. १००९. पृ० १०१)

[३] कोष्ठान्तर्गतो भागः साजात्याय प्रदर्शितचन्द्रज्ञानागमानुसारेण निश्वासतन्त्रानुसारेण च साधितः।

[४] यद्यपीदमर्धं 'ञ, ट, ड' मातृकासु तिसृष्वपि २६ पूर्वार्धानन्तरं दृश्यते। तथाप्यर्थानुगुण्येन ३० पूर्वार्धतया संघटितम्। साजात्याय प्रदर्शितपूर्वकारणागमवचनानुसारेण स्नपनविशेषपूजयोः प्रतिपादकमिदमर्धमत्र निवेशितम्।

[५] कारयेत्तु — ञ, ट, ड.

[६] इदमर्धं 'प' मातृकायां परं दृश्यते।

[७] देवस्य इति विज्ञाप्य देशिकः — प; विज्ञापनप्रकारः "अन्तः प्रविश्य देवसमीपं गत्वा 'ज्ञानतोऽज्ञानतो वापि शास्त्रोक्तमकृतं हि यत्।
तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादान्महेश्वर ॥' इति विज्ञाप्य'
(**शिवागमशेखरे** द्वितीयभागे पृ. ३६५)

[८] 'आचार्यं पूजयेत्पश्चाद्वस्त्रहेमाङ्गुलीयकैः।'
(**पूर्वकारणे** पृ० ६२२);
'आचार्यं पूजयेत्तत्र यथाविभवसंयुतम्।
उष्णीषमुत्तरीयं च परिधानं तथैव च ॥
हेमाङ्गुलीयकं चैव गन्धपुष्पं तथैव च।
मकुटं कुण्डलं चैव हारकेयूरकं तथा ॥
कटकं कटिसूत्रं च आचार्यस्य प्रदापयेत्।'
**सुप्रभेदे** क्रियापादे ३६.१०९ उ०–१११)

[९] 'हेमाङ्गुलीयकटकं केयूरं कुण्डलं तथा।
हेमयज्ञोपवीतं च पञ्चाङ्गभूषणं स्मृतम् ॥'
(**शैवागमपरिभाषामञ्जरी** ५.१७९ उ०, १८० पृ०)

[१०] अत्र 'तस्मै दद्याद्' इति पदद्वयमध्याहृत्य 'व्याख्येयम्।

[११] ०कादिभिः — ञ, ट, ठ, ड, प.

[१२] अत्रापि 'तस्मै दद्याद्' इति पदद्वयमध्याहृत्य 'नेत्रप्रसाधनयोग्यमञ्जनं प्रकर्तव्यम्। तच्च कृत्वाचार्याय दद्यादिति व्याख्यानेन वाक्यं समापनीयम्।

तिलकं चन्दनं चैव[1] [2]देशिके शिवभावनाम्।
[3]आचार्यदक्षिणाहीने क्रिया निष्फलतां व्रजेत्॥३३॥
क्रिया शरीरमित्युक्तं दक्षिणा [4]जीव उच्यते।
[5]क्रिया तु दक्षिणाहीना निर्जीवत्वात्तु निष्फला[6]॥३४॥
तस्मात्सर्वप्रयत्नेन आचार्यं पूजयेत्ततः।
देवे रुष्टे गुरुस्त्राता [7]गुरौ रुष्टे न कश्चन॥३५॥
[8]देवेभ्योऽप्यधिकं तस्माद्गुरुं यत्नेन पूजयेत्।
[9]देवकोपाद् गुरुस्त्राता [10]गुरोः कोपान्न साधुता॥३६॥
[11] देवेभ्योऽप्यधिकं तस्माद्गुरुं यत्नेन पूजयेत्।
पञ्च[12] निष्काधमा प्रोक्ता दशनिष्का तु [13]मध्यमा॥
[14] उत्तमा त्रिगुणा प्रोक्ता आचार्याय प्रदापयेत्॥३७॥

इति [15]रौरवेऽष्टबन्धविधिरेकषष्टितमः पटलः।

---

[13] पञ्चमुद्राः —
'रुद्राक्षमुपवीतं च उष्णीषं चोत्तरीयकम्।
भस्म चैवादिशैवानां पञ्चमुद्राः प्रकीर्तिताः॥'
(**शैवागमपरिभाषामञ्जरी** ५.१७५ उ०, १७६ पू०);
अत्र मुद्राशब्दस्य स्त्रीलिङ्गस्य क्लीबे प्रयोग इति भाति।
आगमेषु लिङ्गव्यत्यासो बहुशो दृश्यत इति **रौरवे** प्रथमभागे ६९ तमे पृष्ठे टिप्पण्यां निर्दिष्टम्।

[14] 'अलंकृते' इत्येतत्पदस्य 'देशिके' इत्यस्मिन् पदे विशेषणतयान्वयो वक्तव्यः।

[1] अत्रापि 'आचार्याय दद्याद्' इति पदद्वयमध्याहृत्य व्याख्येयम्।

[2] देशिकं शिवभावयेत् — ञ, ट, ठ, ड, प; अत्र 'कुर्याद्' इति पदमध्याहृत्य व्याख्येयम्।

[3] ३३ उ०–३७ श्लोकाः 'प' मातृकायामेव दृश्यन्ते।

[4] जीवमुच्यते — प.

[5] क्रियादक्षिणहीनानि — प.

[6] ०त्वा तु निष्पलम् — प.

[7] गुरो रुष्टे — प.

[8] देवितोप्यधिकं — प.

[9] देव्यःकोपातं — प.

[10] गुरो कोपातन्न साधता — प.

[11] देवितोऽप्यधिकं — प.

[12] ०निष्काधमं प्रोक्त दश० — प.

[13] मध्यमम् — प.

[14] उत्तमं त्रिगुणं प्रोक्तं; अत्र 'एतादृशी दक्षिणां' इति पदद्वयमध्याहृत्य व्याख्येयम्।

[15] रौरवेऽष्टबन्धनविधिः — ट, ठ; रौरवाख्ये महातन्त्रेऽष्टबन्धविधिः — प.

## द्विषष्टितमः पटलः

### [1] कृत्तिकादीपनिर्णयः

**कार्त्तिके कृत्तिका[2] युक्तपौर्णमास्यां विशेषतः।**
**[3] दीपोत्सवं प्रकर्तव्यं [4] राजराष्ट्रविवर्धनम् ॥१॥**
**एकमासे द्विनक्षत्रे अपरे दीपमाचरेत्।**
**[5] पर्वयुक्ते तु नक्षत्र[6] नाथं केतुर्ग्रसेद्यदि ॥२॥**

---

[1] अयं पटलः आर्. इ. ३९७९५ इत्यङ्किते तालपत्रकोशे २८ तमपत्रे दृश्यते। एतद्विषये **पूर्वकारणे** १११ तमपटलो द्रष्टव्यः।;
'मासे तु कार्तिकाख्ये तु नक्षत्रे कृत्तिकाह्वये।
पूर्णायां वाथ तद्योगे 'सर्वकामप्रसिद्धये ॥
रव्यस्तमयवेलायां दीपारोपणमाचरेत्।
कर्तुरष्टमराश्यादिलग्नदोषनिरीक्षणम् ॥
विष्टिवैनाशिकर्क्षादिप्रेक्षणं नात्र संमतम्।
रवेरस्तमयात्पूर्वं यामपादावसानकम् ॥
कालस्तदूर्ध्वं यामार्धपर्यन्तः काल एव वा।
एवं निश्चित्य कालं तु'
'यां तिथिं समनुप्राप्योदयं याति च भास्करः।
सा तिथिः सकला ज्ञेया शुक्ले कृष्णे द्विजोत्तमाः ॥
यदृक्षं समनुप्राप्य अस्तं याति दिवाकरः।
तदुक्तं सकलं ज्ञेयं नक्षत्रेऽप्येवमेव तु ॥
एवं ज्ञात्वा प्रयोक्तव्यं सर्वकर्म द्विजोत्तमाः।'
(**उत्तरकामिके** ८.१ उ०–५ पू०; ६२ उ०–६४);
'अथातः संप्रवक्ष्यामि कृत्तिकादीपऋक्षकम्।
तिथिनक्षत्रभेदांश्च विस्तरेण वदाम्यहम् ॥
कृत्तिका रोहिणीमिश्रा तद्रात्रौ पूर्णिमायुता।
राजराष्ट्रसुभिक्षं स्यात्तत्काले दीपमुत्तमम् ॥
द्विवारे खण्डिते पर्वे पूर्वं त्यक्त्वा परं ग्रहेत्।
अर्धास्तमनवेलायां दीपोत्सवं समाचरेत् ॥
पर्व नो चेत्तु संध्यायां पूर्वेद्युर्दीपमाचरेत्।
उत्तमं कृत्तिकायुक्तं मध्यमं रोहिणीयुतम् ॥
अथवा भरणीयुक्तं दीपं पर्वणि कारयेत्।
केवलं पौर्णमास्यां तु कृत्तिकोत्सवमाचरेत् ॥
भरणी कृत्तिकामिश्रा तद्दिने च चतुर्दशी।
अल्पवृष्टिश्च रोगाश्च राष्ट्रक्षोभो न संशयः ॥'
'कृत्तिका रोहिणीमिश्रा तद्दिने तु चतुर्दशी।
संभवेत्तु चतुर्वक्त्र तदन्यवासरे चरेत् ॥
तदन्यवासरे चैव कलया पौर्णमीयुता।
दीपोत्सवं तथा सर्वं शोभयेन्मम मन्दिरम् ॥
रोहिण्यां वा भरण्यां वा कदाचिन्मृगशीर्षके।
पर्वसंबद्धसंध्यायां दीपोत्सवमथाचरेत् ॥'
(**पूर्वकारणे** १११.१–६; ८ उ०–११ पू०);
'दीपोत्सवविधानं तु कार्तिक्यां कारयेद्बुधः।
भरण्यामथ रोहिण्यां सदा पर्वणि शस्यते ॥
सायंकालयुता या तु संग्राह्या दीपकर्मणि।
संध्यायां यत्र यत्र स्यात्तत्र दीपं समाचरेत् ॥'
(**कालोत्तरे** टि० ५५६ पृ० ४६०);
'रोहिणी भरणी चैव कृत्तिका चैव पर्वयुक्।
तास्वेव तु विशेषेण दीपारोहणमुत्तमम् ॥
कृत्तिका रोहिणीमिश्रा तद्दिने तु चतुर्दशी।
अल्पवृष्टिश्च रोगश्च राजराष्ट्रं विनश्यति ॥
कृत्तिका रोहिणीमिश्रा तद्दिनं पर्वसंयुतम्।
राजराष्ट्रसुभिक्षं च तद्दिने दीपमुत्तमम् ॥
रोहिण्यां वा भरण्यां वा पर्वयुक्ते निशाकरे।
अपर्वणि कृते दीपे राजराष्ट्रं विनश्यति ॥'
(**वातुले** टि. ५५६. पृ. ४६१)

[2] ०युक्ते पौर्ण० — ढ.

[3] दीपोस्सव प्र० — ढ.

[4] राजा राष्ट्र० — ढ.

[5] 'ऋक्षत्रययुते पर्वे राहुग्रस्ते चतुर्मुख।

तस्मिन्दिने न कर्तव्य[1]मन्यर्क्षे तु यथोक्तवत्।
भरणी[2]ऋक्षसंयुक्तकार्तिक्यां नाचरेद्बुधः ॥३॥
रात्र्यां [3]कृत्तिकया युक्ते [4]तस्मिन्दीपं समाचरेत्।
अन्यथा यदि कुर्वीत राजराष्ट्रस्य दोषकृत् ॥४॥
[5]भरण्या वा तु [6]रोहिण्या [7]संमिश्रा कृत्तिका यदि।
रात्र्यां [8]कृत्तिकया युक्ते तद्रात्रौ दीपमाचरेत् ॥५॥

[कार्त्तिकमासे आर्द्रान्तोत्सवमध्ये कृत्तिकादीपः]

[9]आर्द्रान्तोत्सवमध्ये तु अन्त्ये [10]कृत्तिकया युते।
पूर्वे च कृत्तिकायुक्ते तस्मिन्नेव समाचरेत् ॥६॥
दिवा [11]कृत्तिकया युक्ते [12]मध्यमं तु प्रशस्यते।

---

तद्रात्रौ दीपकाले वा ग्रसेद्दीपं समाचरेत् ॥'
(**पूर्वकारणे** १११.११ उ०, १२ पू०);
'कृत्तिमासे तु कात्तिक्यां रात्रौ दीपं समाचरेत्।
तद्रात्रौ राहुदष्टश्चेद्रोहिण्यां कारयेद्बुधः ॥'
(**कालोत्तरे** टि. ५५६.पृ० ४६१);
'वृश्चिकेऽर्के विधौ तुङ्गे पूर्णायामग्निभे वृषे।
उपरागेऽपि कुर्वीत महादीपप्ररोहणम् ॥'
(**कालप्रकाशिकायाम्** ३३.३१)

[6] नाथ केतु ग्रसेद् — ढ.

[1] ०मन्त्यक्षे तु — ढ.

[2] ०मिश्र संयुक्तं कात्तिकां नामाचरेत् — ढ.

[3] कृत्तिकायुक्ते तस्मिन् — ढ; अत्र 'युक्ते' इत्यत्र भावे क्तप्रत्ययः, 'योगे' इत्यर्थः।

[4] तस्मिन्दीपोस्वममाचरेत् — ढ.

[5] भरण्यां — ढ.

[6] रोहिण्यां — ढ.

[7] संमिश्रे कार्त्तिकां यादि — ढ.

[8] कृत्तिकायुक्ते — ढ; अत्र 'युक्ते' इत्यस्य 'योगे' इत्यर्थः, भावे क्तप्रत्ययः।

[9] सर्वमासेष्वाद्रान्तोत्सवे प्रमाणम् —
'चैत्रादिसर्वमासेषु रौद्रर्क्षे तीर्थभं भवेत्।'
(**अजिते** २७.१४ पू०);
'मासभं तीर्थनक्षत्रमार्द्रर्क्षं सर्वमासके।'
(**उत्तरकामिके** ६.३ उ०);
'सर्वमासेषु कर्तव्यमाद्रान्तिमुत्सवं परम्।'
(**पूर्वकारणे** १४२.८ उ०);
'सर्वमासेषु कर्तव्यमाद्रान्तं स्याच्छिवोत्सवम्।'
(**दीप्ते** ८३.२२ उ०);
'आर्द्रान्तमुत्सवं कुर्यात्सर्वमासे शिवप्रियम्।'
(**रौरवे**, क्रियापादे १८.१ उ०);
'सर्वमासेषु कर्तव्यमाद्रान्तं च शिवोत्सवम्।'
(**वीरे** ४४.११ पू०);
'आर्द्रान्तं सर्वमासेषु कर्तव्यं तु शिवोत्सवम्।'
(**सुप्रभेदे** क्रियापादे १४.१४ पू०);
आरुद्रा उत्सवमध्ये — ढ.

[10] कार्त्तिकायाय युते — ढ.

[11] कार्त्तिकायुक्ते — ढ.

[12] 'अथ वक्ष्ये विशेषेण कृत्तिकादीपलक्षणम्।
संकल्प्य कृत्तिकादीपं तिथ्यृक्षवारसंयुतम् ॥
कृतिकापर्वमाकल्प्य वह्निनक्षत्रमेव च।
तस्मिन्पर्वणि तत्रैव कृत्तिकर्क्षयुतं यदि ॥
उत्तमं त्विति विख्यातं तस्मिन्पर्वणि रोहिणी।
मध्यमं त्विति विख्यातं भरणीसहितं तु वा ॥
अधमं त्विति विख्यातं तत्पर्व मृगशीर्षयुक्।
कन्यसं त्विति विख्यातं निश्चित्यैवं प्रकल्पयेत् ॥'
(**पूर्वकारणे** पृ० ५६०, ११२, १–४);
'वृश्चिकेऽर्के वृषे चन्द्रे पूर्णायामग्निभे वृषे।
दीपारोपः प्रशस्तः स्याद्वेधितर्क्षविवर्जिते ॥

अपरे चैव कुर्वीत उत्तमोत्तममेव [1]वा ॥
[2]तस्मात्सर्वप्रयत्नेन युक्तायुक्तं च कारयेत् ॥७॥

इति [3]श्रीमद्रौरवतन्त्रे क्रियापादे [4]कृत्तिकादीपनिर्णयविधिः
द्विषष्टितमः पटलः

---

रोहिण्यां वा भरण्यां वा दीपं पर्वणि कारयेत् ।
अपर्वणि कृतो दीपो राजराष्ट्रविनाशकृत् ॥
रव्यस्तमयवेलायां दीपारोपः प्रशस्यते ।
मध्यमो मण्डले मग्ने निन्दितः स्यात्ततः परम् ॥
अविद्धमृक्षं लभ्येत पूर्णायोगे निशामुखे ।
उत्तमोत्तममादिष्टं ब्रह्मणा दीपकर्मणि ॥'
(**कालप्रकाशिकायाम्** ३३.१८ उ०–२२ पू०) ;

[1] चा — ढ.
[2] तस्मा सर्व० — ढ.
[3] श्री द्रौनवतन्त्रे — ढ.
[4] कृत्तिकानिर्णयं विधिसमाप्तः — ढ.

# त्रिषष्टितमः पटलः

## [1]शैवोत्पत्तिः

अतः परं प्रवक्ष्यामि शैवोत्पत्तेश्च[2] लक्षणम्।
[3]सर्वसंहारकालस्तु[4] कल्पकोटिशतं बुधाः[5] ॥१॥

### [6][शिवसृष्टिः]

पुनः [7]सृष्टेस्तु काले तु [8]सकलस्तु परः शिवः[9]।
[10]सदेशमूर्तिमास्थाय आत्मरक्षार्थचिन्तनम्[11] ॥२॥
इच्छाशक्तिं च ज्ञानं च क्रियाशक्तिं तिरोधिकाम्[12]।
[13]मनोन्मनीं च प्रज्वाल्य [14]तच्छक्तिप्रथमोद्भवाम् ॥३॥

---

[1] अयं पटलः आर. इ २५१८७ इत्यङ्किते तालपत्रकोशे ५, ६ पत्रयोर्दृश्यते। तथा आर. इ. ४००५२ इत्यङ्किते तालपत्रकोशे ६८ पत्रे दृश्यते। एतस्मिन्विषये **सुप्रभेदे** चर्यापादे प्रथमपटलः; क्रियापादे ५६ पटलश्च द्रष्टव्यौ॥

[2] शैवोत्पत्तिश्च — ण, त.

[3] **मतङ्गपारमेश्वरे** विद्यापादे २५ पटले, **स्कान्दे** शंकरसंहितायां दक्षकाण्डे २० अध्याये च सर्वसंहारकालविषयो दृश्यते।

[4] ०काले तु — ण, त.

[5] बुधः — ण, त.

[6] 'सृष्टयर्थं सर्वतत्त्वानां लोकस्योत्पत्तिकारणम्।
योगिनामुपकाराय स्वेच्छया चिन्तितः शिवः॥
तच्छिवे तु पराशक्तिः सहस्रांशेन जायते।
तच्छक्तेस्तु सहस्रांशादादिशक्तिसमुद्भवः॥
आदिशक्तिसहस्रांशादिच्छाशक्तिसमुद्भवः।
इच्छाशक्तिसहस्रांशाज्ज्ञानशक्तिसमुद्भवः॥
ज्ञानशक्तिसहस्रांशात्क्रियाशक्तिसमुद्भवः।
एता वै शक्तयः पञ्च निष्कलाश्चेति कीर्तिताः॥
शिवसृष्टिरियं प्रोक्ता शक्तीनां सृष्टिरुच्यते।
योगिनां च यतीनां च ज्ञानिनां मन्त्रिणां तथा॥
ध्यानपूजानिमित्ताय सकलं निष्कलं भवेत्।
तद्रूपं हि समासेन सादाख्यमिति कीर्तितम्॥
सादाख्यं पञ्चधा प्रोक्तं तेषां लक्षणमुच्यते।
पञ्चशक्त्यादिशक्तेश्च सादाख्यस्य समुद्भवः॥
'सदाशिवस्तथेशश्च ब्रह्मा वै चेश्वरः स्मृतः।
ईशानश्चेति पञ्चैते तत्त्वभेदाः प्रकीर्तिताः॥'
(**वातुलशुद्धे** १.२३ उ०–३० पू०; ३२); एतस्मिन्विषये पुनः **अजिते** १.२६–३२ श्लोका द्रष्टव्याः।

[7] सृष्टिं तु — ण, त.

[8] सकलं तु — ण, त.

[9] शिवम् — ण, त.

[10] सदाशिवमूर्तिमास्थाप्य — ण; सदाशिवकृतिमास्थाप्य — त.

[11] ०चिन्दितम् — ण; ०चिन्तिदम् — त; अत्र कृतवानिति शेषः।

[12] ०शक्तिनिरोधकम् — ण; ०शक्तितिरोधकम् — त.

[13] मनोन्मनीशक्तिप्रज्वाया — ण; मनोन्मनिं शक्तिप्रज्वाल्यं — त.

[14] तच्छक्ति प्रतिमोद्भवम् — ण, त; अत्र 'ससर्ज' इति पदमध्याहृत्य व्याख्येयमिति भाति।

परशक्तिस्ततो नादो नादाद्बिन्दुसमुद्भवः[1]।
बिन्दोः [2]सदाशिवस्तस्मादीश्वरः समजायत[3]॥४॥
तस्माद्रुद्रस्ततो [4]विष्णुर्विष्णोर्ब्रह्मण उद्भवः।
[5]तदुद्भवं [6]जगत्सर्वं [7]पश्चात्तु स्थावरोद्भवः॥५॥
[8]पञ्चकृत्यस्य कारणं [9]परमेश इति स्मृतः।

[10][सप्तविधं शैवम्]

शैवं सप्तविधं प्रोक्तमुद्भवं तु प्रकीर्तितम्॥६॥
[11]शिवोद्भवमिति ज्ञेयं शुद्धशैवमिति स्मृतम्।
संक्रान्ति [12]च समावेशसमुत्पत्त्यभिव्यक्तिकम्॥७॥
[13]उपशैवानादिशैवं शैवमार्गे तु संज्ञितम्[14]।

---

[1] ०समुद्भवम् — ण, त.
[2] सदाशिवं तस्मा० — ण, त.
[3] ०जायते — ण, त.
[4] विष्णु विष्णुब्रह्मा च भोद्भवम् — ण; विष्णु विष्णुब्रह्मा जगद्भवम् — त.
[5] ततोद्भवं — ण, त.
[6] जगस्सर्वं — ण.
[7] पश्चास्तावरमुद्भवम् — ण; पश्चात्तत्स्थावरोद्भ-वम् — त.
[8] पञ्चकृत्यन्यकारेण — ण; पञ्चकृत्यं तु कारेण — त.
[9] परमेश्वरमिति स्मृतम् — ण; परमेशमिति स्मृ-तम् — त.
[10] 'कौशिकः काश्यपश्चैव भारद्वाजोऽथ गौतमः।
अगस्त्यश्चैव पञ्चैते पञ्चवक्त्रेषु दीक्षिताः॥
संक्रान्ति काश्यपं शैवं समावेशं तु कौशिकम्।
भारद्वाजं समुद्भूतं शिवादाधिक्यगौतमम्॥
आगस्त्यमभिव्यक्तं तु चानादिस्तु परं स्मृतम्।'
(**ज्ञानावरणविळक्के** प्रथमभागे ३१२ पृष्ठे 'रौरवे' इति निर्दिश्योद्धृतम्।);
'शैवं चतुर्विधं प्रोक्तं शैवं पाशुपतं तथा।
सोमसिद्धान्तकं चैव लाकुलं च चतुर्विधम्॥
चतुर्वक्त्रान्महेशाच्च पुरुषाद्याननोद्भवम्।
पूर्वं पूर्वं गुणोत्कृष्टं तत्र त्वेवं चतुर्विधम्॥
प्रत्येकं त्रिविधं प्रोक्तं वामदक्षिणभेदतः।
सिद्धान्ताख्येन तेषां च सिद्धान्तः श्रेष्ठ उच्यते॥
तत्रापि शैवसिद्धान्तः सर्वेभ्यो ह्युत्तमोत्तमः।'
(**उत्तरकामिके** २४.७८ उ०–८१);
'शैवं पाशुपतं सोमं लाकुलं च चतुर्विधम्।
तेषु शैवं परं सौम्यं रौद्रं पाशुपतादिकम्॥
शैवं पुनश्चतुर्भेदं वामदक्षिणमेव च।
मिश्रं चैव तु सिद्धान्तं तेषु सिद्धान्तमुत्तमम्॥
अष्टाविंशतिभेदेन सिद्धान्तं शृणु तत्त्वतः।'
(**सुप्रभेदे** क्रियापादे १.२८–३० पू०);
'सप्तधा शैवमादिष्टं मत्तस्त्वं तन्मनाः शृणु।
अनादिशैवं प्रथममादिशैवं द्वितीयकम्॥
महाशैवं तृतीयं तु चतुर्थं चानुशैवकम्।
अवान्तरं तु शैवं तु पञ्चमं तु विदुर्बुधाः॥
षष्ठं प्रवरशैवं तु सप्तमं चान्यशैवकम्।'
(**वीरे**, ९.४–६ पू०)
[11] सदाशिवोद्भव० — ण.
[12] शैवं समावेदंसमुत्तभिव्यक्तकम् — ण; शैव समा-पेतसमुद्भूतमव्यक्तकम् — त.
[13] उपशैवं अनादि — ण; उपमानादिशैवं च — त.
[14] संज्ञकम् — ण, त.

[1][ईशानादिपञ्चमुखोद्भवा आगमाः, पञ्चमुखैर्दीक्षिता मुनयश्च]

**[2]कौशिकः काश्यपश्चैव [3]भरद्वाजश्च नन्दिकः ॥८॥**
**[4]अगस्त्यश्चैव पञ्चैते पञ्चवक्त्रेषु दीक्षिताः[5]।**
**कामिकादिसहस्रान्त[6]मीशानादुद्भवं तथा ॥९॥**
**[7]कौशिको ब्रह्म[8]ऋषिः प्रोक्त ऊर्ध्ववक्त्रेण[9] दीक्षितः[10]।**

---

[1] 'कामिकं योगजं चिन्त्यं कारणं चाजितं तथा।
दीप्तं सूक्ष्मं सहस्राख्यं चांशुमत्सुप्रभेदकम् ॥
तन्त्राणां दशकं ह्येतदुपभेदसमन्वितम्।
वेदाः साङ्गाश्च चत्वारः शिवस्योर्ध्वमुखोद्भवाः ॥
विजयं पारमेशं च निश्वासाख्यमतः परम्।
प्रोद्गीतं मुखबिम्बं च सद्योजातमुखोद्भवाः ॥
सिद्धं सन्तानसंज्ञं च नृसिंहं चन्द्रभासकम्।
विमलं चेति पञ्चैते वामदेवमुखोद्भवाः ॥
स्वायंभुवं तथा वीरं रौरवं तन्त्रमुत्तमम्।
मकुटं किरणं चैते घोरवक्त्रसमुद्भवाः ॥
ललितं च तथाग्नेयं वातुलं चेति तन्त्रयम्।
सोपभेदं समुद्भूतं पुरुषाख्यमुखाम्बुजे ॥'
(**अजिते** १.१०६–१११);
'कामिकाद्यजितान्ताश्च ईशवक्त्रसमुद्भवाः।
दीप्तादिसुप्रभेदान्ताः पुरुषाख्याननोद्भवाः ॥
विजयाद्वीरतन्त्रान्ताः पञ्चैते घोरवक्त्रजाः।
रौरवान्मुखबिम्बान्ता वामदेवमुखोद्भवाः ॥
प्रोद्गीताद्यष्टतन्त्रं च सद्यवक्त्रसमुद्भवम्।'
(**उत्तरकामिके**, २४.१२७ उ०–१२९);
'कामिकाद्यजितान्तं च सद्योजातमुखोद्भवम्।
दीप्तादि सुप्रभेदान्तं वामदेवमुखोद्भवम् ॥
विजयारभ्य वीरान्तं पञ्चैते घोरवक्त्रजाः।
रौरवान्मुखबिम्बान्तं पुरुषाख्याननोद्भवम् ॥
प्रोद्गीताद्यष्टतन्त्रं च ईशाननसमुद्भवम्।'
(**पूर्वकारणे** १.६८–७० पू०);
'कामिकाद्यजितान्तं च सद्योजातमुखोद्भवम्।
दीप्तादिसुप्रभेदान्तं वामदेवमुखोद्भवम् ॥
विजयाद्यं च वीरान्तं शास्त्रं घोरमुखोद्भवम्।
रौरवाद्यं च बिम्बान्तं चोद्भूतं पुरुषात्तथा ॥
सिद्धादिवातुलान्तं च ईशानस्य मुखोद्भवम् ॥'
(**चिन्त्ये** १.६५ उ०–६७);
'पञ्चशैवाः समाख्याताः सिद्धान्ते तु प्रजापते।
प्रथमोऽनादिशैवस्तु स शैवस्तु सदाशिवः ॥
आदिशैवो द्वितीयस्तु स शिवब्राह्मणः स्मृतः।
आदौ सदाशिवेनैव दीक्षितास्त्वादिशैवकाः ॥
कौशिकः काश्यपश्चैव भारद्वाजोऽथ गौतमः।
अगस्त्यश्चैव पञ्चैते पञ्चवक्त्रेषु दीक्षिताः ॥
कौशिकः शिवमूर्त्या तु दीक्षितः शिवगोचरः।
काश्यपस्त्वीश्वरेणैव शिखागोचरसंस्थितः ॥
ईशानेन भरद्वाजो दीक्षितो ज्योतिगोचरः।
गौतमो ब्रह्ममूर्त्या तु सावित्रीगोचरः स्थितः ॥
अगस्त्यश्चोर्ध्ववक्त्रेण दीक्षितो व्योमगोचरः।
ऋषीणामेवं पञ्चानां गोचराः संप्रकीर्तिताः ॥'
(**पूर्वकारणे** २६. १ उ०–७ पू०);
'कौशिकः काश्यपश्चैव भारद्वाजोऽत्रिरेव च।
गौतमश्चेति पञ्चैते पञ्चवक्त्रेषु दीक्षिताः' ॥
'कौशिकश्चोत्तरमुखे काश्यपश्चैव दक्षिणे।
भारद्वाजः पुरा ज्ञेयः पश्चिमे गौतमस्तथा ॥
अत्रिरूर्ध्वमुखे ज्ञेय एवमेतेषु दीक्षिताः'।
(**वीरे** ७, ११ उ०–१२ पू०; १३ उ०, १४)

[2] कौशिकं काश्यपं — ण, त.
[3] भरद्वाजं च नन्दिनम् — ण, त.
[4] अगस्त्यं — ण, त.
[5] दीक्षितः — ण, त.
[6] मीशानमुद्भवं — ण, त.
[7] कश्यपं — ण; कौशिकं — त.
[8] ऋषिप्रोक्तम् — ण; रिषिप्रोक्तम् — त.
[9] ०वक्त्रेषु — ण.
[10] दीक्षितम् — त.

[1]अंशुमदादिवीरान्तं पुरुषेणोद्भवं [2]भवेत् ॥१०॥
महीर्पषिः काश्यपो हि[3] पूर्ववक्त्रेण[4] दीक्षितः[5] ।
रौरवादिकचन्द्रान्तं[6] दक्षिणानन उद्भवम्[7] ॥११॥
एकादशानां[8] रुद्राणां[9] नन्दीशो [10]वैश्यतत्कुलम् ।
अघोरेण दीक्षितस्तु[11] शुद्धशैवेन[12] नन्दिकः[13] ॥१२॥
बिम्बादिकं तु [14]सिद्धान्तं वामवक्त्रोद्भवं तथा ।
ब्राह्मर्णषिरगस्त्यस्तु[15] वामवक्त्रेण दीक्षितः[16] ॥१३॥
[17] शर्वोक्तादिकं संप्रोक्तं वातुलान्तमिति स्मृतम् ।
सद्योजातमुखोत्पन्नं भारद्वाज ऋषिस्तथा ॥१४॥
शूद्रमार्गेण संचिन्त्य सद्योजातेन[18] दीक्षितः[19] ।

[सप्तविधशैवमतस्वरूपम्]

[20]संक्रान्तिशैवं काश्यपं [21]समावेशस्तु कौशिकम् ॥१५॥

---

[1] अंशुमादिकवी — ण, त.
[2] तथा — त.
[3] महीपतिषः काश्येऽपि — ण; महीपतिरिषिमकाश्या — त.
[4] ०वक्त्रेषु — ण, त.
[5] दीक्षयेत् — ण, त.
[6] चन्द्रान्ता — ण; अत्र चन्द्रान्तमित्यनेन चन्द्रज्ञानान्तमित्यर्थो बोध्यते।
[7] दक्षिणाननोद्भवम् — ण; दक्षिणेनाननोद्भवम् — त.
[8] एकादशं तु — ण, त.
[9] रुद्रेण — त.
[10] वैश्याख्यं तत्कुलं वैश्यतत्कुलम्, मध्यमपदलोपिसमासः ।
[11] तु दीक्षेण — ण, त.
[12] 'शुद्धशैवेन' इत्यस्य शुद्धशैवमार्गेण इत्यर्थोऽवगन्तव्य इति भाति।
[13] नन्दिनम् — ण, त.
[14] अत्र 'संतानान्तम्' इति भवितव्यम् इति भाति। 'बिम्बादि संतानान्तं तु' इति पाठश्चेत्सुष्ठु ।; सिद्धान्ता — ण.
[15] ब्राह्मणो ऋषिरगस्त्येन — ण, त.
[16] दीक्षिता — ण; दीक्षितम् — त.
[17] सर्वोक्तादिकसंप्रोक्तं — ण; शर्वोक्तादिकसंप्रोक्तं — त.
[18] सद्योजातं तु — ण, त.
[19] दीक्षितम् — त.
[20] 'शैवे संक्रान्तपक्षोऽयं काश्यपाभिमतः श्रुतः ।
कौशिकः काश्यपश्चैव भारद्वाजश्च गौतमः ॥
अगस्त्यश्चैव पञ्चैते पञ्चवक्त्रेषु दीक्षिताः ।
कामिकादिसहस्रान्तमीशानं .......... था ॥
काश्यपं ब्रह्मर्षिप्रोक्तमूर्ध्ववक्त्रेण दीक्षितम् ।
संक्रान्तिशैवं काश्यपमित्येवं रौरवागमे ॥
इत्येवं तत्र संक्रान्तिसाम्यमुक्तौ तु युक्तिमत् ।
अनेकेश्वरवादादिदोष एव न संभवेत् ॥'
(**ज्ञानावरणविळक्के** ३३२ पृष्ठे 'सर्वसिद्धान्तविवेके' इति निर्दिश्योद्धृतम्)
[21] समावे कौशिकस्तथा — ण; समावे कौशिकं तथा — त;
'अथ कौशिकसिद्धान्तः समावेश इति श्रुतः ।
महीपतिर्ऋषिः प्रोक्तः पूर्ववक्त्रेण दीक्षितः ॥
अंशुमादिकवीरान्तं पुरुषेणोद्भवं भवेत् ।

**[1]भारद्वाजं [2]समुद्भूतं [3]शुद्धशैवं तु नन्दिनः।**

---

इत्येवं वचनात्पश्चात् समावेशस्तु कौशिकः॥
तदावेशेन साम्यं तु संग्रहेण निरूप्यते।
अप्रमेयगुणोपेतः सर्वज्ञः खलु सर्वदा॥
सर्वकृत्सर्वलोकेशः शिवतुल्यः प्रजायते।
इत्यागमेषु मुक्तस्य श्रूयते शिवतुल्यता॥'
(**ज्ञानावरणविळक्के** ३१५ पृष्ठे 'सर्वसिद्धान्त-विवेके' इति निर्दिश्योद्धृतम्)।

[1] भारद्वाजसमुद्भूत — ण; भारद्वाजसमु — त.

[2] 'उत्पत्तिसमतापक्षो भरद्वाजमतः श्रुतः।
भारद्वाजं समुद्भूतमिति प्रागुक्ततः पुनः॥
शर्वोक्तादिकसिद्धान्तं वातुलान्तमिति स्मृतम्।
सद्योजातमुखोत्पन्नं भारद्वाज ऋषिस्तथा॥
सूत्रमार्गेण[शूद्रमार्गेण ?] संचिन्त्य सद्योजातेन दीक्षितः।
इत्यत्रोत्पत्तितः साम्यं मुक्तिरेव न चान्यथा॥'
(**ज्ञानावरणविळक्के** ३१६ पृष्ठे 'सर्वसिद्धान्त-विवेके' इति निर्दिश्योद्धृतम्)

[3] 'शुद्धशैवं ततः शृणु।
शुद्धत्वाच्छिवमुद्दिष्टं शिवाज्जातं हि शैवकम्॥
शुद्धशैवसमायोगाच्छुद्धशैवमिति स्मृतम्।
शिवेनोत्पद्यते शैवं तस्माज्जाताः शिवद्विजाः॥
शिवद्विजास्तु विप्रेन्द्रा आदिशैवाः प्रकीर्तिताः।
कौशिकः काश्यपश्चैव भारद्वाजोऽथ गौतमः॥
अगस्त्यश्चैव पञ्चैते पञ्चवक्त्रेषु दीक्षिताः।
तेषां वंशे तु जातास्ते शिवविप्रा इति स्मृताः॥
पुनर्दीक्षां न चार्हन्ति कर्तव्या चेत्तु निष्फला।
कामिकादिषु तन्त्रेषु अष्टाविंशतिषु क्रमात्॥
वेदशास्त्रादिसर्वेषु कृताभ्यासः शिवव्रती।
कर्षणादिप्रतिष्ठान्तं प्रतिष्ठाद्युत्सवान्तकम्॥
उत्सवात्प्रायश्चित्तान्तं ज्ञात्वा सर्वं समाचरेत्।
मन्त्रयन्त्रक्रियामुद्रान्यासावाहनकादिभिः॥
उपचारैर्बहुविधैर्लिङ्गं लिङ्गासने यजेत्।
प्रासादं प्रणवं हंसं व्योमव्यापि शिवाक्षरम्॥
अघोरं दक्षिणामूर्ति मृत्युञ्जयमतःपरम्॥
श्रीरुद्रं चैव परमं श्रीमत्पञ्चाक्षरं परम्॥
अघोरास्त्रं शिवास्त्रं च तथा पाशुपतास्त्रकम्।
द्वादशैते महामन्त्राः शिवमन्त्रोत्तमोत्तमाः।
अस्त्रमुद्रा वक्त्रमुद्रा महामुद्रा ततः परम्॥
शोधनाख्या महामुद्रा तथा संहृतिमुद्रिका॥
मुद्रा पञ्चमुखी चैव तथा सुरभिमुद्रिका॥
एवमष्टविधं प्रोक्तं मुद्रासामान्यलक्षणम्॥
आत्मार्थं च परार्थं च पूजा द्विविधमुच्यते।
दत्ते च गुरुणा लिङ्गे स्थण्डिले स्वयमात्मनि॥
आत्मार्थमिदमाख्यातं परार्थं तु ततः शृणु।
ग्रामादौ स्थापिते लिङ्गे यद्वा देवादिनिर्मिते॥
परार्थमिति विज्ञेयं सर्वप्राणिहितावहम्।
शिवद्विजेन कर्तव्या द्विधा पूजेति चोदिता॥
अन्येषां स्वार्थयजनं न कुर्यात्तु परार्थकम्।
मोहाल्लोभाच्च कुर्वीत राजराष्ट्रस्य दुःस्थितिः॥
शिवावरणदेवांश्च सर्वान्संपूजयेद्गुह।
पृथक्स्थानस्थितान्सर्वान्पूजयेदन्यदेवकान्॥
मन्त्रपिण्डे हृदम्भोजे वा समन्त्रस्य भावतः।
आवाहनादिसंयुक्तं लिङ्गे पूजादिकं चरेत्॥
मन्त्रलिङ्गं शरीरं स्यात्स एव परमः शिवः।
शुद्धशैवमिदं प्रोक्तम्'
(**ज्ञानावरणविलक्के** २४१–२४३ पृष्ठेषु 'वातुले' इति निर्दिश्योद्धृतम्);
'इदानीं शैवभेदानि वक्ष्यन्ते तु समासतः।
शास्त्रं चतुर्विधं ज्ञेयं वामदक्षिणमिश्रकम्॥
सिद्धान्तेन समायुक्त चतुर्धैवं प्रकीर्तितम्।
वामादिशास्त्रभेदेषु यो दीक्षां वहते क्रमात्॥
वामी च दक्षिणी मिश्री सिद्धान्तीति च कीर्तिताः।
वामं हि शाम्भवं स्याद्धि दक्षिणं भैरवात्मकम्॥
मिश्रं यामलमित्युक्तं सप्तमातृप्रधानकम्।
सिद्धान्तं शुद्धशैवं तु केवलं शुद्धशाम्भवम्॥
सिद्धान्तं सर्वसारं हि तत्तु शुद्धशिवं स्मृतम्।'
(**सुप्रभेदे** चर्यापादे १.६–१० पू०);
शैवेन नन्दिनम् — ण, त.

[1]आगस्त्यं च [2]अभिव्यक्तमनादिशैवं[3] परं शिवम्[4] ॥१६॥

---

[1] अगस्त्यं चैवमभि — ण; आगस्त्यं चमभिस्यक्त — त.

[2] 'अथाभिव्यक्तिसाम्यं तु संग्रहेण निरूप्यते।
पूर्वोक्तेष्वर्थभेदेषु चाङ्गीकृत्य यथोचितम् ॥
अगस्त्य एतत्सिद्धान्तवादीति श्रूयते श्रुतौ।
आगस्त्यमभिव्यक्तं तु चानादिस्तु परं स्मृतम् ॥
बिम्बादिकं तु सिद्धान्तं वामदेवोद्भवं तथा।
ब्राह्मणर्षिरगस्त्यः स्याद्वामवक्त्रेण दीक्षितः ॥
इति साम्यश्रुतेर्मुक्तौ मुक्तस्य शिवतुल्यता।'
(**ज्ञानावरणविलक्के** ३२१ पृष्ठे 'सर्वसिद्धान्तविवेके' इति निर्दिश्योद्धृतम्);
'समता च समुत्पत्तिसंक्रान्त्यावेशपक्षतः।
अभिव्यक्तिपरा गीता बुद्धिवाचामगोचरा ॥
[अभिव्याक्तिः]
सर्वज्ञत्वादिगुणाभिव्यक्तिरूपपरमेश्वरसमता परा प्रकृष्टा।
[उत्पत्तिः] —
पश्ववस्थायां सर्वज्ञत्वादिधर्मासत्त्वान्मुक्तौ च परमेश्वरसमत्वश्रुत्यन्यथानुपपत्त्या पश्वात्मन्यपूर्व एव तदा सर्वज्ञत्वादिगुणः परमेश्वरसम उत्पद्यत इति उत्पत्तिसमतापक्षः कैश्चिदभ्युपगतः।
[संक्रान्तिः] —
तथा परैरपि पटादौ कस्तूरिकामोदवत्तत्र परमेश्वरगुणः संक्रामति मुक्ताविति समतासंक्रान्तिपक्षः प्रतिपन्नः।
[समावेशः] —
अन्यैस्तु तदा परमेश्वरगुणैः स्वाश्रयस्थैरेव सिद्धः समाविश्यते ग्रहैरिव पुरुष इत्यावेशपक्षः।'
(**परमोक्षनिरासकारिका** श्लो ७ तस्या रामकण्ठवृत्तिश्च।)

[3] 'अनादिशैवसिद्धान्ते त्वङ्गीकृत्य यथोचितम्।
पूर्वोक्तेषु विशेषेण कथ्यते लेशतः स्फुटम् ॥
शुद्धविद्यादितत्त्वानां जडता न शिवात्मता।
नादस्य ज्ञानरूपत्वं स शिवः स्यादिति श्रुतिः ॥
न तु शब्दादृते पुंसः प्रत्ययोऽस्ति कदाचन।
शब्दानुविद्धमेवेह विश्वज्ञानं प्रदृश्यते ॥
इति तज्ज्ञानसंसिद्धिः सूक्ष्मादिक्रमतः स्फुटम्।
तदेव प्रणवाकारं शिवं चैव तथागमः ॥
नादबिन्दूद्भवाकारमोङ्कारं शुद्धतत्त्वकम्।
शुद्धज्ञानं हताज्ञांशं शुद्धवर्त्मनि कारणम् ॥
ज्ञानबीजं पराकारमोङ्कारं प्रभुरीश्वरः।
तत्सादाख्यशिवाकारं कलापञ्चकसंभवम् ॥
अकारोकारमकारबिन्दु नादश्च पञ्चमम्।
ओङ्कारं स्वकलाकारं मध्ये वाक्पञ्चकोद्भवम् ॥
महासूक्ष्मान्नादमुत्पन्नं सूक्ष्माद्बिन्दुसमुद्भवम्।
पश्यन्ती तन्मकारोत्थमुकारो मध्यमोदयम् ॥
अकारोत्पन्नवैखर्या आदिवाक्पञ्चसाधनम्।
तन्मध्ये तु महेशश्च रुद्रविष्ण्वात्मभूरिति ॥
पञ्चमस्य कलाशक्तिः पञ्चकृत्योद्भवं तथा।
सृष्ट्यादिपञ्चकृत्यर्थं ब्रह्मादिदेवसंभवम् ॥
षट्त्रिंशत्तत्त्वसंभिन्नकुटिलाशक्तिरुद्भवः।
कुटिला कुण्डली व्याप्ता कुण्डली प्रणवोदिता ॥
इति सर्वजगत्कर्ता शिवो नादात्मकः स्मृतः।
स्वस्वावसरभेदेन श्रूयते द्विविधः पुनः ॥
............... शब्दब्रह्मपरं तु यत्।
परं तत्तत्त्वमुद्दिष्टं ब्रह्मशब्देन शब्दितम् ॥
........मयं यत्तत् सदाशिवमिति स्मृतम्।
सदाशिवतनुः साक्षात्प्रणवः स्याज्जनार्दन ॥
सर्वकारणभूतोऽसौ देवदेवः सदाशिवः।
तन्नादः परनादः स्यान्नान्यथेति तथागमः।
तस्मात्तु परशब्दार्थं ध्यायेदोङ्कारमीश्वरम्।
इत्येवं वैदिकेऽप्युक्तं श्रूयते च शिवागमे ॥
ममैषा परमा मूर्तिर्नादसंज्ञा वरानने।
चिन्त्यते योगिभिर्नित्यमपुनर्भवकाङ्क्षिभिः ॥
शब्दतत्त्वे परे लीने योगी तद्गतमानसः।
परमोक्षमवाप्नोति शब्दस्यैवार्थसिद्धये ॥
तत्सिद्धौ लययोगी स्याच्छ्रूयते तस्य वैभवम्।
ब्राह्मणानां शतं पुण्यमधिकं वेदवेदिनाम् ॥
तेषां सहस्रगुणिताः शैवतन्त्रेषु दीक्षिताः।
दीक्षितानां च सर्वेषां यजमानो विशिष्यते ॥
तेभ्यश्च यजमानेभ्यो भस्मलेपी विशिष्यते ॥
भस्मलेपिसहस्राणां पूजकोऽप्यधिको भवेत्।

[१]गोलकः [२]कुण्डकश्चैव उपशैवमिति स्मृतम्[३]।
भारद्वाजस्य मार्गेण शिवद्विजेन दीक्षितः ॥१७॥

[४][तन्त्रसंकरादिदोषः]

[५]तत्तन्त्रमिति विज्ञेयं [६]सांप्रतं तु प्रबोधयेत्।

---

पूजकानां च सर्वेषां मन्त्रवेत्ता विशिष्यते ॥
मन्त्रवर्णविदां तेषामध्वज्ञाता विशिष्यते।
अध्वविदां च सर्वेषां प्रासादज्ञो विशिष्यते ॥
प्रासादज्ञानवेदीनां लययोगी विशिष्यते।
लययोगवतां पुंसां प्राणलिङ्गी विशिष्यते ॥
इत्येवं नासतो मुक्तिः शुद्धतत्त्वसमाश्रया।
अथोपास्तिक्रमः शैवे योगदीक्षापुरःसरम् ॥
ज्ञेयं गुरुमुखादेव शक्तिपातपवित्रितैः।
इत्यनाद्याख्यशैवार्थः कथितः सग्रहादिह ॥'
(**ज्ञानावरणविळक्के** २७९–२८१ पृष्ठेषु 'सर्वसिद्धान्तविवेके' इति निर्दिश्योद्धृतम्)

[१] परःशिवम् — ण, त.

[२] गोलकं — ण; कोलकं — त.

[३] कुण्डकं चैवमुप — ण, त;
'ब्राह्मण्यां ब्राह्मणस्यैव प्रमादाद्गूढजातकः।
सोऽपि विप्रस्तु विज्ञेयो यागाध्ययनवर्जितः ॥
ब्राह्मण्यां सधवायां तु विप्राज्जातस्तु कुण्डकः।
विधवायां तु गोलः स्यादेतौ [ज्ञेयौ] विगर्हितौ ॥
तावात्मार्थस्य पूजार्हावुपनीय समन्त्रकम्।
आरामपोषकः कुण्डो ह्यंकु[हिङ्ग?] विक्रयगोलकः ॥'
**जातिनिर्णये** (टि. ४०९ पृ० ८) सुप्रभेदे इति निर्दिश्योद्धृतम्।;
'परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ।
पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः ॥'
(**मनुस्मृतौ** ३, १७४)

[४] उभयोरपि मातृकयोः १७ श्लोकस्य पूर्वार्धानन्तरं
'महीपतिः कुष्ठरोगी वानप्रस्थश्च कन्यसः।
ब्राह्मण्या विधवायाश्च संयोगे भूपतेस्तदा ॥
कुण्डः शिवद्विजो नाम तत्कालेनोद्भवस्तथा।'
इत्यर्धत्रयं दृश्यते। एतस्य ग्रन्थस्य प्रतिलोमपरत्वादसंगतत्वाच्च नात्र पाठतया संघटनम्।

[५] 'शैवं चतुर्विधं ज्ञेयं शैवं पाशुपतं तथा।
सोमं लाकुलमित्येते चतुर्भेदाः प्रकीर्तिताः ॥
एतेषु शैवभेदेषु यदा तेनैव देशिकः।
तत्तन्मन्त्रेण कर्तव्याः स्थापनादिक्रियान्विताः ॥
एतेषु दीक्षितेष्वेषु सर्वान्वै स्थापनादिकान्।
यः करोत्यन्यतन्त्रेण तन्त्रसंकर उच्यते ॥
तेन दोषेण तद्वास्तु राजराष्ट्रं च नश्यति।
तस्मात्सर्वप्रयत्नेन वर्जयेत्तन्त्रसंकरम् ॥'
'वातुलान्ताः कामिकाद्याः प्रादुरासञ्शिवास्यतः।
एतेषामेकभेदत्वान्न दोषो न तु संकरः ॥
कश्चिदेष विशेषोऽस्ति त विशेषं शृणु द्विज।
प्रारब्धं येन तन्त्रेण तत्तन्त्रेण समापयेत् ॥
नोक्तं चेदन्यतन्त्रेण तत्सर्वं तु समाचरेत्।
समापयेद्यागकार्यम्'
(**पूर्वकारणे** २६.५८ उ०–६२ पू०; ६९ उ०–७२ पू०);
'मन्त्रसंकरदोषेण राजराष्ट्रं विनश्यति।
संप्रोक्षणं ततः कृत्वा पुण्याहं पुनराचरेत् ॥
आचार्यसंकरो यत्र कर्तुर्ग्रामस्य नाशकृत्।
मूर्तिहोमं ततः कृत्वा स्नपनं कारयेत्ततः ॥
पूर्वाचार्येण तत्सर्वं कर्तव्यं विधिपूर्वकम्।'
(**पूर्वकारणे** १४४-२०७–२०९ पू०);
'शिवसिद्धान्ततन्त्रेण प्रारब्धं कर्षणादिकम्।
न कुर्यादन्यशास्त्रेण कुर्याच्चेत्तन्त्रसंकरः ॥
तन्त्रसंकरदोषेण राजराष्ट्रं विनश्यति।'
(**मकुटे** १.१११–११२ पू०);
'बौद्धं चाप्यार्हतं चैव शैवं पाशुपतं तथा।
कापालं पाञ्चरात्रं च षडेते समयाः स्मृताः ॥
एतेषां संकरश्चैव तन्त्रसंकर उच्यते।
तन्त्रसंकरदोषेण राजराष्ट्रं विनश्यति ॥

अन्यतन्त्रेण [1]संक्रान्तं न [2]बोधेत्सांप्रदायिकम् ॥१८॥
प्रमादादन्यतन्त्रेण [3]चिद्बोधे नरकं [4]तदा ।
[5]प्रमादाच्चैव कृत्वा च निष्फलं [6]कर्म होमकम् ॥१९॥
[7]आचार्यसंकरे चैव तन्त्र[8]संकर एव च ।
उच्छिष्ट[9]संकरे दोषः कर्तृ[10]संकर एव च ॥२०॥
अर्चनं चाग्निकार्यं च नित्योत्सव[11]महोत्सवम् ।
स्नपनं बलिदानं च [12]तत्कर्म निष्फलं तथा ॥२१॥
आचार्य[13]संकराद्वास्तु राजराष्ट्रं विनश्यति ।
कर्तृ[14]संक्रान्तितो दोषः [15]संकरे कर्तृनाशनम् ॥२२॥
[16]इत्येतत्संकरं कृत्वा महापातकमाश्रयेत् ।
संक्रान्तिर्यस्य [17]दृश्येत [18]कुर्वाणो नरकं व्रजेत् ॥२३॥

## [आचार्यप्रशंसा तत्कृत्यं च]

शिवसंस्कारसंबन्धाद्भस्मरुद्राक्ष[19]मिश्रणात् ॥

---

तस्मात्सर्वप्रयत्नेन संकरं नैव कारयेत् ।
अष्टाविंशतिभेदेन शैवभेदो विधीयते ॥
एतेषां संकरश्चैव न दोषाय प्रकल्पते ।'
(**वीरे** १.७७–८० पू०);
'अथातः संप्रवक्ष्यामि तन्त्राणां संकरं परम् ।
शैवं पाशुपतं सोमं लाकुलं तु चतुर्विधम् ॥
तेषां भेदोपभेदैश्च तत्तच्छास्त्रे समाचरेत् ।
चतुर्विधेषु तन्त्रेषु यथेष्टं तेन बुद्धिमान् ॥
कर्षणादि प्रतिष्ठान्तं कर्म कुर्याद्विचक्षणः ।
कर्षणादि प्रतिष्ठान्तमेकतन्त्रेण कारयेत् ॥
भुक्तिमुक्तिप्रदं मुख्यं सर्वसिद्धिमवाप्नुयात् ।
पूर्वमेकेन कृत्वा तत्पश्चादन्येन वै कृतम् ॥
एतत्तु संकरं तेन राज्ञो राष्ट्रस्य दोषकृत् ।
आचार्यश्चैव कर्ता च नाशनं त्वखिलं तथा ॥
यच्छास्त्रेण यदारब्धं तच्छास्त्रेणैव तत्कुरु ।
कृतं चेदन्यशास्त्रेण तन्त्रदोषाय कल्पयेत् ॥'
(**सुप्रभेदे** क्रियापादे ५६.१–६)

[5] तत्तत्तन्त्वमिदं ज्ञेयं — ण.

[6] युक्तमित्यर्थः ।; तत्संप्रतं तु बोधयन् — त.

[1] संक्रान्ति — ण, त.

[2] 'बोधेत्' इति अन्तर्भावितणिजन्तः, बोधयेदित्यर्थः ।; बोधन् संप्रदायिकम् — ण; बोधन् संप्रदायकम् — त.

[3] चिद्बोधं — ण; चिद्बोधत् — त.

[4] तथा — ण, त.

[5] प्रसादं चैव — ण; संप्रतां कर्म कृत्वा — त.

[6] भस्म भोमकम् — त.

[7] आचार्यसंकरं — ण, त.

[8] ०संकरमेव च — ण, त.

[9] ०संकरं दोषं — ण, त.

[10] ०संकरमेव च — ण, त.

[11] ०महोत्सवः — ण

[12] तत्कर्म — ण, त.

[13] ०संकरन्दास्तु — ण; ०सकरं वा तु — त.

[14] ०संक्रान्ति तद्दोषं — ण, त.

[15] संकरो — ण.

[16] इत्येते सं — ण, त.

[17] घृष्टेन — ण, सृष्टेन — त.

[18] कुर्वाणं — ण, त.

[19] ०माश्रकम् — ण; ०मिश्रकम् — त.

शिखायज्ञोपवीतं तु [1]धृत्वा दीक्षित उच्यते ॥२४॥
[2]जङ्गमः शुद्धशैवं तु [3]तत्तत्तन्त्रे प्रवेशयेत् ।
शास्त्रस्य [4]संप्रदानेन [5]शास्त्रदीक्षेति चोच्यते ॥२५॥
[6]जटी वा [7]मुण्डको वापि [8]शिवाचार्यः प्रवेशकः ।
[9]स्थावरं [10]लिङ्गमित्याहुर्जङ्गमस्तु महेश्वरः[11] ॥२६॥
महेश्वरपदाविष्टं स्थानं [12]यत्संपदां पदम् ।

[13][भस्मरुद्राक्षधारणप्रशंसा]

ब्राह्मणो वापि चण्डालः सुगुणो दुर्गुणोऽपि वा ॥२७॥
भस्मरुद्राक्ष[14]संमिश्रः शिव एव न संशयः ।
[15]इत्येतच्छैव उत्पन्ने [16]पश्चाच्छैवं समाचरेत् ॥२८॥

इति [17]रौरवतन्त्रे क्रियापादे शैवोत्पत्तिः त्रिषष्टितमः पटलः ।

---

[1] कृत्वा दीक्षितमुच्यते — ण, त.
[2] जङ्गमं शुद्धशैवेन — ण, त; जङ्गमः — आचार्यः ।
[3] तत्तन्त्रं तु प्रवेशकम् — त.
[4] संप्रतातेन — ण; संप्रदायेन — त.
[5] 'चाक्षुषी स्पर्शदीक्षा च वाचिकी मानसी तथा ।
शास्त्री च योगदीक्षा च हौत्रीत्यादिरनेकधा ॥'
'शास्त्रस्य सप्रदानेन शास्त्रदीक्षा समीरिता ।'
(**वरुणपद्धतौ** दीक्षाप्रकरणे (टि. १४३) पृ० १३, १४);
शास्त्रदीक्षान्तु मुच्यते — ण, त.
[6] 'योषिद्युक्तः सकेशश्च जटारुद्राक्षदण्डकैः ।
कौपीनमेखलाभिश्च परित्यक्तस्तु यो भवेत् ॥
स गृहस्थ इति प्रोक्तो मुण्डी वा स्याज्जटादियुक् ।
व्रती दारवियुक्तस्तु भिक्षार्थी च तथा भवेत् ॥'
(**उत्तरकामिके** २४.६१ उ०–६३ पू०);
जटे वा — ण, त.
[7] मुण्डके वापि — ण; मुण्डकेशी वा — त.
[8] शिवाचार्यप्रवेशकम् — ण; आचार्य तु प्रवेशयेत् — त.
[9] 'लिङ्गद्वय समाख्यातं चरं चाचरमेव च ।
चरं व्यक्तीति विख्यातमचरं पार्थिवादिकम् ॥
चरे सदा वसत्येव प्रतिच्छन्नो महेश्वरः ।
अचरे मन्त्रसंस्काराद्वसत्येव सदाशिवः ॥
स्थावरं जङ्गमं चैव द्विविधं लिङ्गमुच्यते ।
स्थावरं स्थापितं लिङ्गं जङ्गमं दीक्षितं विदुः ॥
जङ्गमस्यावमानेन स्थावरं निष्फलं भवेत् ।
तस्माल्लिङ्गद्वयं प्राज्ञो नावमन्येत सर्वदा ॥'
(**शिवधर्मे** पूर्वे ३.६२–६५)
[10] जङ्गमित्याहु — ण, त.
[11] ०र्जङ्गमं तु महेश्वरम् — ण, त.
[12] यत्संपदा — ण.
[13] 'ब्राह्मणो वापि चण्डालो निर्गुणः सगुणोऽपि च ।
भस्मरुद्राक्षधारी यः स देवत्वं शिवं व्रजेत् ॥
शुचिर्वाप्यशुचिर्वापि तथाभक्ष्यस्य भक्षकः ।
म्लेच्छो वाप्यथ चण्डालो युतो वा सर्वपातकैः ॥
रुद्राक्षधारणादेव स रुद्रो नात्र संशयः ॥'
(**देवीभागवते** ११ स्कन्धे ६.१३ उ०–१५)
[14] समिश्र शिवमेवं — ण; संमिश्र शिवमेवे — त.
[15] इत्येते शैवमुत्पन्नं — ण, त.
[16] पश्चाच्छौचं — त.
[17] रौरवागमे — त.

## चतुष्षष्टितमः पटलः

### [1] फलपक्वादिसमर्पणकालविधिः

[ रुरुरुवाच ] —

वद मे तन्महाप्राज्ञ देवेश तव शंकर।
सुमस्रग्गन्धवस्त्रादिभूषणानां समर्पणम् ॥१॥
कथं कार्यं च तत्कालं विस्तरेण जगत्पते।

ईश्वर [ उवाच ] —

शृणु [2] देव प्रवक्ष्यामि तत्कालं तद्विधिं क्रमात् ॥२॥
मदर्पणार्थमानीतं जलगन्धसुमादिकम्।
स्रग्वस्त्राभरणं[3] [4] भक्तैर्देशिकः कृतनित्यकः[5] ॥३॥
उद्वर्तने कर्ममध्ये प्राणसंस्थापने तथा।
[6] नैवेद्योत्पत्तिकायाश्च [7] कालं त्यक्त्वान्यकालके ॥४॥
स्वयं स्वीकृत्य तद्द्रव्यं शुद्धिं कृत्वा विचक्षणः।
जलं चेत्तु [8] तदुत्पूय [9] तीक्ष्णदृष्टया निरीक्ष्य च ॥५॥
[10] तेन मां सेचयेन्मन्त्री तद्भक्तश्रेयसे शिवम्[11]।
गन्धं [12] चेदस्त्रतः प्रोक्ष्य विन्यसेन्मम मस्तके ॥६॥
तस्योपरि तथा पुष्पं विन्यस्याभ्यर्च्य मूलतः।
वस्त्राभरणकं चेत्तु शुद्धिं [13] कृत्वार्प्य मूलतः ॥७॥
[14] संभूष्यं मम सर्वाङ्गं तद्वस्त्राभरणैर्मुदा।
तद्भक्ता[15] हृतनैवेद्यं फलं वा पक्वमेव वा ॥८॥
समर्प्य तोषणं कृत्वा नीराज्याभ्यर्च्य मां ततः।
तस्मै भक्ताय संदद्यात्तत्तीर्थं तत्सुमं गुरुः ॥९॥

---

[1] अयं पटलः टि. ९८४ इत्यङ्किते पत्रात्मके कोशे १४५–१४७ पृष्ठेषु दृश्यते।
[2] देवि — थ.
[3] ०स्त्रावरणं — थ; प्रश्नवाक्यानुसारेणात्राभरणम् इति पाठः साधितः।
[4] भद्रैः — थ.
[5] कृतनैष्ठिकः — थ.
[6] नैवेद्येत्पातिकायां च — थ.
[7] काले — थ.
[8] तदुत्पुत्य — थ.
[9] तीक्ष्यदृष्टया — थ.
[10] तेनेमां — थ.
[11] अत्र भवेदित्यध्याहृत्य व्याख्येयम्।
[12] च दस्रतः — थ.
[13] कृत्वास्य — थ.
[14] संभूष्य — थ.
[15] ०हृदनैवेद्यं — थ.

सुमस्त्रक्फलपक्वं चेत्त[1]च्चतुर्धा विभज्य च।
एकभागं स्वयं कर्ता स्वीकृत्यान्यं द्वितीयकम् ॥१०॥
आचार्याय प्रदायान्यं द्विजेभ्योऽथ द्विभागकम्।
एवं विभज्य[2] तत्कर्ता मम [3]संतुष्टिहेतवे ॥११॥
वस्त्राभरणकं चेत्तु धनागारे ममार्चकः।
संरक्ष्य भूषयेन्नित्यं यथायोग्यं विभूषणैः ॥१२॥
इत्युक्तविधिना [4]देव द्रव्यजालं समर्पयेत्।

[रुरुरुवाच]—

ग्रामान्यवासिनो भक्त्या परं तद्द्वारबन्धनात् ॥१३॥
त्वद्दर्शनार्थमायाता यद्यकस्माज्जटाधर[5]।
कथं कार्यं तदा देव वद तत्त्वं महेश्वर ॥१४॥

ईश्वर[उवाच]—

[6]ध.वन्यो वेगतश्चेत्तु [7]राजकीयाच्च दैविकात्।
तदा [8]द्वाराशयस्थाने दौवारिकमुखाच्छिवम् ॥१५॥
मां स्मृत्वा फलपक्वाद्यं समर्प्य विनिवेद्य च।
साष्टाङ्गं प्रणमेत्तत्र देवांशं फलपक्वकम् ॥१६॥
निक्षिप्य शेषं स्वीकृत्य गच्छेद्ग्रामप्रदक्षिणात्।
इत्येवं [9]धावतः प्रोक्तो विधि[10]रन्यो न कारयेत् ॥१७॥
द्वारोद्घाटनपर्यन्तं स्थित्वा चोद्घाटनात्परम्।
मां दृष्ट्वा फलपक्वाद्यमाचार्यप्रमुखात्ततः ॥१८॥
समर्प्यानम्य [11]तद्भक्त्या ममानुग्रहकारिणः।
निवर्तयेद्यथाकामं [12]सद्योऽन्तेऽभीष्टमाप्नुयात् ॥१९॥

इति रौरवसंहितायां क्रियापादे फलपक्वादिसमर्पणकालविधिः
चतुष्षष्टितमः पटलः।

---

[1] चतुर्धा — थ.
[2] विभक्त्य — थ.
[3] संतुष्ट० — थ.
[4] देवी — थ.
[5] ज्जडाधरा — थ.
[6] धावन्तो — थ.
[7] राजिकाद्दैविकादपि — थ.
[8] द्वारशयो — थ.
[9] धावतं — थ.
[10] 'एनं विधिं' इत्यध्याहृत्य व्याख्येयम्।
[11] ते भक्त्या — थ.
[12] सद्यन्ते — थ.

## पञ्चषष्टितमः पटलः

### [1]कामकोष्ठलक्षणविधिः

[2][शक्तित्रयम्]

**अथ वक्ष्ये विशेषेण कामकोष्ठस्य लक्षणम्।**
**योगं भोगं च वीरं च शक्ति[3]त्रयमिति स्मृतम्॥१॥**

[4][योगशक्तिः]

**[5]योगशक्तिरुमाभागः [6]पीठिकाकृतिरुच्यते।**
**उपानं [7]जगती चैव [8]कुमुदं कम्पकण्ठकम्॥२॥**
**[9]कम्पं पट्टी तदूर्ध्वे स्याद्घृतवारिसमायुतम्।**
**उपानं [10]पाद एव [11]स्याज्जङ्घा [12]जगतिरुच्यते॥३॥**
**[13]कुक्षिस्तु कुमुदं ज्ञेयं बाहुयुग्मं च कम्पकम्।**
**[14]कण्ठं कण्ठमिति [15]ज्ञेयमधरोऽधरपट्टिका॥४॥**

---

[1] अयं पटलः टि. १०५५ इत्यङ्कितहस्तलिखितमातृकायां ७–११ पृष्ठेषु तथा आर्. इ. १८६७० इत्यङ्किततालपत्रकोशे ६६–६९ पत्रेषु च दृश्यते।

[2] 'योगं भोगं च वीरं च शक्तिरेवं त्रिधा भवेत्।
योगं पीठसमायुक्तं भोगं वामसमन्वितम्॥
वीरं स्वतन्त्रमित्युक्तं शक्तिरेवं त्रिधा भवेत्।
शक्तिलक्षणमेवोक्तम्'
(**पूर्वकारणे** ९०.१२ उ०–१४ पू०);
'अथातः संप्रवक्ष्यामि सर्वलोकहिताय च।
सर्वज्ञानप्रदं चैव शक्तित्रयमिहोच्यते॥
योगं पीठसमायुक्तं भोगं वामसमन्वितम्॥
वीरं स्वतन्त्रमित्युक्तं शक्तित्रयमिहोच्यते।'
(**उत्तरकारणे** ८४.१, २)

[3] ०बीजमिति त्रिधा — ध

[4] 'भद्रपीठमथ शृणु।
पूर्ववत्षोडशांशं तु कृत्वोत्सेधं विधानतः॥
भागेनोपानमेकेन चतुर्भिर्जगती भवेत्।
कुमुदं तु त्रिभिर्भागैरेकेनैव तु पट्टिका॥
कण्ठं कुर्यात्त्रिभिर्भागैरेकांशेन तु पट्टिका।
महापट्टिका द्व्यंशा तु एकेन घृतवारिणी॥'
(**सुप्रभेदे** क्रियापादे ३३.१०३ उ०–१०६ पू०)

[5] योगं शक्तिरुमाभागं — द; योगशक्ति सदायुक्तं — ध.

[6] पीठाकृति तु रुच्यते — द; वीरकाकृति — ध.

[7] जगतीश्चैव — द; जगतिकं चैव — ध.

[8] मूर्मुदाकम्पकर्णकम्—द; कुमुदकंपकण्टकम्—ध.

[9] कम्पपट्टी — द; कम्पपट्टित ऊर्ध्वं स्या० — ध.

[10] पादमेवं — द; पादमेव — ध.

[11] स्याज्जङ्गांगेतिरुच्यते — द.

[12] वृत्तार्थं 'जगतिरिति' ह्रस्वान्तप्रयोग इति भाति।

[13] कुक्षि तत्कुमुदं — द; कुमुदं कुक्षिरित्याहुयुग्मं गबाहुस्य कंपकम् — ध.

[14] कंडकंडमिति — ध.

[15] ज्ञेयं प्रोक्तमधरोधरः — द; प्रोक्तमधरोदत्तन्तपट्टिका — ध.

[1] महापट्टी मुखं ज्ञेयं घृतवारि [2] शिरः स्मृतम् ।
योगशक्ति[3]र्भवेदेवमित्युक्तं [4] पूर्वसूरिभिः ॥५॥

[5] [स्थानकभोगशक्तिलक्षणं, तन्मानं च]

[6] भोगशक्तिं [7] ततो [8] वक्ष्ये [9] द्विनेत्रां [10] द्विभुजान्विताम् ।
[11] लोहजेन [12] समायुक्तां सर्वाभरण[13]भूषिताम् ॥६॥
[14] आसीनां [15] स्थानकां वापि[16] दक्षिणं [17] सुस्थितं पदम् ।
[18] वामपादः स्थितो वापि [19] दक्षिणं कुञ्चितं भवेत् ॥७॥
[20] वामहस्तः स्थितश्चैव दक्षिणोत्पल[21]मुद्रकः ।
दक्षिणे भङ्गमानं स्यात्सर्वाभरणभूषितम् ॥८॥
[22] मध्यमदशतालेन [23] मानोन्मानप्रमाणकम् ।

---

[1] पटिका महापट्टिका ज्ञेयं — द; महापट्टिमुखज्ञेयं — ध.

[2] शिरस्तिताम् — ध.

[3] ०र्भवेद्देवीमित्युक्तं — द; ०भवेद्देवं इत्युक्तं — ध.

[4] पृष्टभाषितम् — ध.

[5] 'मूललिङ्गसमीपे तु वामभागेऽर्धमण्टपे ।
आसीना स्थानका प्रोक्ता द्विविधा भोगशक्तिका ॥
द्व्यक्षा च द्विभुजा शान्ता सरत्नमकुटोज्ज्वला ।
वामे भुजं निवेश्याथ आसनोपरि विन्यसेत् ॥
लम्बितं वामपादं तु सव्याङ्घ्रौ कुञ्चितं पदम् ।
सव्ये कटकहस्तः स्यादथवोत्पलधारिणी ॥
सर्वावयवसंपूर्णा सर्वलक्षणसंयुता ।'
'गौर्याश्च लक्षणं वक्ष्ये द्विभुजा च द्विनेत्रका ।
किरीटमकुटोपेता स्तनौ पीनौ सुयौवना ॥
कटकं सव्यहस्ते च लम्बहस्तं तु वामके ।
किंचिद्वामाङ्घ्रि दायस्थ [मालम्ब्य ?] पद्मपीठोपरिस्थिता ॥
सर्वावयवसंपूर्णा गौरीलक्षणमुच्यते ।
द्विरूपा मूलबेरस्य भोगशक्तिरिहोच्यते ॥'
(**उत्तरकारणे** ८४.३–६ पू०; ७–९); एतद्विषये पुनः **अजिते** ३६.२९५–३०१ श्लोका द्रष्टव्याः ।

[6] भोगशक्ति — द, ध.

[7] तथा — द.

[8] वक्षे — द.

[9] द्विनेत्रं — द, ध.

[10] द्विभुजं तु वा — द; द्विभुजान्वितम् — ध.

[11] मोहञ्जेत् नैव कर्तव्यं सर्वा० — ध.

[12] समायुक्तं — द.

[13] ०भूषितम् — द, ध.

[14] आसनं — द, ध.

[15] स्थानकं चैव — द; स्तानकं चैव — ध.

[16] अत्र 'मूर्तिं कुर्यात्' इति पदद्वयमध्याहृत्य व्याख्येयम् ।

[17] स्वास्कं — द; स्थितं — ध.

[18] वामपादस्थितं — द; वामपादस्तितं — ध.

[19] अत्र यदि वामपादः स्थितः, तदा दक्षिणं पदं कुञ्चितं भवेदिति व्याख्येयम् ।

[20] अष्टमः श्लोकः 'ध' मातृकायामेव दृश्यते ।; वामहस्तस्तितं चैव — ध.

[21] ०मुद्रतम् — ध; दक्षिणः उत्पलमुद्रकः—दक्षिण उत्पलमुद्रकः; ततः संधिरार्षः ।

[22] मध्यमं दशतालेन — द, ध; मध्यमदशतालविधिविषये **अजिते** ३६.११० उ०–१३९ पू० श्लोकास्तदीयटिप्पण्यश्च द्रष्टव्याः ।

[23] मानामानप्रमाणकम् — द; मानोन्मानप्रमाणविषये **अजिते** ३६.४१–४४ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[1] पूजांशसदृशं [2] मानं मध्यमं [3] प्रविधीयते ॥९॥
तदर्धमधमं; श्रेष्ठं [4] द्विगुणं प्रविधीयते।
तदन्तरे चाष्टभागे[5] [6] नवधा शक्तिमानकम् ॥१०॥
[7] नाहतारं तथा चैव [8] स्थूलदेशे [9] विधीयते।

[10] [नतमानम्]

[11] आभङ्गं समभङ्गं वा [12] अतिभङ्गमिति त्रिधा ॥११॥
[13] क्रमेण नतमानं स्यादग्निवेदेषु [14] भागकम्।
[15] अष्टादश च [16] विंशं च चतुर्विंशाङ्गुलं त्रिधा ॥१२॥
आभङ्गादित्रिभङ्गानां पादाङ्गुष्ठान्तरं त्रिधा।
त्रिवेदपञ्चमात्रं स्यात्पार्श्वान्तरमुदाहृतम् ॥१३॥

[17] [आभङ्गम्]

[18] ललाटवामपार्श्वे स्यात्त्वानेत्रान्तं पुटान्तकम्।

---

[1] 'द' मातृकायां 'पूजांशसदृशं मानं मध्यमं' इत्यत्र 'पूजांशं समधामानं' इत्येतावन्मात्रं दृश्यते।
[2] 'ध' मातृकायां 'मानं' इत्यस्य स्थाने 'तन्मानं' इति दृश्यते।
[3] प्रविशिष्यते — द.
[4] 'द' मातृकायां 'द्विगुणं' इत्यत्र 'प्राधान्यं' इति दश्यते।
[5] दन्तरेष्टमष्टभागे तु — ध.
[6] नवशक्तिप्रमाणकम् — द.
[7] 'द' मातृकायां 'नाहतारं' इत्येतत्स्थाने 'पूजांशं नाहतारं' इति दृश्यते।
[8] स्थूलातेशे — द; स्तूलमेवं — ध.
[9] प्रविधीयते — ध.
[10] 'आभङ्गं समभङ्गं वा कल्पयेदतिसुन्दरम्।
दक्षिणं सुस्थितं पादं वामपादं तु कुञ्चितम्।
आभङ्गे तु गुणांशं तु वेदांशं समभङ्गके। ततमानं समाख्यातम्'
(**अंशुमत्कश्यपे** ५६.५२ उ०–५४ पू०);
'आभङ्गं समभङ्गं वा अतिभङ्गमिति स्मृतम्।
त्रिवेदशरमात्रं च क्रमेण नतमानकम् ॥'
(**चित्रसारमते** टि. ६७०. पृ० ९८)
[11] आभङ्गसमभङ्गं वा — द; आभङ्गं वाप्यतिभङ्गं वा — ध.
[12] समभङ्गविधीयते — ध.
[13] 'ध' मातृकायां १२–१६ श्लोका न दृश्यन्ते।
[14] ०भागिकम् — द.
[15] अष्टादशाच्च — द.
[16] विंशच्च — द
[17] 'सूत्रं वक्ष्ये यथाक्रमम्।
ललाटमध्याद्वामे तु नेत्रान्ते च पुटान्तके ॥
हनोर्वामे समालम्ब्यं स्तनयोरन्तरे तथा।
नाभेर्दक्षिणपार्श्वे तु वामोरुदक्षिणं स्पृशेत् ॥
अवामचरणे पार्ष्णिवामपार्श्वे तु लम्बयेत्।
पादाङ्गुष्ठद्वयोश्चैवाप्यन्तरं षोडशाङ्गुलम् ॥
तत्त्रिभागैकभागं तु पार्ष्ण्यन्तरमुदाहृतम्।
एवमाभङ्गमाख्यातम्'
(**अंशुमत्काश्यपे** ५६.५४–५७);
'अभयं वरदं पूर्वं कटकं तु परं भुजम्।
मूर्ध्नि मध्ये च तत्प्रोक्तं वामनासापुटान्तकम् ॥
हन्वन्त वामपार्श्वे तु हिक्कायां दक्षिणे भवेत्।
दक्षिणस्तनवामे तु नाभेर्वामे द्वियङ्गुलम् ॥
कुञ्चितस्योरुसव्ये तु स्थितपादस्य गुल्फके।

[१]हनोर्वामे च हृद्वामे [२]नाभेर्दक्षिणपार्श्वके ॥१४॥
वामोरु[३]पार्श्वे वामाङ्घ्रौ पार्ष्णिपार्श्वे प्रलम्बयेत् ।
एतदाभङ्गमित्युक्तम्'

[४][समभङ्गम्]

'समभङ्गं विधीयते ॥१५॥
मुखं पूर्ववदेवोक्तं भ्रूमध्ये नाभिमध्यमे ।
वामोरुमध्यमे पार्श्वे [५]दक्षिणाङ्घ्रौ तु गुल्फके ॥१६॥
[६]तत्सूत्राद्वामपार्श्वे तु हिक्कामध्यं तथाङ्गुलम् ।
तदर्धं हृदये सव्ये द्व्यङ्गुलं नाभिमध्यमे ॥१७॥
तत्सूत्राद्दक्षिणे योनि[७]मध्यमेकाङ्गुलं भवेत् ।
सार्धमात्राङ्गुलं जङ्घा[८]मानमत्र विधीयते ॥१८॥
[९]लम्बितं समभङ्गं [१०]स्याद्'

[११][अतिभङ्गम्]

'अतिभङ्गं विधीयते ।
[१२]मुखं पूर्ववदित्येवं [१३]हृदये [१४]दक्षपार्श्वके ॥१९॥

---

लम्बिताभङ्गमेवं च ब्रह्मसूत्रं प्रसारयेत् ॥'
(**चित्रसारमते** टि. ६७०. पृ० ९८)

[१८] ललाटं वाम० — द.

[१] अतो वामे — द.

[२] नाभिर्दक्षिण० — द.

[३] ०पार्श्ववामाङ्घ्रिपाणिपार्श्वे — द.

[४] 'समभङ्गमथ शृणु ।
ललाटमध्ये नासाग्रे पादपार्ष्ण्योश्च मध्यमे ॥
प्रसार्य ब्रह्मसूत्रं तु द्व्यन्तरं तु प्रमीयते ।
तत्सूत्रात्स्तनयोर्मध्यं दक्षिणे तु गुणाङ्गुलम् ॥
तत्सूत्राद् वामतो (दक्षिणे) नाभिनीव्रं द्व्यङ्गुलकं भवेत् ।
तत्सूत्राद् वामतो (दक्षिणे) योनिमूलमध्यं युगाङ्गुलम् ॥
तत्सूत्राद् दक्षिणे जानुनीव्रं गुणाङ्गुलं भवेत् ।
शेषं पूर्ववदुद्दिष्टं गौरीलक्षणमेव हि ॥'
(**अंशुमत्काश्यपे** ५६.५७ उ०–६१ पू०);
'ललाटनासिकामध्ये पार्ष्ण्योर्मध्ये प्रलम्बयेत् ।
तत्सूत्राद्वामपार्श्वे तु अंशकं मध्यमात्रकम् ॥
सूत्राद्वामस्तनमध्यं मध्याङ्गुलमुदाहृतम् ।
तत्सूत्राद्दक्षिणे नाभौ त्र्यङ्गुलं वा विधीयते ॥
तत्सूत्राद्दक्षिणे योनिमध्ये तु चतुरङ्गुलम् ।
तत्सूत्राद्वामजान्वन्तं त्र्यङ्गुलं समभङ्गके ॥'
(**चित्रसारमते** टि. ६७०. पृ० ९८)

[५] दक्षिणाङ्घ्री तु — द.

[६] 'द' मातृकायां १७, १८ श्लोकद्वयं न दृश्यते ।; तत्सूत्रा वाम० — ध.

[७] ०मध्यममेका० — ध.

[८] ०मानमात्रं — ध.

[९] लम्बयेत्समभागं — द; लम्बितसम० — ध.

[१०] स्यात्तिथिभागं — द; स्यादधिभङ्गं — ध.

[११] 'आभङ्गवन्मुखे सूत्रं स्तनं वह्न्यङ्गुलं भवेत् ।
त्र्यङ्गुलं नाभिमध्यं च योनिमध्य शराङ्गुलम् ॥
जानुमध्यं गुणाङ्गुलं स्थितपादस्य मध्यमं ।
अतिभङ्गं प्रलम्ब्यं स्याद्'
(**चित्रसारमते** टि. ६७०.पृ० ९८)

[1] दक्षिणे स्तन[2] मध्ये स्यात्सूत्राद्वामे शिवाङ्गुलम्।
[3] द्व्यङ्गुलं नाभि[4] वामोरु[5] मध्ये पार्ष्ण्यन्तरे तथा ॥२०॥
एवं [6] सूत्रत्रयं प्रोक्तम्'

[7] [आसीनभोगशक्तिलक्षणम्]

'[8] आसीनं तु [9] प्रवक्ष्यते।
[10] आसीने वाम[11] हस्तस्तु [12] वेद्यूर्ध्वे [13] सुस्थितो भवेत् ॥२१॥
[14] वरदो वा तथा दिव्यं [15] कटकं दक्षिणाङ्कके।
[16] दक्षिणेऽभयहस्तं वा वरदं वामहस्तके[17] ॥२२॥
[18] लम्बितं वामपादं तु सव्य[19] पादोर्ध्वजानुके[20]।
करण्डमकुटोपेतं केशबन्धमथापि वा ॥
प्रसन्नवदनोपेतं सर्वकामार्थसिद्धिदम् ॥२३॥
[21] श्यामा [22] द्विनेत्रा [23] द्विभुजा [24] त्रिभङ्गी
सव्यापसव्यस्थित[25] कुञ्चिताङ्घ्रिः।

---

[12] मुख स्याद् भङ्गवद्योनि हृदये — ध.
[13] हृस्ये — द.
[14] दक्षिणपार्श्वके — ध.
[1] 'द' मातृकायामिदमर्धं न दृश्यते।
[2] ०मध्य स्यात् सूत्र द्वामे — ध.
[3] नाभिपार्श्वे तु वामोरु० — द.
[4] ०वोमोरु० — ध.
[5] ०मध्यमे हारमेव हि—द; मध्यपार्ष्ण्यन्तरं—ध.
[6] सुत्रत्रयं — द; सूत्रद्विविधं — ध.
[7] 'द्विनेत्रा द्विभुजा श्यामा गौरी दक्षकरोत्पला।
करण्डमकुटोपेता सर्वाभरणभूषिता ॥'
(**पूर्वकारणे** ९०.२); एतद्विषये पुनः **अजिते** ३६.२९५–३०१ श्लोका द्रष्टव्याः।
[8] आसनं — द, ध.
[9] प्रवक्षते — द.
[10] आसने — द, ध.
[11] ०हस्तं तु — द, ध.
[12] वेदोर्ध्वे — द; चिठाद्वे — ध.
[13] स्वस्तिकं — द; स्वस्तितं — ध.
[14] 'ध' मातृकायां २२ तमश्लोकस्य स्थानेऽधोलिखितवत् — 'कटकं दक्षिणे हस्ते वरदं वामहस्तके।' इत्येकमेवार्धं दृश्यते।; वरद वा – द.
[15] 'द' मातृकायां 'कटकं दक्षिणाङ्कके' इत्यत्र 'कटकाङ्के तु कटकम्' इति दृश्यते।
[16] 'द' मातृकायां २२ उत्तरार्धस्य स्थाने 'तेक्षिणी अस्तं वा वरदं वाम हा पा...' इत्यनन्वित-तया पाठो दृश्यते। २२ तमश्लोकपाठो मातृकाद्वयमप्यनुसृत्य यथाकथंचिदर्थानुगुण्येन साधितः।
[17] 'द' मातृकायां २२ श्लोकस्योत्तरार्धानन्तरं 'प्रसन्नवदनोपेतं सर्वकामार्थसिद्धिदम्'। इत्येकमर्धमधिकतया दृश्यते।
[18] कमलालम्बितं वामसव्य० — द.
[19] ०पादोर्थजानुकम् — द.
[20] ०जानुकम् — ध.
[21] 'श्यामा द्विनेत्रा द्विभुजा त्रिभङ्गी
सव्यापसव्यस्थितकुञ्चिताङ्घ्रिः।
सव्योत्पला [सत्कटका] स्तनोच्चा
हस्तावलम्बा परमेश्वरी सा ॥'
(**पूर्वकारणे** ९०.३); श्यामां — द.
[22] द्विनेत्री — द; द्विनेत्रां — ध.
[23] द्विभुजां — द, ध.

**[1] सव्योत्पला सत्कटका [2] स्तनोच्चा**
**[3] हस्तान्यलम्बा परमेश्वरी [4] सा ॥२४॥**
**[5] भोगस्यासीनमाख्यातं**

[6] [वीरशक्तिः, तन्मानं च]

**वीर [7] शक्तिमथ शृणु ।**
**[8] चतुर्भुजं त्रिनेत्रं च जटामकुटमण्डितम् ॥२५॥**

---

[24] त्रिभङ्गीं — द, ध.

[25] ०कुञ्चिताङ्घ्रीम् — द; ०कुञ्चिताङ्घ्रिम् — ध.

[1] सव्योत्फलानां कटकहस्तयुक्तं — ध.

[2] स्तनोश्च — द.

[3] महस्तमलम्ब्य — द.

[4] च — द; चा — ध.

[5] गोशक्तेव्याख्यातं — द; भोगस्वासनमाख्यातं — ध.

[6] 'देव्या मानं त्रिधा प्रोक्तं शिवलिङ्गानुरूपतः ।
पूजांशसदृशं वाथ द्विगुणं त्रिगुणं तु वा ॥
चतुष्पञ्चगुणं वापि पूजांशोच्चत्रिपादकम् ।
अर्धं तदन्तरेऽष्टांशे नवमानं च वा भवेत् ॥
पूजांशोच्चं चतुर्विंशच्छतं वाथ विभज्य च ।
भ्रूदृग्घ्राणास्यकर्णान्तं बाहुकक्षस्तनान्तकम् ॥
लिङ्गमानवशाद्देवीमानं निष्कलसंज्ञके ।
प्रतिमामानतस्तस्या मानमेवं समीरितम् ॥
स्वयंप्रधाना देवी चेत् स्वधामादिप्रमाणजा ।
तच्च पूर्ववदेव स्यादथ मानाङ्गुलेन वा ॥
मात्राङ्गुले गृहार्चायां यवैर्वा परिकल्पयेत् ।
ततश्चेयं प्रकर्तव्या देवी प्रोक्तप्रमाणतः ॥
चतुर्भुजा त्रिणेत्रा च सुप्रसन्नैकवक्त्रका ।
दुकूलवसना देवी करण्डमकुटान्विता ॥
वरदाभयसंयुक्तां पाशाङ्कुशकरान्विता ।
द्विभुजा वा द्विनेत्रा वा प्रलम्बितकरान्विता ॥
पद्महस्तातिशान्ता च सा देवी कनकप्रभा ।
शुकोत्पलकरा वापि शूलपाशकरापि वा ॥
यथेष्टास्त्रापि वा शङ्खचक्रहस्ता तु षड्भुजा ।
दंष्ट्राकरालवदना पञ्चास्या दशदोर्युता ॥
देवोक्तास्त्रासना वापि देवालिङ्गनतत्परा ।
देवोरुसंस्थिता वापि स्थानकासनसंयुता ॥
प्रलम्बवामपादा वा लम्बितापरपादिका ।
देवेन सहिता वापि केवला वा प्रकीर्तिता ॥
श्यामा श्वेताथवा रक्ता साधकेच्छानुरूपतः ।
ऋज्वाकारयुता वापि द्विभङ्गसहिताथवा ॥
नासाग्राल्लम्बयेत्सूत्रं दक्षिणस्थितपात्तले ।
गुल्फमध्ये स्थितं सूत्रं शिवसूत्रमिति स्मृतम् ॥
तत्सूत्राद्वामभागस्थस्तनमध्यं गुणाङ्गुलम् ।
तत्सूत्रं नाभिमध्यं यदेकाङ्गुलमिति स्मृतम् ॥
सूत्रयोरन्तरं वेदमात्रमित्यभिधीयते ।
जानुसूत्रान्तरं प्रोक्तं गुणाङ्गुलमिति द्विजाः ॥
द्वयोरङ्गुष्ठयोर्मध्यं सार्धविश्वाङ्गुलं मतम् ।
तत्त्रिभागैकभागं तु पार्ष्ण्योरन्तरकं स्मृतम् ॥
कटकाग्रस्य चोत्सेधः स्तनाक्षस्य समो भवेत् ।
नाभेस्तु मणिबन्धः स्यात्सार्धविश्वाङ्गुलो द्विजाः ॥
पार्श्वमध्यमबाह्वोश्च मध्यमं पर्वताङ्गुलम् ।
प्रलम्बितकरस्याग्रादूर्वग्रं तु द्विमात्रकम् ॥
जानोस्तु मणिबन्धाच्च मध्यमं चतुरङ्गुलम् ।
पार्श्वमध्यमबाह्वोश्च मध्यमं तु षडङ्गुलम् ॥
दृष्टान्तमात्रमेतत्स्यात् सूत्रे तु नियमो न हि ।
स्वतन्त्रे द्विविधं देव्या मानं शास्त्रे प्रचोदितम् ॥
मूलदेव्याः प्रमाणं तु पूर्वमुक्तं द्विजोत्तमाः ।
उत्सवाद्यङ्गदेवीनां मानं यन्मूलबेरजम् ॥
लिङ्गमानवशात्प्रोक्तं मूलदेवीवशात्तथा ।
अङ्गेषु मानं संग्राह्यं जानूरूसममेव वा ॥

**द्विनेत्रं द्विभुजं वापि [1]स्थानकासनसंयुतम्।**
**[2]स्थानकं समपादं स्या[3]द्वैशाखस्थानमेव वा ॥२६॥**
**सुखासनं [4]च कर्तव्यं [5]पर्यङ्कासनमेव वा।**
**[6]मध्यमदशतालेन [7]मानोन्मानप्रमाणकम् ॥२७॥**
**[8]स्वप्रमाणेन कर्तव्यं [9]परिवारसमावृतम्।**
**[10]दैविके तु पदे [11]स्थाप्यमथवा मानुषांशके ॥२८॥**
**[12]एकाश्रित[13]ममानुष्ये [14]अनाश्रिते च विक्रमः।**

---

एवं देवी प्रकर्तव्या तस्याः संज्ञा द्विधा मता।
मनोन्मनीति गौरीति लक्ष्मभेदस्तु नानयोः॥
मूर्तिः सादाशिवी यत्र कल्प्यते तत्र कल्प्यताम्।
तदा मनोन्मनीसंज्ञां लभते विप्रसत्तमाः॥
नृत्तमूर्त्यादिभेदेषु गौर्याद्याख्यां समश्नुते।
कृत्वा सलक्षणां देवीं मन्त्रैः संस्थापयेत्ततः॥'
(**उत्तरकामिके** ४४.३०–५५)

[a] ०शक्तिरथवरम् — द; ०शक्तिमयं शृणु — ध.

[b] 'बिम्बम्' इति नपुंसकपदमध्याहृत्य चतुर्भुजादिविशेषणपदेष्वन्वयं कृत्वा व्याख्येयमिति भाति।

[1] स्थानकासनमुदाहृतम् — ध.

[2] स्थानकं पद्मासनं स्याद् — ध.

[3] ०द्वैशाखं स्थान० — द; वैशाखस्थानम् —
'तालास्त्रयोऽर्धतालश्च पादयोरन्तरं भवेत्।
तालांस्त्रीनर्धतालांश्च निषण्णोरुं प्रकल्पयेत्॥
त्र्यश्रौ पक्षस्थितौ चैव तत्र पादौ प्रयोजयेत्।
वैशाखस्थानमेतद्धि स्कन्दश्चात्राधिदैवतम्॥'
(**नाटचशास्त्रे** १०.६१ उ०–६३ पू०)

[4] सव्यपादं तु पीठकासन० — ध.

[5] एतद्विषये **मतङ्गपारमेश्वरे** योगपादे २.१५–१७ पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।

[6] मं दशतालेन — द; मध्यमं दशतालेन — ध; मध्यमदशतालविधिविषये **अजिते** ३६.११० उ० –१३९ पू० श्लोकास्तदीयटिप्पण्यश्च द्रष्टव्याः।

[7] मनो मानप्रमाणकम् — द; मानोन्मानप्रमाणविषये **अजिते** ३६.४१–४४ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।

[8] तत्प्रमाणेन — ध.

[9] 'वामाद्याः शक्तयो वापि परिवारे व्यवस्थिताः।
श्रीर्दुर्गा क्ष्मा शशिन्या च गायत्री चाप्युषा तथा॥
संध्या सरस्वतीत्येताः स्थाप्या वा मुनिपुङ्गवाः।
प्रज्ञा मेधा श्रुतिश्चैव स्मृतिः स्वाहा वषट् च वै॥
धृतिर्मतिश्च पूर्वादिक्रमाद्देव्यः प्रकीर्तिताः।
अथवा ज्येष्ठयोपेताः सप्त मातर ईरिताः॥
देहली पेषणी चुल्ली खण्डनोलूखली तथा।
मुसली मुद्गरी देवी वर्धमानी च वा मताः॥
चतुर्द्विहस्ता इष्टास्त्राः पद्महस्तास्तु वा मताः।
वृषो गणाधिपः स्कन्दो महाशास्ता धनेश्वरः॥
वीरश्च क्षेत्रपालश्च भास्करः पूर्वतो दिशि।
नैर्ऋते वाग्निदेशे वा विघ्नेशं संप्रकल्पयेत्॥
इन्द्रादीन्वा तदस्त्राणि कल्पयेत्पूर्वतो दिशि।
निर्माल्यधारिणीं देवीमशनीमीशगोचरे॥
पूर्वोक्तपरिवारान्वा कल्पयेद्देशिकोत्तमाः।
महापीठे विशेषेण सर्वाश्चाप्सरसः स्थिताः॥'
(**उत्तरकामिके** ४४.२२–२९)

[10] 'गर्भागारे सप्तसप्तांशकेऽशं
मध्ये ब्राह्मं दैविकं चाष्टभागम्।
मानुष्यं तत् षोडशांशं बहिष्ठात्
पैशाचांशं स्याच्चतुर्विंशमंशम्॥
शैवं ब्राह्मे वैष्णवं दैविकांशे
सर्वे देवा मानुषे स्थापनीयाः।
पैशाचांशे मातरश्चासुराद्या
रक्षोगन्धर्वादियक्षाश्च शेषाः॥'
(**मयमते** ३४.६९, ७०); एकहीनं पदे — द.

[11] स्थाप्यामथवा — द; स्थाप्यामधप्रा — ध.

[12] 'ध' मातृकायां २९ पूर्वार्धस्य स्थाने —
'देविकोश्रीतुमानुष्य मानुष श्रीत देविकम्।'
इति दृश्यते।

[13] ०ममानुष्यं — द.

[14] अश्रृते ते च विक्रमम्। — द.

[1]स्थापिते च प्रमाणं च पूर्वलिङ्गस्य मानवत् ॥२९॥
पूजा[2]भागसमं हीनं [3]मध्यमं द्विगुणं [4]भवेत् ।
[5]पूजांशत्रिगुणं [6]श्रेष्ठमन्तरे त्वष्टधा भवेत् ॥३०॥
[7]नवधा शक्तिमानं चेत्त्याज्यांशं वर्ज्य योजयेत् ।
[8]तदुत्सेधाच्छक्तिमानं पादान्तं तु शुभं भवेत्[9] ॥३१॥
[10]आयादिषट्शुभोपेतं [11]योगराशि शुभं भवेत् ।
[12]तदुच्चं देविमानं स्यात् सूत्रं सप्तविधं भवेत् ॥३२॥

[सप्तसूत्रम्]

[13]मध्यमध्यं पुरोमध्यं पृष्ठमध्यं च पार्श्वकम्[14] ।
पद्ममध्यं [15]द्विबाह्वोस्तु[16] सप्त[17]सूत्रमिति स्मृतम् ॥३३॥

[मध्यमध्यम्]

[18]सूत्रं कण्ठस्य मध्ये च वंशदण्डस्य मध्यमे[19] ।
[20]गुल्फमध्येऽक्षयोर्मध्ये [21]मध्यमध्यं विधीयते ॥३४॥

[पुरोमध्यम्]

[22]शिखामणौ मौलिमध्ये [23]मूर्ध्नि ह्युत्सङ्गमध्यमे ।

---

[1] इदमर्धं 'द' मातृकायां न दृश्यते।; स्थापितं च — ध.
[2] भागं समहीनं — द.
[3] मध्यमं तु द्वि — ध.
[4] मतम् — ध.
[5] पूजांशं त्रिगुणं — द; पूजांशे तु गुणं — ध.
[6] श्रेष्ठमत्यमे श्रेष्ठवेष्टधा — द; श्रेष्ठं तदन्तरे त्वष्टधा — ध.
[7] नवधांशं शक्तिमानं त्यजत्यांशवर्ज० — द; नवशक्तिप्रमाणं चेदायाद्यंशेन योजयेत् — ध.
[8] तदुत्सेधावत्याक्ति पादान्तं तं भजेत् — द; ततुत्से पन्धितं मानं शुभमानं तु बुद्धिमान् — ध.
[9] ३१ श्लोकानन्तरं 'पञ्चषडाधिकं भागैकरोहमुक्तं स्याशुभयादीनि संभवम्' इति 'द' मातृकायामधिकं दृश्यते।
[10] आयनीविद्रशुभोपेतं — द; आयादिषट्शुभविषये **अजिते** ३६.३७५–३९० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।
[11] योगराशिगुणं शुभे — द.
[12] तदुच्यं ते विमानं — द; तदुश्चं ते विन्धनं — ध.
[13] मध्यं मध्यं — द; मध्यं मध्यपरे पृष्ठं मध्यं नाभिलपार्श्वयोः — ध.
[14] पार्श्वके — द.
[15] द्विबाहुद्वौ — द.
[16] मध्यमं चैव पार्श्वे तु — ध.
[17] ०सूत्रं विधीयते — द.
[18] मुनीशकण्ठमध्ये च — द; सूत्रखण्डस्य मध्यं च — ध.
[19] वंशकाममममध्यमे — द.
[20] उदरमध्ये — ध.
[21] पृष्ठमध्यं च सूत्रकम् — ध.
[22] शिखामणि — द; शिखामौलिमध्यं तु — ध.
[23] स्यान्मूर्ध्ने हृत्संगमूर्धके — द; मूर्ध्नि हृत्संगमध्यमे — ध.

नासिकाग्रे च हिक्कायां[1] हृदयस्य च मध्यमे[2] ॥३५॥
[3]कुक्षौ नाभौ तथा योनौ [4]पादयोश्च प्रलम्बयेत्।
पार्ष्णिद्वयन्तरमध्ये तु[5] [6]पुरोमध्यं विधीयते ॥३६॥
[7]तस्मात्सर्वप्रयत्नेन सममात्रं विधीयते।
[8]मौल्यग्रमानसूत्रान्तं द्वयन्तरं सप्तमात्रकम् ॥३७॥
मौलिमध्यं च [9]पञ्चार्धं ललाटे [10]कोलकं भवेत्।
[11]हनोर्मध्ये च सूत्रं स्या[12]द्यवकोलकमुच्यते ॥३८॥
[13]सूत्रात्षडङ्गुलं [14]हिक्का ह्युरोमध्यमथाङ्गुलम्।
[15]हृदयात्षट् च पञ्चैव[16]नाभ्यूर्ध्वान्तरमध्यमे[17] ॥३९॥
[18]सूत्रमात्रार्धकं चैव [19]नाभिमध्ये च षडयवम्।
योनिमूलं द्विमात्रं[20] [21]स्यादूरुमध्यं द्विमात्रकम् ॥४०॥
[22]जानुजङ्घा षडङ्गुल्यं [23]जङ्घान्तं वसुमात्रकम्।
[24]नलकं सार्धवस्वंशं [25]सूत्रादङ्गुष्ठपूर्वकम् ॥४१॥
[26]अर्धमात्रसमं चैव पुरःसूत्रं प्रशस्यते।
पुरः[27]सूत्रमिति प्रोक्तं पृष्ठसूत्रमथ शृणु ॥४२॥

---

[1] नासिकाग्रा स्यात्कण्ठस्यात् — द; नासिकाग्रस्य हिक्कायां — ध.
[2] अङ्कौ मध्यममध्यमे — द; हृदयं साममध्यमे — ध.
[3] कुक्षिनाभेः तथा योनिः — द; कुक्षिनाभिस्तथा योनि — ध.
[4] प्रादयोश्च प्र० – द; पादयोचं प्र० – ध.
[5] स्पर्शान्तं श्रोणिनासाग्रं — द.
[6] लम्बयेद् ब्रह्मसूत्रकम् — ध.
[7] इदमर्धं 'ध' मातृकायां न दृश्यते।
[8] इदमर्धं 'द' मातृकायां न दृश्यते।
[9] पञ्चार्थं — द.
[10] कोलकं — 'द्वयङ्गुलं कोलकं ज्ञेयं' **अजिते** ३६.३९ पू०
[11] हते नाकमध्यं च सूत्रं स्याध्यव — द; अनोर्मध्यसूत्रं स्यात्तपकोलक — ध.
[12] यवः — 'भागं स्याच्चतुरङ्गुल्यं यावकं तद्द्वयं भवेत्।' **अजिते** ३६.३९ उ०
[13] 'द' मातृकायां '३९' पूर्वार्धस्थाने 'पदार्थं च हृत्का उरोममध्यं च पार्श्वकोलकम्' इति दृश्यते।
[14] हिक्कया हुरोर्मध्य — ध.
[15] हृदयां षट्पञ्चैव — द.
[16] नाभूर्धान्तरमध्यमे — द.
[17] 'ध' मातृकायामेतदर्धस्थाने 'स्पृशन्तं हृदयान्त स्यात् समं वा नाभिमेव चा' इति दृश्यते।
[18] 'ध' मातृकायामिदमर्धं न दृश्यते।; सूत्रमात्रार्थकं — द.
[19] नाभिमध्यं — द.
[20] मोकती मूलाद्विमात्रं — द; योनिमध्यद्वियङ्गुल्यं — ध.
[21] स्यान्मध्यमूरुसमाक्रमः — द; ऊरुमध्यद्वि — ध.
[22] जङ्घान्ते तु षडङ्गुल्या — द;
[23] जङ्घातं — द.
[24] नलका० — द, ध.
[25] सूत्रादङ्गुल — ध.
[26] 'ध' मातृकायां '४२' पूर्वार्धस्थाने 'द्वियङ्गुलाष्टनीर्गं स्यात् सूत्रात्पूर्वे तु निर्गमम्।' इत्यर्धं दृश्यते।; त्वर्थमात्रसमीपं च — द.
[27] ०सूत्रमिदं प्रोक्तं — ध.

## [पृष्ठसूत्रमथवा पृष्ठमध्यम्]

[१] मौलिमूर्धकृकाटीनां [२] ककुदंशस्य मध्यमे ।
[३] पार्ष्णिमध्ये च सूत्रं स्यात्पृष्ठमध्यं विधीयते ॥४३॥
मध्ये [४] शिखामणेर्मौलिकर्णपाल्यन्तमध्यमे ।
[५] नीव्रं जानोश्च जङ्घाया मध्ये गुल्फस्य मध्यमे ॥४४॥
लम्बितं [६] पार्श्वयोर्मध्ये; [७] वक्त्रबाह्यमथोच्यते ।
[८] पार्श्वे वा पट्टपार्श्वे वा [९] स्तनमण्डलबाह्यके [१०] ॥४५॥
[११] उपमानं प्रवक्ष्यामि [१२] श्रोणिकूर्परपार्श्वके ।
[१३] त्रिवेदपञ्चमात्रं [१४] स्याद्द्वयन्तरं त्रिविधं भवेत् ॥४६॥
[१५] स्यादूरुमूलान्तरमेकमात्रं
[१६] सार्धाङ्गुले [१७] नान्तरमूरुमध्ये ।
जान्वन्तजङ्घा [१८] नलकान्तरं च
[१९] स्यादष्टषड्भागषडङ्गुलेन ॥४७॥
मानसूत्रद्वयं चैव मणि [२०] बन्धावसानकम् ।
अथवा पार्श्वसूत्रं च मणि [२१] बन्धावसानकम् ॥४८॥

---

[१] मौलिमूर्ध्निकाटीनां – द; मौलिमूर्ध्निकृकाटीनां – ध.

[२] कुहंशस्य मध्यमे – द; ककुद्वंशस्य मध्यमे – ध.

[३] वल्लमध्यं च सूत्रं – द; पार्ष्णिमध्यं तु – ध.

[४] शिखामणी मौलिककुबर्हात्तमध्यमे – द; शिखामणिमौधिकं च पाल्यन्तं मध्यमे कृपा – ध.

[५] 'ध' मातृकायामिदमर्धं न दृश्यते ।; श्रीवं जाचोश्च जङ्घानां – द.

[६] पादमर्धं तु – द.

[७] वक्त्रं बाह्य – द; परो बाह्य० – ध.

[८] पार्श्वं च पट्टं चाश्वं – द; पार्श्वं व पट्टपट्टं वा पार्श्वे तु – ध.

[९] स्नानमण्डल० – द; स्थनमण्डल० – ध.

[१०] 'ध' मातृकायां '४५' श्लोकानन्तरं 'मध्ये श्रोण्यं च पार्श्वे तु जङ्घामध्ये तथाङ्गुष्ठबाह्यस्यामातत्र' इत्यधिकं दृश्यते ।

[११] उपायमुपमानं स्यात्प्रवक्ष्यामि – द; उपकनं प्रवक्ष्यामि – ध; 'मानं चैव प्रमाणं च उन्मानं ह्युपमानकम् । परिमाणं लम्बमानं षड्विधं मानमिष्यते । मानं यत्प्रतिमायामं तिर्यङ्मानं प्रमाणकम् । उन्मानं तत्प्रदेशाच्च द्वयन्तरं ह्युपमानकम् । परिमाणं नाहमानं लम्बमानं च सूत्रकम् ।' (**पूर्वकारणे** (११.६४ उ०–६६); एतद्विषये पुनः **अजिते** ३६.४१–४४ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[१२] श्रोणिकर्पूर० – द; श्रोणिकोर्पर० – ध.

[१३] त्रिवेदापञ्च – द, ध.

[१४] स्यादन्तरा – द.

[१५] सार्धं ऊरुस्य मूलान्तरमेक० – ध.

[१६] सार्धङ्गुलानां तममुंतरेरे – द.

[१७] ०नान्तमध्यमध्यरमोरता – ध.

[१८] ०नलकातलान्याञ्च – ध.

[१९] स्यादष्टांशभागे त्रिप्राष्टषड० – ध.

[२०] ०बन्धवेदवसानकम् – ध.

[२१] ०बन्धवसानम् – ध.

द्वयन्तरं [1]वेदभागः स्यात्पञ्चभेदावसानकम्।
करण्डमकुटोपेतं जटामकुट[2]मण्डितम्॥४९॥
पीताम्बरधरं चैव [3]दुकूलाम्बरमेव [4]वा।
[5]नाभ्यधः पञ्चमात्रं [6]स्याद्वयासमानं विधीयते॥५०॥
[7]गुल्फादूर्ध्वे षडङ्गुल्यं वस्त्र[8]पर्यन्तमिष्यते।
अभयं [9]सव्यहस्ते स्यात्स्तनचूचुकसीमकम्॥५१॥
[10]सूत्रात्तु तलमध्ये तु द्वयन्तरं [11]द्वादशाङ्गुलम्।
[12]वरदं वाम[13]हस्ते स्याच्छ्रोण्या ऊर्ध्वे समायुतम्॥५२॥
[14]सूत्रात्तु करमध्यं च त्रयोदशाङ्गुलमिष्यते।
अथवा[15]चोर्ध्वपार्श्वे [16]तु [17]सिंहकर्णमथापि वा॥५३॥
परहस्तद्वये चैव कटकं तु विधीयते।
[18]हिक्कासमं च कटकं कर्तरीमुखमेव वा॥५४॥
[19]बहिः कक्षान्तरे वापि सव्य[20]पार्श्वे जपाक्षकम्[21]।
[22]वामपार्श्वकरे [23]चैव [24]पद्मोत्पलसमन्वितम्[25]॥
बीजापूरं च पद्मं च [26]शङ्खचक्रमथापि वा॥५५॥

[27][मनोन्मनीस्वरूपम्]

श्यामनिभवेदकर[वह्निनयनं स्यात्]
पद्मवरदाभयजपाक्षफलयुक्तम्।

---

[1] वेदभागं स्यात् — द; वेदभागं वा — ध.
[2] ०संयुतम् — ध.
[3] द्विकूलं परमेव च — ध.
[4] च — द.
[5] नास्याथ पञ्च० — द; नाभ्याधापञ्च० — ध.
[6] स्याद्वयासनाम — द; स्यादिविसानं — ध.
[7] गुल्फमूर्ध्वे — द; गुल्पमध्ये — ध.
[8] ०पश्चान्तमिष्यते — ध.
[9] सव्यहस्तं स्यात्स्थानचूचुक — द; सव्यहस्तान्तस्तनसूचिक० — ध.
[10] सूत्रात्तलह्याममध्य तु — द; सूत्रान्तरस्य मध्ये तु — ध.
[11] त्रयोदशाङ्गुलम् — द.
[12] 'ध' मातृकायां '५२' उत्तरार्धस्थाने 'वामहस्तस्यदनसंबितम्' इत्येतावन्मात्रमेव दृश्यते।
[13] ०हस्तं स्याच्छ्रोणीदूर्वासमायुतम् — द.
[14] सूत्रद्वयन्तरहस्तं च — द.
[15] चोरुपार्श्वे — ध.
[16] वा — द.
[17] 'द' मातृकायां '५३' चतुर्थपादस्य स्थाने '५४' श्लोकस्य प्रथमपादस्थाने च 'वामोरुद्वयं अद्वयं चैव' इत्येतावन्मात्रमेव दृश्यते।
[18] जत्रो हिक्क्ली समं चैव कटकं कर्तरीदम् — द.
[19] न हि रक्ष्यन्तरं वापि — द;
[20] ०पार्श्वजपाक्षकैः — द.
[21] बहिपा विसस्य पार्श्वे च वामके — ध.
[22] वामं च करैवैव — द.
[23] रोप — ध.
[24] पद्मेन वा उत्पलेन वा समन्वितम् इत्यर्थोऽत्र व्याख्येय इति भाति। 'पद्मं वोत्पलमन्वितम्' इति वात्र पाठो भवितव्यः।
[25] ०समायुतम् — ध.

पीतवसनान्वितजटामकुटयुक्तं
[1]श्वेतकमलासनमनोन्मनिस्वरूपम्[2]॥५६॥

[कामकोष्ठस्थापनयोग्यस्थानम्]

[3]इच्छामयी ज्ञानमयी क्रिया च
सान्तर्लिङ्गे चालयान्तर्गते[4] स्यात्।
बाह्ये [5]शालादिग्विदिक्ष्विष्टदेशे
तत्तन्मध्ये स्थापयेत्कामकोष्ठम्[6]॥५७॥

[7]इति रौरवे क्रियापादे कामकोष्ठविधिः
पञ्चषष्टितमः पटलः।

---

[26] शङ्खं चक्रं धरोर्मिव — द; शंखचक्रधरोऽपि वा — ध.

[27] 'कुन्दनिभवेदकरवह्निनयनं स्यात्
पङ्कजवराभयकरोत्पलचतुष्कम्।
अङ्गहिमभूषणविचित्रनयनं स्यात्
तुङ्गमकुटोज्ज्वलमनोन्मनिस्वरूपम्॥'
(पूर्वकारणे ९०.१०);
'वेणुनिभवेदकरवह्निनयनं स्यात्
पद्मवरदाभयजपाक्षवलययुक्तम्।
पीतवसनाम्बरजटामकुटयुक्तं
श्वेतकमलासनमनोन्मनिस्वरूपम्॥'
(टि. ६७०. पृ० ३८४)

[1] पद्मकमलासन० — ध.

[2] 'द' मातृकायामयं श्लोको न दृश्यते।

[3] 'ध' मातृकायामयं श्लोको न दृश्यते।; शक्ति यम ज्ञानशक्तियमक्रियाशक्ति यम च — द.

[4] ०र्गतो — द.

[5] साला — द.

[6] ०कोष्ठः — द.

[7] पद्मसंहितायां रौरवभेदे कामकोष्ठविधिपटलः— द; पद्मसंहिते कामकोष्ठलक्षणं समाप्तम्। सप्तमोऽध्यायः — ध.

# अनुबन्धः

## [1]शौचाचमनस्नानादिमन्त्रोद्धारार्चनाविधिसंग्रहः

[शौचे]

[2]यावद्भावस्य संशुद्धिस्तावच्छौचं समाचरेत्।

[दन्तधावने]

अस्त्रेणाचमनं कुर्यात्प्रक्षाल्य दक्षहस्तकम्॥
प्लक्षोदुम्बरनिम्बानां चूतजम्ब्वोश्च[3] शृङ्गकम्॥१॥
द्वादशाङ्गुलदीर्घं च कनिष्ठाङ्गुलिनाहकम्।
तद्दन्तधावनार्थाय [4]गृहीत्वा दक्षिणे करे॥२॥
तेन [5]दन्तान्प्रमृज्याथ जिह्वां [6]संमृज्य बुद्धिमान्।
अष्टाङ्गुलप्रमाणेन मुक्तिकामी प्रकल्पयेत्॥३॥
[7]द्वादशधास्यशुद्धिं च पश्चादाचमनं कुरु।

[आचमने[8]]

गोकर्णाकृतिहस्तेन माषमग्नजलं [9]गृहेत्॥४॥

---

[1] अयं पटलः आर्. इ. ३९७७२ इत्यङ्किते तालपत्रकोशे ३९–४७ पत्रेषु दृश्यते।

[2] 'यावद्भावस्य संशुद्धिस्तावच्छौचं समाचरेत्।
न विना भावसंशुद्धिं सम्यक्शुद्धिरितीरिता॥
प्रविश्य कूलदेशं तु पादौ हस्तौ विशोधयेत्।'
'दक्षिणाङ्घ्रिं स्थले क्षिप्य वामपादं जले न्यसेत्।
पाणिं गोकर्णवत्कृत्वा माषमग्नं जलं पिबेत्॥
द्वितीयं च तृतीयं च पिबेदम्बु यथाविधि।
दन्तानां शोधनं पश्चान्मनुष्याणां विशेषतः॥
समच्छेदं दृढं शुद्धं सार्द्रं सत्वगपर्वकम्।
कनिष्ठनाहसंयुक्तं दन्तकाठस्य लक्षणम्॥
अष्टाङ्गुलं नैष्ठिकानां भौतिकानां दशाङ्गुलम्।
शिरीषचिरिबिल्वोत्थकरञ्जखदिरार्जुनैः॥
नैष्ठिकानामिति प्रोक्तं भौतिकानां विधीयते।
आम्रापामार्गखदिरप्लक्षचम्पकसंभवैः॥'
'वारिभी रविसंख्यातैर्गण्डूषैरास्यशोधनम्'
(**अचिन्त्यविश्वसादाख्ये** ९.१७, १८पू०; १९-२३; २५पू०);
एतस्मिन्विषये पुनः **अजिते** १९.२२उ०–२६पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः।

[3] ०जम्ब्वोश्च — न.

[4] ग्रषित्वा — न.

[5] दन्तं — न.

[6] समाज्य — न.

[7] द्वादशम् आस्यशुद्धेन — न.

[8] 'प्राङ्मुखो वाथ पादौ च हस्तौ प्रक्षाल्य तन्मुखम्।
वामपादं जले स्थित्वा स्थले दक्षिणपादकम्॥
जानुमध्यकरो भूत्वा हस्ते गोकर्णवत्कृते।
माषमग्नजलं ग्राह्य निर्दोषं त्रिःपिबेद् बुधः॥
आस्यं द्विः प्रमृजेदस्त्रात्सकृन्मृज्य मुखं शनैः।

[1] तन्न्यूनमधिकं पीत्वा सुरापानसमं भवेत् ।
[2] उपस्पृशेच्च प्रत्यङ्गमस्त्रमन्त्रं समुच्चरन् ॥५॥

[3] [कौपीनधारणे]

षट्त्रिंशदङ्गुलायामं विस्तारं तु [4] तदर्धकम् ।
कौपीनं धारयेद्विद्वान्प्राङ्मुखो वाप्युदङ्मुखः ॥६॥

[5] [वारुणस्नाने विधिस्नानविषये]

[6] उत्तरे मृदमादाय पञ्चब्रह्मेण[7] शुद्धिताम्[8] ।
मूलमन्त्रं समुच्चार्य [9] कलामन्त्रं [10] प्रविस्तरम् ॥७॥
[11] पञ्चब्रह्म षडङ्गं च [12] सूक्ष्मपञ्चाक्षरं [13] जपेत् ।

---

पादावभ्युक्ष्य मूर्धानमङ्गुष्ठानामिकेन तु ॥
चक्षुषी संस्पृशेद्विद्वान् तर्जन्यङ्गुष्ठकेन तु ।
नासिद्वारपुटौ स्पृष्ट्वा कनिष्ठाङ्गुष्ठकेन तु ॥
श्रोत्रौ स्पृष्ट्वा जलोपेतं मध्याङ्गुष्ठेन बाहुकौ ।
नाभिमङ्गुष्ठकेनैव सर्वाङ्गुल्यग्रपिण्डितम् ॥
हृत्प्रदेशं तु संस्पृश्य सर्वाङ्गुल्यग्रमूर्धनि ।
ऋग्यजुःसामवेदानां त्रिः पानं तृप्तिरिष्यते ॥
(**पूर्वकारणे** २९.२३–२८);
एतद्विषये पुनः **अजिते** १९.४६–५४ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[1] ग्रहेत् — न.

[1] तन्नाममधिकं — न;
'तन्न्यूनमधिकं पीत्वा सुरापानसमं भवेत्'
(**सकलागमसारसंग्रहे** पृ. ७.)

[2] एवं स्पृश्याथ — न.

[3] कौपीनलक्षणम् —
'कौपीनलक्षणं चापि हस्तं वापि द्विहस्तकम् ।
आयाममेवं विस्तारं दशाङ्गुलमथाष्टकम् ॥
कौपीनमेवमुक्तं तु कार्पासाद्यादिना भवेत् ।'
(**अचिन्त्यविश्वसादाख्ये** ६.११७ उ०, ११८)

[4] ददर्धकम् — न.

[5] एतद्विषये **अजिते** १९.३७ उ०–४५ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः । तथा **मतङ्गपारमेश्वरे** क्रियापादे २ १० उ०–१९ श्लोकाः, **सार्धत्रिशतिकालोत्तरे** ३.२–७पू० श्लोकास्तदीया वृत्तिश्च द्रष्टव्याः ।

[6] उत्तरे मृतमादाय — न; अत्र 'स्थितां' इति पदमध्याहृत्य व्याख्येयम् इति भाति ।

[7] 'पञ्चब्रह्मणा' इत्यत्र 'पञ्चब्रह्मेण' इति प्रयोगो **रौरवे** क्रियापादे ४६.१०८ उत्तरार्धे दृश्यते ।

[8] शुद्धिदम् — न; शुद्धिरस्याः संजाता शुद्धिता 'तदस्य संजातं तारकादिभ्य इतच्' (पा० सू० ५.२.३६) इति इतच्प्रत्ययः । तारकादिराकृतिगणः ।

[9] 'कलामन्त्रं ततः शृणु ।
सद्यः कलाभिरष्टाभिर्वामदेवस्त्रयोदश ॥
अघोरस्य कलाष्टाभिश्चतुर्भिश्चैव वक्त्रकम् ।
ईशानं पञ्चधा भित्त्वा कल्पयेत्तु विचक्षणः ॥
अष्टत्रिंशत्कला ह्येवं कलाब्रह्म तु कथ्यते ।'
(**सुप्रभेदे** क्रियापादे ३.६२–६४पू०)

[10] प्रस्तरम् — न.

[11] 'मूर्ध्ना वदनहृद्गुह्यपादाः पञ्चाङ्गसंस्थिताः ।
हृच्छिरःशिखाकवचनेत्रास्त्राणि षडङ्गकाः ॥'
(**रौरवोत्तरे** ९.२२)

[12] 'सूक्ष्मपञ्चाक्षरम् – शिवाय नमः ।'
(**मन्त्रसंग्रहे** पृ० ३);

[13] भवेत् — न.

[1] पञ्चास्त्रेण तु संकल्प्य जले मृदं तु योजयेत् ॥८॥

[2] [शिवतीर्थे]

मत्स्यमण्डूक[3]सर्पाद्यैरन्यैश्च जलजातिभिः[4] ।
क्रमुकफल[5]मात्रं तु मृदं दिक्षु विनिक्षिपेत् ॥९॥
मूलमन्त्रं शतं [6]जप्त्वाभिमन्त्र्य जलमध्यगः ।
शिवतीर्थमिदं कृत्वा जले [7]मग्नस्त्रिभेदकम् ॥१०॥
हृदये तु शिवं चिन्त्य मूलमन्त्रं समुच्चरेत् ।

[8] [भस्मोत्पादनाय गोमयग्रहणे]

प्रपञ्चसृष्टिकाले तु पञ्चवर्णकगौर्भवेत्[10] ॥११॥

---

[1] पञ्चास्त्रम् —
'अस्त्रभेदमथ शृणु ॥
शिवास्त्रं क्षुरिकास्त्रं च तथा पाशुपतास्त्रकम् ।
व्योमास्त्रं चैव घोरास्त्रम् अस्त्रं पञ्चविधं भवेत् ॥
षडक्षरं शिवास्त्रं स्यात्क्षुरिका त्वष्टवर्णकम् ।
पाशुपतं तु पञ्चार्णं व्योमास्त्रं तु दशार्णकम् ।
चत्वारिंशदघोरास्त्रमेवं पञ्चास्त्रमुच्यते ॥'
(**वातुलशुद्धे** ८.१०३ उ०–१०६ पू०);
पञ्चास्त्रं तु सकल्पेन — न.

[2] 'मत्स्यमण्डूकसर्पाद्यैरन्यैश्च जलजन्तुभिः ।
सेवितं तु जलं नित्यं तस्माद्दुष्टं विशेषतः ॥
तद्दोषशमनार्थं तु शिवतीर्थं प्रकल्पयेत् ।
हस्तमात्रप्रमाणेन परितश्चतुरश्रकम् ॥'
(**सुप्रभेदे** क्रियापादे ५.१२ उ०–१४ पू०)

[3] सर्पाणामन्यैश्च जलजातिनाम् — न.

[4] अत्र 'दूषिते सति' इत्यध्याहृत्य व्याख्येयम् ।

[5] मृदं मात्रेण — न.

[6] जप्त्वा हि मन्त्रि जल० — न.

[7] मग्नं तु भेदकम् — न; 'त्रिभेदकम्' इत्यस्य त्रिवारकमित्यर्थो व्याख्येय इति भाति । क्रियाविशेषणमेतत् ।

[8] समुच्चरन् — न.

[9] 'गावः शिवपुरात्पञ्च क्षितिं प्राप्ताः शिवेच्छया ।
सुरासुरैर्मथ्यमानात्क्षीरोदात्सागरोत्तमात् ॥
पञ्च गावः समुत्पन्नाः सर्वलोकस्य मातरः ।
नन्दा सुभद्रा सुरभिः सुशीला सुमनास्तथा ॥
कपिला कृष्णा श्वेता च धूम्रा रक्ता तथैव च ।
नन्दादिसुमनोऽन्तानां वर्ण एष प्रकीर्तितः ॥
सर्वलोकोपकारार्थं देवानां तर्पणाय च ।
गोमातरः स्थिता भूमौ स्नानार्थं हि शिवस्य तु ॥
गोमयं रोचना मूत्रं क्षीरं दधि घृतं गवाम् ।
षडङ्गानि पवित्राणि सर्वसिद्धिकराणि हि ॥
गोभिर्यज्ञाः प्रवर्तन्ते गोषु देवाः प्रतिष्ठिताः ।
गोभिर्वेदाः समुद्गीर्णाः सषडङ्गपदक्रमाः ॥
शृङ्गमूले गवां नित्यं ब्रह्मविष्णू च संस्थितौ ।
शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च ॥
शिरोमध्ये त्वहं वत्स भूतैः परिवृतः सदा ।
ललाटे संस्थितो वत्स तव भ्राता विशेषतः ॥
कम्बलाश्वतरौ नागौ नासापुटसमाश्रितौ ।
कर्णयोरश्विनीदेवौ चक्षुषी शशिभास्करौ ॥
दन्तेषु मरुतो देवा जिह्वायां वरुणः स्थितः ।
सरस्वती तु हुंकारे यमयक्षौ च गण्डयोः ॥
सन्ध्याद्वयं तथोष्ठौ हि ग्रीवे चन्द्रः समाश्रितः ।
खुरमध्येषु गन्धर्वाः खुराग्रेषु च पन्नगाः ॥
खुराणां पश्चिमाग्रेषु गणा ह्यप्सरसां तथा ।
रुद्राश्चैव तु नाडिस्था वायवः सर्वसन्धिषु ॥

सप्तसागरमध्ये तु भूलोकं तु प्रवेशिता[1]।
[2]तस्याश्चतुर्षु पादेषु धर्मरूपं [3]तदा भवेत् ॥१२॥
रोमाग्रे [4]ऋषयः प्रोक्ताः कर्णे [5]चाथ सरस्वती।
चन्द्रादित्यौ चक्षुषी च[6] नासिका [7]इन्द्र एव च ॥१३॥
दन्ते रुद्र इति ज्ञेयो[8] जिह्वायामथ विष्णुकः[9]।
[10]अधरं ब्रह्मदैवत्यं [11]स्कन्दो दक्षिणशृङ्गके[12] ॥१४॥
[13]विघ्नेशो वामशृङ्गे तु ललाटे चेश्वरो[14] भवेत्।
[15]मूर्ध्नि सदाशिवश्चैव [16]पुच्छाग्रे सप्ततीर्थकम् ॥१५॥
इत्थं गावः [17]समालोक्यास्तासां तु गोमयं गृहेत्।

[18][गोमयदाहेन भस्मोत्पादने]

देवालयाग्निना[दाहो गोमयानां] विशेषतः ॥१६॥
[19]प्रमादादृभैः प्रज्वाल्य तत्फलं तु विनश्यति।
केतकीपुष्पदामं च कर्पूरं च विमिश्रयेत् ॥१७॥

---

श्रोणीतटस्थाः पितरो ह्युरसि स्त उमारमे।
क्षीरपाने गवां नित्यं कामो लाङ्गलमाश्रितः ॥
आदित्यरश्मयो वाला गोमूत्रे जाह्नवी स्वयम्।
ऋषयश्च तथा सर्वे रोमाग्रेषु च संस्थिताः ॥
उदरे पृथिवी जाता जन्तवश्च गजानन।
चत्वारः सागराः पूर्णा गवां ये च पयोधराः ॥
कथितं विश्वविघ्नेश यथा गोषु प्रतिष्ठितम्।
'इत्थं गवां समालोच्य भस्मार्थं गोमयं गृहेत्।'
(**सुप्रभेदे** क्रियापादे ६.२ उ०–१७; २५ उ०)

[20] पञ्चवर्णेन गौ भव — न.

[1] प्रवेशकम् — न.

[2] चतु . . . दन्तुपादेषु — न.

[3] तथा — न.

[4] तु ऋषीन् प्रोक्तं — न.

[5] वा तु — न.

[6] चन्द्रादित्य न क्षे च — न.

[7] इन्द्रमेव — न.

[8] ज्ञेयं — न.

[9] जिह्वामर्थ तु विष्णुकम् — न.

[10] अधरे — न.

[11] स्कन्दं — न.

[12] ०शृङ्गकम् — न.

[13] विघ्नेशं वाम शृङ्गं — न.

[14] चेश्वरं — न.

[15] मूर्ध्ने सदाशिवं — न.

[16] पश्चाग्रे — न.

[17] समालोक्य तस्मा तद्गोमयं ग्रहेत् — न.

[18] 'भूमावपतितं ग्राह्यं सद्यमन्त्रेण गोमयम्।
पिण्डानि वाममन्त्रेण ह्यघोरेण तु शोषयेत् ॥
पुरुषेण तु तद्दग्ध्वा ईशानेनाभिमन्त्रयेत्।
केतकीपुष्पसंयुक्तं नवभाण्डेषु निक्षिपेत् ॥
अथवा चाग्निहोत्रेषु भस्म ग्राह्यं विचक्षणैः।'
(**सुप्रभेदे** क्रियापादे ६.२५ उ०–२७);
एतद्विषये पुनः **अजिते** १९.७९–८८ श्लोकास्त-
दीयटिप्पणी च द्रष्टव्याः।

[19] इदमर्धं 'न' मातृकायां ११ श्लोकस्य पूर्वार्धानन्तरं दृश्यते। प्रकरणमनुसृत्यात्र संघटितम्।

[भस्मस्नानविषये]

[1]अनामिकां पूर्वयुक्तां[2] मध्यमां[3] तु ततः परम्।
पश्चात्तर्जनियोगेन[4] नेत्रतारादि[5] कल्पयेत् ॥१८॥
अक्षमात्रप्रमाणं च भस्म चैव जले क्षिपेत्।
[6]षडङ्गमनुसंचिन्त्य दक्षहस्ताभिमन्त्रणम्[7] ॥१९॥
त्रिशद्वारमिदं कृत्वा हृदये शिवचिन्तनम्[8]।
पश्चादाचमनं प्रोक्तं सर्वतन्त्रेषु सर्वदा ॥२०॥
[9]सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम्।
तत्फलं कोटिगुणितं भस्मस्नानाद्दिने[10] दिने ॥२१॥
[11]वामहस्तस्य मध्ये तु भस्म निक्षिप्य शुद्धितम्[12]।
[13]निरीक्षणं प्रोक्षणं च ताडनाभ्युक्षणं तथा ॥२२॥
कलामन्त्रेण शुद्धिं तु[14] फट्कारेण समन्वितम्।
[15]दिग्बन्धनाव[16]कुण्ठनेऽनामिकाग्रेण भस्मना ॥२३॥
ललाटे [17]दर्शयेद्भस्म हुंफडन्तेन चास्त्रतः।
शिला[18]वज्रे ताडनेन तोयमस्त्रं तु योजयेत् ॥२४॥
अस्त्रेण योजनं[19] ........................।

---

[1] 'तर्जन्यनामिकामध्यैस्त्रिपुण्ड्रं तु समाचरेत्।
ब्रह्मा विष्णुश्च रुद्रश्च त्रिपुण्ड्रस्याधिदैवतम् ॥'
(**सुप्रभेदे** क्रियापादे ६.३३)

[2] पूर्वयुक्तेन — न

[3] मध्यमं — न.

[4] ०त्तर्जनीयुक्तेन — न.

[5] नवास्तारादि — न.

[6] षडङ्गैर्मनुसश्चत्य — न.

[7] ०मन्त्रयेत् — न.

[8] शिवशिन्तिदम् — न.

[9] 'सर्वतीर्थेषु यत्स्नानं सर्वयज्ञेषु यत्फलम्।
तत्फलं कोटिगुणितं भस्मस्नानेन सिध्यति ॥'
(**सुप्रभेदे** क्रियापादे ६.३६)

[10] ०स्नानं दिने — न.

[11] 'ततः पाशुपतास्त्रेण नाराचवद्भावितवज्रशिलायां भूमौ दक्षिणेन विप्रुषः क्षिपेत्। हस्तौ प्रक्षाल्य धौतवस्त्रेण संशोध्य भूतिकोशस्थां भूतिं पूर्ववत्संगृह्य तेन मन्त्रेण निरीक्ष्यास्त्रेण प्रोक्ष्य कवचेनावकुण्ठ्य मूलेन संरक्ष्य प्रणवशिवबीजसहितसद्योजातादिपञ्चब्रह्मषडङ्गैर्निवृत्त्यादिकलाभिश्च त्रैवर्णिको मन्त्रयेत्। इतरः पञ्चब्रह्मपदमन्त्रादिभिरभिमन्त्रयेत्।'
(**शैवसंन्यासपद्धतौ** पृ० २५, २६)

[12] शुद्धिदम् — न; शुद्धिरस्य संजातं शुद्धितम् 'तदस्य संजात तारकादिभ्य इतच्' (पा० सू० ५.२.३६) इति इतच्प्रत्ययः। तारकादिराकृतिगणः।

[13] निरीक्षणप्रोक्षणं चैव — न.

[14] शुद्धेन — न.

[15] 'कल्पभस्म च संगृह्य दिग्बन्धं कारयेत्ततः।'
(**अचिन्त्यविश्वसादाख्ये** ९.७९ पू०)

[16] ०कुण्ठेनानामिकाग्रं तु भस्मनि — न.

[17] दर्शनं भस्म — न.

[18] ०वज्रेण ताडेन — न; वर्णाश्रमचन्द्रिकायां २५ पृष्ठे 'शिलावज्रे' इत्यस्य 'वज्रशिलायां' इति निर्देशो दृश्यते।

[19] योजकम् — न.

[1] [संध्योपासनविषये [2] प्राणायामविधौ]

[3] पूरकप्राणायामं च प्रणवाक्षरमुच्चरन् ॥२५॥
जातिनमोन्त [4] शक्तीनामीशीमीश्वरमेव च ।
ध्यायेत्तु प्रणवाध्वानं [5] स्वाधिष्ठानमिति स्मृतम् ॥२६॥
[6] सजातिहुंफडन्तेन उमाशक्तिं तु रुद्रकम् ।
स्वाधिष्ठानाच्च [7] नाडचन्तं [8] प्राणवायुं चरेद्बुधः ॥२७॥
शिवास्त्रं तु समुच्चार्य मार्गे [9] सौषुम्नयात्र तु ।
चित्रनाडचामृतेनैव मूलाग्निं तु [10] सुयोजयेत् ॥२८॥
अमृताप्लावनं चैव सर्वशून्ये परे शिवे [11]।
[12] कुम्भकं त्विति विख्यातं रेचकं तु ततः परम् ॥२९॥
वाम [13] नासीं न बध्नीयान्नानामिकां तु योजयेत् ।
अष्टाङ्गुलप्रमाणेन [14] नाभ्यां वायुं तु संचरेत् ॥३०॥
सरस्वतीं [15] च ब्रह्माणमधिकारे विचिन्तयेत् ।
अङ्गुष्ठमूले संचिन्त्य श्रोत्रवन्दनतो बुधः [16] ॥३१॥
[17] प्रीत्यै सदाशिवस्यैव पूरकं तु तथा भवेत् ।
[18] कुम्भकं चेश्वरस्यैव रेचकं केशवस्य च ॥३२॥

---

[1] 'सकलीकरणं कृत्वा प्राणायामेन संस्थितः ।
त्रिः समावर्तयेन्मन्त्री मनसा शिवसंहिताम् ॥
पूर्ववत्पुनराचम्य विधाय श्रोत्रवन्दनम् ।
कृत्वा कराङ्गविन्यासमेकचित्तो व्यवस्थितः ॥
ब्राह्मीं च वैष्णवीं रौद्रीं रक्तां शुक्लां सितेतराम् ।
प्रातर्मध्याह्नके सायं संध्यां ध्यायेदनुक्रमात् ॥'
(**सोमशम्भुपद्धतौ** १.१.५१–५३); एतद्विषये पुनः **अजिते** १९.३१–३७ पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[2] 'प्राणायामसमायोगात्प्राणायामेति चोच्यते ।
रेचकं पूरकं चैव कुम्भकं तु तृतीयकम् ॥
रेचनाद्रेचकं प्रोक्तं पूरणात्पूरकं तथा ।
कुम्भकं संनिरोधेन प्रणवेनाभ्यसेत्त्रयम् ॥
रेचकं ब्रह्मदैवत्यं पूरकं विष्णुदैवतम् ।
कुम्भकं रुद्रदैवत्यमधिदेवाः प्रकीर्तिताः ॥'
(**कारणे** वासनार्चनविधौ (टि. ३४) पृ० २२१, २२२); एतद्विषये पुनः **मतङ्गपारमेश्वरे** योगपादे २.३०–३५ पू० श्लोकास्तदीयटिप्पणी च द्रष्टव्याः ।

[3] पूरकमयागं च — न.

[4] शक्तिनाशेनवमीश्वर० — न.

[5] धावतुं प्रणवाध्वेन — न.

[6] सजाति — न.

[7] स्वाधिष्ठा चात्र — न.

[8] प्रणवार्यं — न.

[9] सुषुम्नयावतु — न.

[10] संयोजयेत् — न.

[11] ०शून्यपरःशिवम् — न.

[12] कुम्भं त्वितीति — न.

[13] ०नास्येन बन्धेन नामिकायां तु — न.

[14] वाम्ये तद्वायुसं० — न.

[15] शक्तिब्रह्मेण अधिकारं — न.

[16] श्रोत्रबन्धेन तद्बुधा — न.

[17] प्रीति — न.

[18] कुम्भकमीश्वर० — न.

[1]अष्टपालकसंप्रीत्यै श्रोत्र[2]वन्दनमुच्यते।
हस्तद्वयं तु संयोज्य शक्तिमन्त्रं समुच्चरन्॥३३॥
कनिष्ठाङ्गुष्ठयोर्मध्ये [3]अङ्गुलित्रयमूर्ध्वकम्।
नेत्रमन्त्रं समुच्चार्य नेत्रे [4]हस्तेन योजयेत्॥३४॥
'देहन्यासं ततः कृत्वा'.................।

[5][मार्जने अघमर्षणे[6] च]

दक्षहस्तेन [7]संगृह्य तोयं संहारमुद्रया॥३५॥
पूरकं वाम[8]नास्या तु तज्जलं चोष्णकं[9] ततः।
[10]कुम्भकेन सर्वदोषान् कृष्ण[11]वर्णान् विचिन्तयेत्॥३६॥

---

[1] अष्टपालस्य तत्प्रीति — न.
[2] बन्धनमुच्यते — न.
[3] अङ्गुलत्रयमूर्ध्वगम् — न.
[4] मन्त्रेण — न.
[5] 'मार्जनविधि :—
ततः शिवात्मकैर्मन्त्रैः कृत्वा तीर्थं शिवात्मकम्।
मार्जनं संहितामन्त्रैस्तत्तोयेन समाचरेत्॥
वामपाणौ पतत्तोयं योजयन्सव्यपाणिना।
उत्तमाङ्गे क्रमान्मन्त्रैर्मार्जनं समुदाहृतम्॥
अघमर्षः —
नीत्वा तदुपनासाग्रं दक्षपाणिपुटे स्थितम्।
बोधरूपं सित तोयं वामयाकृष्य कुम्भयेत्॥
तत्पापं कज्जलाभासं पिङ्गयारेच्य रिष्टिना।
क्षिपेद्वज्रशिलायां यत्तद्भवेदघमर्षणम्॥'
(**सोमशम्भुपद्धतौ** १.१.६७–७०);
'ततो यथाधिकारं तत्तत्कालोचितां संध्यां ध्यात्वा, तत्प्रभामण्डलमध्यस्थितो दक्षिणहस्तेन वामहस्ते जलं निक्षिप्य, संहितया सकृदभिमन्त्र्य, कुम्भकमुद्रया वौषडन्तेन सकृत्प्रयोगेण शिरसि निक्षिप्य पुनः संहितयाभिमन्त्रितं वारि कुशान्विते वामपाणौ निधाय, दक्षहस्तेन तदधोगलितं जलं मूर्ध्नि संहितया वौषडन्तया निक्षिपेत्। इति मार्जनम्।
तत्पुनरवशिष्टं तोयं दक्षिणकरस्थं धर्मरूपं शुद्धं पूरकवायुना वामनासाप्रविष्टं संचिन्त्य, कुम्भकंयोगेनान्तः पापक्षयं कृत्वा, तत्पापं कज्जलाभं दक्षिणनासापुटेन विनिःसृतं विभाव्य, हुं फडन्तास्त्रेण ज्वलदग्निवर्णवज्रशिलायां सभ्रूक्षेपं क्षिपेत्। सोऽयमघमर्षः।'
(**क्रियाक्रमद्योतिकायां** पृ० ३३, ३४);
'ज्वलदग्निवर्णवज्रशिलायां :— ज्वलन् दीप्यमानः स चासौ अग्निः तस्य वर्णः कान्तिर्यस्याः सा ज्वलदग्निवर्णा सा चासौ वज्रशिला वज्रोपलः तस्यां नैर्ऋतदिग्भागे विभावितवज्रशिलायामित्यर्थः। एवमुवाच श्रीमद्बालज्ञानरत्नावलीटीकाकारः। तथा चाह श्रीमन्मृगेन्द्रपद्धतिव्याख्याकारः "जलं वज्रशिलापृष्ठे क्षिपेत्तदघमर्षणम्, इत्यत्र जलक्षेपो नैर्ऋत्यां दिशि कर्तव्यः" इति'।
(**प्रभाव्याख्यायां** पृ० ३७);
एतस्मिन्विषये पुनः **अजिते** २९, ५५–५९ पृ० श्लोकास्तदीयटिप्पणी च द्रष्टव्या।
[6] मार्जनाघमर्षणयोर्विषयेऽत्र श्लोका विपर्ययेण संगृहीता इति भाति।
[7] संग्राह्य — न.
[8] ०नास्येन — न.
[9] वौषकं — न.
[10] कुम्भकं सर्वदोषेण — न.
[11] ०वर्णेन चिन्तिदम् — न.

[१] आकृष्य पूरकेणैव [२] नासारन्ध्रेण रेचयेत् ।
सव्यहस्ते समादाय [३] शिलावज्रे तु ताडयेत् ॥३७॥
[४] हुंफडन्तं समुच्चार्य दीर्घनादेन योजयेत्[५] ।
वामहस्ते जलं [६] गृह्य दक्षहस्तेन बन्धयेत् ॥३८॥
कुम्भमुद्रया[७] संचिन्त्य पञ्चब्रह्म[८] समुच्चरन् ।
अभिषेकः सर्वदेहे[९] मार्जनं त्विति कीर्तितम् ॥३९॥
दक्षहस्ते जलं [१०] गृह्य वामहस्ते विसर्जयेत् ।
[११] प्रोक्ष्याङ्गुल्या तु तत्तोयं [१२] षडङ्गमन्त्रमुच्चरन् ॥४०॥
सव्यहस्तेन संग्राह्य [१३] शेषतोयं तथैव च ।
दक्षहस्तेन तत्तोयं वामभागे विसर्जयेत् ॥४१॥

[१४] [अर्घ्यदाने]

आदित्यो[१५] द्भवकाले तु बिम्बमध्ये सदाशिवम् ।
पाद्यमाचमनं चार्घ्यं शिवगायत्रिमन्त्रतः ॥४२॥
मूलमन्त्र[१६] शतं जप्त्वा [१७] जपमर्घ्यं तु योजयेत् ।
तत्काले [१८] चार्घ्यं दद्यात्तु ऊर्ध्ववक्त्रे निरोधकम्[१९] ॥४३॥
नित्यं संहारकृत्येन सुमुखं [२०] चोर्ध्ववक्त्रकम् ।

---

[१] आगम्य सर्वकार्येण — न.
[२] नासिकान्दकं रेचकम् — न.
[३] शिललवज्रेन — न; प्रकृतविषये **सोमशम्भुपद्धतौ, क्रियाक्रमद्योतिकायां**, तथा **क्रियादीपिकायां** (पृ० १८) **सिद्धान्तशेखरे** (पृ० १९) च 'वज्रशिलायाम्' इति निर्देशो दृश्यते ।
[४] हुं फडन्तेन उच्चार्य — न.
[५] योजकम् — न.
[६] ग्राह्य — न.
[७] ०मुद्रेण — न.
[८] ०ब्रह्मं — न.
[९] अभिषेकं सर्वदेहं च — न.
[१०] ग्राह्य — न.
[११] प्रोक्षणागुलितत्तोय — न.
[१२] षडङ्गैं मन्त्र — न.
[१३] शेषतोयेन चोच्यते — न.
[१४] 'सव्यहस्ततले नीत्वा शेषितं वारि तत्पुनः ।
कराङ्गन्यासकं कृत्वा रविमण्डलमध्यमे ॥
शिवायार्घ्यं ततः कृत्वा गायत्रीं मनसा जपेत् ।'
'गायत्रीं मनसा ध्यायेत्सर्वपापविकृन्तनीम् ।
ओं तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि ।
तन्नः शिवः प्रचोदयात् ।
त्रिसंध्यं शिवगायत्रीं जपेद्भक्तिसमन्वितः ।
ओं हां शिवायार्घ्यं स्वाहा ।
एवं मन्त्रं जपित्वार्घ्यं दत्त्वा सद्यो विसर्जनम् ।
त्रिःप्रदक्षिणमावर्त्य मूलमन्त्रं जपेद्बुधः ।'
(**अचिन्त्यविश्वसादाख्ये** ९.१७७ उ०, १७८; १८३, १८४)
[१५] ०द्भव तत्काले — न.
[१६] दशं — न.
[१७] जल्पमर्घ्यं — न.
[१८] चार्घ्यदत्तेन — न.
[१९] ०वक्त्रं निरोधकम् — न.
[२०] चमूवक्त्रकम् — न.

सर्वपापहरं तेन शिवप्रीतिकरं भवेत् ॥४४॥
तत्काले [1]नार्घ्यं दत्तं चेत्सर्वपापोद्भवस्तथा[2] ।
पञ्च[3]पातकमार्गेण [4]कुर्वाणो नरकं व्रजेत् ॥४५॥

[5][तर्पणविधौ]

पञ्चब्रह्मषडङ्गैश्च मूलमन्त्रेण तर्पयेत् ।
गौरी विघ्नेशस्कन्दौ च [6]प्रीतिं मेधां तु तर्पयेत् ॥४६॥
स्वगुरुं क्षेत्रपालं च सर्वदेवांस्तु[7] तर्पयेत् ।
उषा[8]प्रत्युषे चार्केण[9]राहुकेतू च तर्पयेत् ॥४७॥
मन्त्रदेवऋषींश्चैव [10]अङ्गुल्यग्रेण तर्पयेत् ।
पितृदेवपितॄंश्चैव सव्याङ्गुष्ठेन तर्पयेत् ॥४८॥
मानुषे मातृवर्गे वा वामाङ्गुष्ठेन तर्पयेत् ॥
[11]नरान्ब्रह्मऋषींश्चैवाङ्गुलिमध्येन तर्पयेत् ॥४९॥
पश्चादाचमनं कृत्वा [12]तत्तन्मन्त्रं समुच्चरेत् ।

[13][प्रदक्षिणविधौ]

[14]पशुः पशुपतेरग्रे दण्डवत्पतितो भुवि ॥५०॥

---

[1] नार्घ्यदत्ते चेत् — न.

[2] ०द्भवं तथा — न.

[3] ०पादक — न.

[4] कुर्वाणान् — न.

[5] 'देवानृषीन् पितॄंश्चैव वामाघोरकसद्यकैः ।
कनिष्ठाङ्गुष्ठमूलाभ्यां देवांस्तर्प्योदपुष्पयुक् ।
अङ्गुल्यग्रेण हस्ताभ्यां मुनींस्तर्प्य कुशैस्तथा ॥
कनिष्ठाङ्गुष्ठमूलाभ्यां मनुष्याणां तथैव च ॥
यज्ञं कृत्वापसव्यं तु जलैस्तु तिलमिश्रकैः ।
दक्षिणाङ्गुष्ठतर्जन्योर्मूलेनैव पितॄनपि ॥
प्रत्येकमेकविंशद्भिः संख्याभिस्तर्पयेद्गुरुम् ।
आचम्य पुनराचम्य पुष्पहस्तो विशेद्गृहम् ॥'
(**पूर्वकारणे** २९.४१–४४);

एतद्विषये पुनः **अजिते** १९.५९–७५ श्लोकास्तदीयटिप्पणी च द्रष्टव्याः । तथा **मतङ्गपारमेश्वरे** क्रियापादे २.२०–२२ पू० श्लोकास्तदीयवृत्तिः, **सार्धत्रिशतिकालोत्तरे** ३.९ पू० तदीयवृत्तिश्च द्रष्टव्याः ।

[6] प्रीतिमेधां — न.

[7] ०देवास्तु — न.

[8] ०प्रत्युषार्केण — न.

[9] राहुकेत्रे च — न.

[10] अङ्गुलाग्रैणमर्पयेत् — न.

[11] नराश्च ब्रह्मराश्चैव अङ्गुलामध्य तर्पयेत् — न.

[12] तन्मन्त्रेण समुच्चरत् — न.

[13] 'एकं विनायके कुर्यात्त्रीणि वै शंकरस्य च ।
तुर्यं प्रदक्षिणं प्रोक्तं शक्तीनां च समाचरेत् ॥
विष्णोश्चैव तु चत्वारि भद्रकाल्यष्टमेव च ।
षट्संख्यं षण्मुखे चैव द्वयं सूर्ये प्रदक्षिणम् ॥
शास्तुश्च पञ्चसंख्यं च क्षेत्रपाले तथैव च ।
दुर्गायाश्चाष्टसंख्यं च शक्तिपीठे तथैव च ॥'
(**अंशुमदागमे** टि. ७४५ पृ० ४०, ४१);
'पद्भ्यां प्रदक्षिणं न्यासस्तनौ भक्तिभरानतः ।
शास्तृविघ्नेशयोरेकं द्वे सौरे त्रीणि शंकरे ॥
चत्वारि वैष्णवे कुर्यात्पञ्च दौर्गे ततः क्रमात् ।
स्कान्दे हराच्युते षट्कं सप्ताश्वत्थप्रदक्षिणम् ॥'
(**लक्षणसंहिता** १०.१४८ उ०–१५०)

स्तोत्र[1]नृत्तेन संयुक्तं [2]नमस्कारप्रदक्षिणम्।
एकप्रदक्षिणं पित्रोर्द्वयं शास्तुः प्रियं भवेत्॥५१॥
विघ्नेशस्य [3]त्रये प्रीतिश्चतुष्के सूर्यकस्य तु।
शिवयोः [4]पञ्चके प्रीतिष्षट्कं वै गुह एव च॥५२॥
सप्तप्रदक्षिणं कुर्यात्केशवस्य [5]मुदे भवेत्।
अष्टप्रदक्षिणं कृत्वा रुद्रलोकं प्रवेशयेत्[6]॥५३॥
नवप्रदक्षिणं कृत्वा [7]सादाशिवं प्रवेशयेत्।
[8]दशप्रदक्षिणं कृत्वा [9]सालोकं तु प्रवेशयेत्[10]॥५४॥
सव्यापसव्यमार्गेण शिवप्रीतिकरं भवेत्।
[11]अङ्गप्रदक्षिणं कृत्वा सायुज्यं तु [12]प्रवेशयेत्॥५५॥
[13]एकदण्डनमस्कारो ह्येकं चापि प्रदक्षिणम्।
एकहस्तनमस्कारो[14] हन्ति पुण्यं पुरातनम्॥५६॥

[15][सव्यापसव्यप्रदक्षिणम्]

शंभोः प्रदक्षिणं कुर्यात्सोमसूत्रं न लङ्घयेत्।
सव्यापसव्यमार्गेण प्रदक्षिणमथाचरेत्॥५७॥

---

[16] पशु — न;
'पशुः पशुपतेरग्रे दण्डवत्पतितो भुवि।
पतन्ति पातकाः सर्वे नोत्तिष्ठन्ति पुनः सह॥'
(**अंशुमदागमे** टि. ७४५ पृ० ४२);

[1] नृत्तं तु संयोज्य — न.

[2] नमस्कारं प्र० — न.

[3] त्रयं प्रीतिश्चतुर्थं सूर्यं — न.

[4] पञ्चमं प्रीतः षष्ठं वै गुहमेव — न.

[5] मुदं — न.

[6] 'प्रवेशयेत्' इति स्वार्थे णिजन्तः। प्रविशेदित्यर्थः।

[7] सदाशिवं तु प्रवेशकम् — न.

[8] दशमप्रदक्षिणं — न.

[9] 'कुरुते पञ्चनवतिः सामीप्यं शाश्वतं परम्।
संख्या च सप्तनवतिः सालोकं चैव कारयेत्॥
एकोनशतसंख्या च सारूप्यं च समाचरेत्।
एकाधिकशतं कृत्वा शिवसायुज्यमाप्नुयात्॥'
(**अंशुमदागमे** (टि.७४५) पृ० ३८)

[10] प्रवेशकम् — न.

[11] 'अङ्गप्रदक्षिणं कुर्वन् कृत्वा भूमौ निजां तनुम्।
दण्डवद्बाहुयुग्मेन सह बध्वा कृताञ्जलिः॥
कृत्वा दण्डनमस्कारं शिवाग्रे तु सकृन्नरः।
प्रदक्षिणमथो कुर्यादेकं वा त्रयमेव वा॥
पञ्च वा सप्त वा चैव सर्वपापनिवृत्तये॥
उत्थाय प्रणतिं भूयो भूयः कृत्वा समापयेत्।
प्रदक्षिणसहस्रं स्यादेकमेवं प्रदक्षिणम्॥'
(**सकलागमसारसंग्रहे** पृ० २२७)

[12] प्रवेशकम् — न.

[13] एकदा नमस्कारमेकं — न;
'एकदण्डनमस्कारमेकं चापि प्रदक्षिणम्।
एकहस्तनमस्कारं हन्ति पुण्यं पुरातनम्॥'
(**अंशुमदागमे** टि. ७४५ पृ० ३९)

[14] नमस्कारं — न.

[15] 'प्रदक्षिणप्रकारस्य लक्षणं शृणु सुव्रत।
सव्यं चैवापसव्यं च तथा सव्यापसव्यकम्॥
सव्यं प्रदक्षिणं प्रोक्तमपसव्याप्रदक्षिणम्।
सव्यापसव्यतः सोमसूत्रालङ्घनतः कृतम्॥
प्रासादस्य तु विस्तारं तन्मानं सोमसूत्रकम्।

[1]लङ्घने चैकमेकं स्यादलङ्घ्यादयुतं भवेत्।
[2]वृषस्य वृषणं स्पृष्ट्वा नमस्कारं [3]ततो बुधः[4] ॥५८॥
[5]शिवस्य दर्शनं कृत्वा नमस्कारं शृङ्गमध्यगे[6]।

[पुष्पविषये]

पुष्पाञ्जलिकृतार्थं तु [7]वनस्थानप्रवेशनम् ॥५९॥
उत्तमं [8]स्वार्जितं पुष्पं मध्यमं [9]वनपुष्पकम्।
[10]अधमं देवालयस्थं तु पुष्पं [11]पुण्यविनाशनम् ॥६०॥
तस्मात्तु स्वार्जितं पुष्पं[12] [13]द्रव्यात्तं[न] तथोत्तमम्।

[मन्त्रोद्धारे पञ्चब्रह्मषडङ्गविषये]

[14]नादाक्षरस्य संघेषु [15]नपुंसकविवर्जिता[:] ॥६१॥
नपुंसका ऋकारौ तु लृकारानुस्वारयुक्तकौ[16]।
पञ्चाक्षरं विवर्ज्याथ शेषमेकादशाक्षरम्[17] ॥६२॥
[18]पञ्चब्रह्मषडङ्गं च बीजमुख्यमथोच्यते।

---

लिङ्गमूलस्य पार्श्वे तु योजयेत्सौम्यदेशके ॥
यावत्सूत्रान्तमेवं स्याद्वर्जयेत्तु प्रदक्षिणम्।
शंभोः प्रदक्षिणं कुर्यात्सोमसूत्रं न लङ्घयेत् ॥
लङ्घनादेकमेकं स्यादलङ्घ्यमयुतत्रयम्।'
'वृषं चण्डं वृषं चैव सोमसूत्रं पुनर्वृषम्।
चण्डं च सोमसूत्रं च पुनश्चण्डं पुनर्वृषम् ॥
एवं सव्यापसव्यं तु प्रदक्षिणमिहोदितम्।'
(**सकलागमसारसंग्रहे** पृ० २२५, २२६)

[1] लङ्घनं चैवमेकं स्यादलङ्घ्यमयुतं — न;
'लङ्घने त्वेकमेकं स्यादलङ्घ्यादयुतं भवेत्।
शिवप्रदक्षिणं कुर्याद्यत्र देवालयद्वयम्।
न लङ्घयेत्सोमसूत्रं यत्र साक्षाच्छिवः स्वयम्।'
(**लक्षणसंहितायां** १०.१५१ उ०, १५२)

[2] 'वृषस्य वृषणं स्पृष्ट्वा ईश्वरस्यावलोकनम्।
शृङ्गमध्ये शिवं दृष्ट्वा पुनर्जन्म न विद्यते ॥'
(**लक्षणसंहितायां** १०.१५३)

[3] तु तद्बुधः — न.

[4] अत्र 'कुर्यात्' इति शेषः।

[5] शिवलिङ्गदर्शनं — न.

[6] ०मध्यगम् — न; अत्र 'कुर्यात्' इति शेषः।

[7] वनस्थाने प्रवेशकम् — न.

[8] स्वार्चितं — न.

[9] 'आत्मारामोद्भवैः पुष्पैरथवा वनसंभवैः।
द्रव्यक्रीतैः प्रसूनाद्यैरर्चयेदन्यथा न च ॥'
(**पूर्वकामिके** ५.६५)

[10] मधं देवालये पुष्पं तत्पुष्पं — न.

[11] पुण्यनाशनम् — न.

[12] अत्र 'उत्तमम्' इति शेषः।

[13] द्रव्यत्तं — न; द्रव्यात्तं—द्रव्यसंपादितमित्यर्थः।
द्रव्यसंपादितमधममित्यत्र प्रमाणम् —
'अधमं विक्रयं चैव याचितं निष्फलं भवेत्।'
(**सकलागमसारसंग्रहे** पृ० १४३)

[14] नदाक्षरस्य — न.

[15] ऋ, ॠ, लृ, ॡ च चत्वारो नपुंसका इति स्मृताः।'
(**वातुलशुद्धे** २.२६)

[16] नपुंसकऋकारौ तु लृकारोऽनुस्वारयुक्तकम् — न.

[17] दशाक्षरे – न.

[18] पञ्चब्रह्मषडङ्गमन्त्रोद्धारो व्याख्यानार्ह इति भाति।

[1] [बीजमुख्यमन्त्रविषये]

[2] षड्वर्गात्पञ्चमं चैव प्रथमेऽष्टममक्षरम्[3] ॥६३॥
साग्निबीजमनुस्वारं प्रथमं बीजमुच्यते।
तृतीयाच्च तृतीयं च आदौ चैवाष्टमाक्षरम् ॥६४॥
यान्तमारूढमत्रापि[4] सानुस्वारं द्वितीयकम्।
षष्ठमं चाष्टमे [5] वर्गे आदौ चैवाष्टमाक्षरम् ॥६५॥
यान्तं [6] बिन्दुसमायुक्तं तृतीयं बीजमुच्यते।
बीजमुख्यमिदं प्रोक्तं क्षुरिकास्त्रमथ शृणु ॥६६॥

[7] [क्षुरिकास्त्रविषये]

तृतीये प्रथमं चैव तृतीयस्वरसंयुतम्।
प्रथमं बीजमित्युक्तं तृतीये च द्वितीयकम् ॥६७॥
अष्टवर्गादिमं चैव तृतीयस्वरसंयुतम्।
द्विती[यं] बीजमेवं स्याद्द्वितीये च द्वितीयकम् ॥६८॥
तृतीयस्वरसंयुक्तं तृतीयं बीजमुच्यते।
क्षुरीबीजद्वयं चाद्ये दिक्षु कृद्वर्णमन्तिके ॥६९॥
अष्टाक्षरसमायुक्तं क्षुरिकामन्त्रसंज्ञकम्।

[अष्टाक्षरदशाक्षरविषये]

दलानामग्रपूर्वादि ओं शिवाय नमो नमः ॥७०॥
अष्टाक्षरमिदं मन्त्रं [8] दशाक्षरमतः शृणु[9]।

[आत्मार्थपरार्थयजनाधिकारिविषये]

वेदशास्त्रेषु निपुणः [10] शास्त्रज्ञश्चापरिग्रहः ॥७१॥

---

[1] 'ह्रं सृं क्षृं बीजमुख्यास्तु'
(पूर्वकारणे २.३५ उ०)

[2] षड्ग्यात्पञ्चमं — न.

[3] ०माक्षरम् — न.

[4] ०मात्रापि — न.

[5] वाग्रे — न.

[6] बिन्नसमा — न.

[7] क्षुरिकामन्त्रविषये रौरवे क्रियापादे १.१५ उ०, १६ पू० श्लोकस्तदीयटिप्पणी च द्रष्टव्ये।

[8] 'प्रणवः प्रथमं प्रोक्तं आ ई ऊ तदनन्तरम्।
व्योमव्यापिन् चतुर्थं च तदूर्ध्वं प्रणवं भवेत् ॥
अस्मिस्तन्त्रे विशेषेण दशाक्षरमिति स्मृतम्।'
(पूर्वकारणे २.३२ उ०, ३३)

[9] इतः परं पटलान्तं विद्यमानो भागः 'ज' मातृकास्थनित्यपूजाविधौ प्रायेण दृश्यते। तत्रैवैतद्विषयकसाजात्यस्य प्रदर्शितत्वादत्र पुनर्न लिख्यते।

[10] शास्त्रज्ञश्च परि — न.

तन्त्रज्ञो मतिमान् प्राज्ञो दृढभक्तिर्दृढव्रतः।
आदिशैव इति प्रोक्तः स शिवब्राह्मणो गुरुः ॥७२॥
तेषु वै [1]भौतिकेष्वेव योग्यं संस्थापनार्चनम्।
भौतिकश्च सपत्नीको नैष्ठिकश्च विपत्निकः ॥७३॥
शैवे तु [2]भौतिकः श्रेष्ठस्तदभावे तु नैष्ठिकः।
लिङ्गस्थापनयोग्यत्वात्स्थापको भौतिकः स्मृतः ॥७४॥
अर्चनं चाग्निकार्यं च नित्योत्सवमहोत्सवम्।
स्नपनं बलिदानं च [3]नैष्ठिकेष्वपि योग्यकम् ॥७५॥
[4]शैवादन्यच्च बौद्धाख्यं यावत्स नैष्ठिकश्चरेत्।
शैवान्यत् [5]पाञ्चरात्रं च बौद्ध[6]मार्हतकं तथा ॥७६॥
[7]गोवत्समयसंभेदः क्षीरवच्छिव उच्यते[8]।

[करन्यासे]

गृहस्थः सृष्टिमार्गेण [9]ब्रह्मचारी स्थितिक्रमात्[10] ॥७७॥
वानप्रस्थयतीनां च संहारन्यास उच्यते[11]।
ईशानादीनि सद्यान्तमङ्गुष्ठादिक्रमेण तु ॥७८॥
[12]कनिष्ठान्तं न्यसेद्धीमान्सृष्टिन्यास उदाहृतः[13]।
मध्यमादि[14]तर्जन्यन्तं स्थितिन्यास उदाहृतः[15] ॥७९॥
[16]कनिष्ठाद्यङ्गुष्ठान्तं तु सद्यादीनि क्रमान्न्यसेत्।
संहारन्यास एवोक्तः[17] शिवे तु परमात्मनि[18] ॥८०॥
अङ्गुलीष्वङ्गुष्ठतो न्यस्य तर्जन्याङ्गुष्ठके न्यसेत्।
हृदयाद्यस्त्र[19]पर्यन्तं मध्यमादि तु विन्यसेत् ॥८१॥
तलयोर्विन्यसेन्नेत्रमस्त्रं[20]तर्जनि विन्यसेत्।

---

[1] भौतिकैरेवं — न.
[2] भौतिकं — न.
[3] नैष्ठिकैरपि — न.
[4] शैवादन्ये च बौद्धाख्ये — न.
[5] पञ्चरात्रं — न.
[6] ०मार्हतस्तथा — न.
[7] गोवत्समसंभेदं — न.
[8] ०च्छिवमुच्यते — न.
[9] ब्रह्मचारि — न.
[10] ०क्रमम् — न.
[11] ०न्यासमुच्यते — न.
[12] अङ्गुष्ठादीन्यसे० — न.
[13] ०न्यासमुदाहृतम् — न.
[14] तर्जनीन्तं — न.
[15] ०न्यासमुदाहृतम् — न.
[16] कनिष्ठाद्यङ्गु० — न.
[17] ०न्यासमेवोक्तं — न.
[18] शिवेन परमात्मना — न.
[19] ०पर्यन्तमध्यमादीनि — न.
[20] अत्र 'तर्जन्यां विन्यसेत्' इति भाव्यम्।

शिवमन्त्रं न्यसेद्धीमान्करशाखासु पर्वसु ॥८२॥
कर[1]न्यासस्त्वयं प्रोक्तो ह्यङ्गन्यासमथ शृणु ।

[अङ्गन्यासे]

मूर्धादिपादपर्यन्तं सृष्टिन्यास उदाहृतः[2] ॥८३॥
[3]हृदादिपादपर्यन्तं स्थितिन्यास उदाहृतः[4] ।
[5]पादादिमूर्धपर्यन्तं संहारन्यास उच्यते[6] ॥८४॥
एवं न्यासत्रयं कृत्वा स्थावरे जङ्गमे बुधः ।
स्थावरं लिङ्गमित्याहुर्जङ्गमं तस्य पूजकः[7] ॥८५॥

[अन्तर्यागे]

अन्तर्यागं ततः कुर्यादर्चयेदात्मदैवतम् ।
हृत्पद्मकर्णिकामध्ये ओंकारमयमीश्वरम् ॥८६॥
ध्यानं यजनसहितं सदाकालं यजेद्बुधः ।
चिन्तयेन्मनसा पूर्वं क्रमात्तत्र गुणत्रयम् ॥८७॥
[8]तमः प्रच्छाद्य च ततो रजः सत्त्वेन साधयेत् ।
ध्यायेत्तु मण्डलं पूर्वं धूम्रं [9]रक्तं सितं क्रमात् ॥८८॥
सत्त्वोपरि गुणातीतं पुरुषं पञ्चविंशकम् ।
ऐश्वर्यपङ्कजं नित्यं पुरुषोपरि संस्थितम् ॥८९॥
द्वादशाङ्गुलविस्तीर्णं शुक्लं विकसितं शुभम् ।
नालमष्टाङ्गुलं ज्ञेयं नाभिकन्दसमुद्भवम् ॥९०॥
पद्मपत्राष्टकं ज्ञेयमणिमादिगुणाष्टकम् ॥
कर्णिकाकेसरं ज्ञानं नालं वैराग्यमेव हि ॥९१॥
पार्थिवाण्डमधःकन्दमिति पद्मं विचिन्तयेत् ।
धर्मज्ञानं च वैराग्यमैश्वर्यादिसमन्वितम् ॥९२॥
ध्यात्वा पद्मासनं ह्येवं सर्वपापहरं परम् ।

---

[1] ०न्यासमिद प्रोक्तमङ्ग — न.
[2] ०न्यासमुदाहृतम् — न.
[3] पादादिहृदयपर्यन्तं — न.
[4] ०न्यासमुदाहृतम् — न.
[5] हृदयातिपादपर्यन्तं — न.
[6] ०न्यासमुच्यते — न.
[7] पूजकम् — न.
[8] तमःप्रच्छन्न . . . सा रजः — न.
[9] रक्तसितं — न.

तत्पद्मकर्णिकामध्ये शुद्धदीपवदाकृतिः[१] ॥९३॥
आवृतेषु दलेष्वष्टौ ओं शिवाय नमो नमः ।
इन्द्रादीशानपर्यन्तं न्यसेदष्टाक्षरं क्रमात् ॥९४॥
रुद्ररूपं परं [२]व्यक्तमानन्तमचलप्रभम् ।
युगाङ्गुलप्रमाणेन निवाते निष्कम्पदीपवत् ॥९५॥
अर्चयेदष्टपुष्पैस्तु शिवमोंकाररूपिणम् ।
अहिंसाद्यष्टपुष्पैश्च पूजयेच्छिवमव्ययम् ॥९६॥
सर्वोपचारैर्मनसा ध्यात्वा तं पूजयेच्छिवम् ।
प्राकृतं भावमुत्सृज्य शिवोऽहमिति भावयेत् ॥९७॥

[पूजार्हपत्रविषये]

पत्रजातिषु [३]सर्वासु बिल्वपत्रं विशिष्यते ।
[४]बिल्वस्य पत्राभावे तु तस्य मूलेन पूजयेत् ॥९८॥
पुष्पजातिषु [५]सर्वासु करवीरं विशिष्यते ।
तस्य [६]मध्ये स्थितो देवो लिङ्गपीठप्रकारतः ॥९९॥
तत्पुष्पं हैमपुष्पं च पूजयेद्वत्सरायुतम्[७] ।
निर्माल्यं न भवेत्तत्र इति शास्त्रस्य निश्चयः[८] ॥१००॥
पूजान्ते तु समादाय क्षालयेद्धृदयेन तु
प्रोक्षयेत्पुरुषेणैव पूजयेत्तु पुनः पुनः ॥१०१॥
उत्तमं स्वार्जितं पुष्पं मध्यमं वनपुष्पकम्[९] ।
[१०]अधमं चैव विक्रीतं याचितं निष्फलं भवेत् ॥१०२॥

[घण्टाताडने]

[११]स्नानारम्भे तदन्ते च अर्चनान्ते निवेद्यके ।
होमान्ते चोत्सवान्ते च नृत्तान्ते घोषयेत्क्रमात् ॥१०३॥
[१२]घण्टायास्तु ध्वनिं श्रुत्वा राक्षसानां तु नाशनम् ।

---

[१] ०दाकृतिम् — न.
[२] व्यक्तमनन्त० — न.
[३] सर्वेषु — न.
[४] बिल्वपत्रमभावे — न.
[५] सर्वेषु — न.
[६] मध्यस्थितं देवं — न.
[७] ०द्वत्सरैर्युतम् — न.
[८] निश्चयाः — न.
[९] वनपल्लवम् — न.
[१०] अधमं च क . . चैव — न.
[११] अर्चनारम्भे — न.
[१२] घण्टायां तु — न.

[अर्घ्यादिदानविषये]

द्रव्यालाभे तु तोयं च चन्दनं [1]च कुशैः सह ॥१०४॥
पाद्यादित्रितयं कल्प्य [2]क्लृप्तपात्रेषु बुद्धिमान् ।
आवाहने च पूजान्ते [3]विसर्जनेऽर्घ्यं प्रदापयेत् ॥१०५॥
अर्घ्ये विलेपने स्नाने त्रिषु गन्धं सुयोजयेत् ।
आवाहनार्घ्यपाद्येषु स्नाने धूपे तथोत्सवे ॥१०६॥
नैवेद्ये च [4]विसर्गे च पुष्पमष्टसु योजयेत् ।
[5]तत्कालं च विसृज्याथ [6]सप्तवारि नियोजयेत् ॥१०७॥

[मन्त्रप्रयोगविषये]

[7]उपांशूच्चार्य चार्चेत्तु वाचिकं होमकर्मणि ।
मानसं [8]पूजयेद्यत्तु पुष्पमन्त्रमुदाहृतम् ॥१०८॥
धूपदीपे तु नैवेद्ये होमकाले प्रजापते ।
स्वाहान्तं संप्रयोक्तव्यमभिषेके नमोऽन्तकम् ॥१०९॥

[लिङ्गशुद्धिविषये]

लिङ्गस्य [9]मूर्धदेशे तु पञ्चमेन तु संस्पृशेत् ।
लिङ्गस्य मुखदेशे तु नरमन्त्रेण संस्पृशेत् ॥११०॥
लिङ्ग[10]पार्श्वे तु दक्षे स्यादघोरेण तु संस्पृशेत् ।
लिङ्गस्य वामपार्श्वे तु वामदेवेन संस्पृशेत् ॥१११॥
[11]पृष्ठान्तं संस्पृशेत्पादौ सद्योजातेन मन्त्रतः ।

[पीठशुद्धिविषये]

उन्मनीमूलमन्त्रेण पीठशुद्धिं तु कारयेत् ॥११२॥
महापट्टेरुपानान्तं [12]देव्यङ्गानि च संस्पृशेत् ।

---

[1] कुशया सह — न.
[2] पञ्चवक्त्रेषु — न.
[3] विसर्जने च प्र० — न.
[4] विसर्जाया . . ष्प — न.
[5] तत्कालेन विसर्जायां — न.
[6] सप्तवारं न — न.
[7] उपांशुमुच्चार्य चार्चे तु — न.
[8] पूजयेत यत्तु — न.
[9] मूर्ध्निदेशे — न.
[10] ०पार्श्वे तु बाहुभ्यामघोरे — न.
[11] स्पृष्टान्तं स्पशने पादौ — न.
[12] देव्याङ्गानि — न.

[गुरुपूजायाम्]

शिरोर्ध्वे कल्पयेत्पद्ममष्टपत्रं सकर्णिकम् ॥११३॥
स्वगुरुं पूजयेन्मध्ये तस्य शक्तिसमायुतम्।
तस्माद्गुरुप्रसादेन यजेद् देवं सदाशिवम् ॥११४॥

[आसनकल्पने]

[1]कन्दं हि पार्थिवं तत्त्वं सौवर्णं ब्रह्मदैवतम्।
अशेष[2]धात्रीपर्यन्तं नालाङ्कुरसमन्वितम्॥
आधारशक्तिमध्यस्थमनन्तं शुभमव्ययम् ॥११५॥

कुन्देन्दुवर्णां वरदां त्रिणेत्रां
कोटीर[3]भारामभयां भयघ्नाम्।
पाशाङ्कुशां पङ्कजमध्यसंस्था-
माधारशक्तिम् अभिचिन्त्य मूले ॥११६॥

[4]अनन्तं वासुकिं चैव [5]तक्षकं चाम्बुजं तथा।
महापद्मं शङ्खपालं [6]कार्कोटं गुलिकं तथा ॥११७॥
[7]पूर्वादीशानपर्यन्तं कल्पयेत्कल्पवित्तमः।
[8]सद्यमन्त्रसमा[9]युक्तमानन्तबीजसंयुतम् ॥११८॥
अनन्ताद्यष्टसंयुक्तं तेनानन्तासनं भवेत्।
अधस्तात्कल्पयेदूर्ध्वे सिंहासनं प्रकल्पयेत् ॥११९॥
धर्मादिचरणैर्युक्तमधर्मादीलिकान्वितम्।
पञ्चाननैः [10]प्रकल्प्यं तच्छ्वेतरक्तादिभानकैः ॥१२०॥
वर्णैस्त्रिणेत्रसंयुक्तैश्चरणैरुपशोभितैः।
[11]उमामन्त्रसमायुक्तं [12]जलाध्यक्षाक्षरान्वितम् ॥१२१॥
शुद्धस्फटिकसंकाशं तत्त्वं वै विष्णुदैवतम्।
गुणत्रयेण संछाद्यमेवं सिंहासनं भवेत् ॥१२२॥

---

[1] स्कन्दं — न.
[2] ०धात्रिपर्यन्तं — न.
[3] ०भरामभयाभयग्वना — न.
[4] अनन्तो वासुकिश्चैव — न.
[5] स्तक्षकश्चाम्बुजस्तथा — न.
[6] कार्कोटः कुलिकस्तथा — न.
[7] पूषादीशान० — न.
[8] सद्यमन्त्र० — न.
[9] ०युक्तं यान्तान्तं बीज० — न.
[10] प्रकल्प्यन्ते श्वेतरक्त ... — न.
[11] वामनमन्त्र० — न.
[12] शलमध्यक्षरा० — न.

सिंहासनोपरिष्टात्तु योगासनमिहोच्यते[1]।
भूतरूपेण कोणेषु पादाः कृतयुगादयः ॥१२३॥
[2]श्वेतो रक्तस्तथा पीतः [3]कृष्णः कृतादिवर्णकाः।
अव्यक्तो नियतिः कालः [4]कला चेति चतुष्टयम् ॥१२४॥
महादिक्षु न्यसेत्तस्य मध्यपादस्तु केशवः।
भिन्नाञ्जननिभाः [5]सर्वाः [6]प्रागादिष्वीलिका न्यसेत् ॥१२५॥
[7]मायान्तं रुद्रदैवत्यं [8]घोरमन्त्रसमन्वितम्।
तस्योपरि समुद्भूतं पद्मासनं प्रजापते ॥१२६॥
शुद्धस्फटिकसंकाशं कर्णिकाकेसरैर्युतम्।
इच्छाशक्त्युद्भवं ज्ञेयं सहस्रदलभूषितम् ॥१२७॥
वामादिशक्तिभिर्युक्तं मण्डलत्रयमध्यगम्।
गुणत्रययुतं चात्मतत्त्वत्रयमनोरमम् ॥१२८॥
[9]आकाशतत्त्वं विमलमासनं स्फटिकप्रभम्।
वृत्तं सदाशिवं तत्त्वं व्योमरूपं परात्परम् ॥१२९॥
ईशानमन्त्रसंयुक्तं सर्वतत्त्वालयं प्रभुम्[10]।
अस्मिन्नासनमध्ये तु शिवं परमकारणम् ॥१३०॥
शिवतत्त्वे शिवं ध्यात्वा आवाह्याभ्यर्चनं कुरु।

[लिङ्गपूजायाम्]

[11]आवाहोद्वासनं नास्ति मानुषादन्यलिङ्गके ॥१३१॥
सर्वत्र व्यापिनं देवं परमेशं सदाशिवम्।
अभिमुखीकरणं यत्तु तदावाहनमुच्यते ॥१३२॥
पूजापरि[12]समाप्तौ तु [13]विमुखं तत्प्रकीर्तितम्।
विसर्जनम्; [14]परिवृते पश्चात्पश्चमुखे पृथक् ॥१३३॥
[15]अवाहमुद्रयावाह्य स्थापयेत्तं तु मुद्रया।

---

[1] ०महोच्यते — न.
[2] श्वेतं रक्तं तथा पीतं — न.
[3] कृष्णं कृतादिवर्त्मकम् — न.
[4] कलाश्चेति — न.
[5] सर्वे — न.
[6] प्रागादीक्षीलिका — न.
[7] मातान्तं — न.
[8] अघोर० — न.
[9] आकाशातत्त्वविमल० — न.
[10] तत्त्वालयप्रभुम् — न.
[11] आवाहनोद्वासनं — न.
[12] समाप्ते — न.
[13] विमुखी — न.
[14] परिवाराच्च — न.
[15] आवाहनमुद्रया० — न.

